

# न्यायसूत्रवैदिकवृत्तिः

अर्थात्

श्रीमन्महर्षिगोतमप्रणीतसूत्राणां

वेदानुसारिणी वृत्तिः




श्रीमन्निखिलशास्त्रनिष्णातपण्डित

स्वामिहरिप्रसादेन निर्मिता


सा च

पण्डित-देवदत्त-शर्म्मणा


मुम्बय्यां

निर्णयसागराख्यमुद्रणयन्त्रालये बालकृष्ण रामचंद्र घाणेकरेण

मुद्रणकर्त्रा मुद्रापयित्वा प्राकाश्यं नीता.

शाकः १८३१, संवत् १९६६

[प्रथमावृत्तिः १०००]






मूल्यं २-१० आणकाः ।



# न्यायसूत्रवैदिकवृत्तिः

अर्थात्

## श्रीमन्महर्षिगोतमप्रणीतसूत्राणां वेदानुसारिणी वृत्तिः



श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम-
भगवत्पादशिष्येण
श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यपण्डितस्वामि-
ज्वाहिरदासभगवत्पादाधिगतवेदवेदाङ्गविद्येन

**श्रीमन्निखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादेन
निर्मिता**



सा च

**पण्डितदेवदत्तशर्म्मणा**

मुम्बय्यां

निर्णयसागराख्ययन्त्रालये बालकृष्ण रामचंद्र घाणेकरेण मुद्रापयित्वा
प्राकाश्यं नीता ।

शाकः १८३१ संवत् १९६६

मूल्यं २-१० आणकाः ।

ॐ

यस्तुर्कैस्तपनान्वयोऽतुलधृतिः श्रुत्यब्जनागैर्वृतं
पश्यन् रोषमुपागतो वृषपती रामो यथा रावणम् ।
चक्रे भारतकं स्वेण विवृतं पुण्येन तेजोवपुः
सोऽयं मेऽद्य विराजतां हृदि वरो गोविन्दसिंहो गुरुः ॥



श्रीमन्निखिलशास्त्रनिष्णात

पण्डितस्वामिहरिप्रसादपरमहंस.



# ॥ अथ न्यायदर्शनम् ।

## । प्रथमोऽध्यायः ।

### आद्यमान्हिकम्

अतर्क्यं तर्कजालेन यं विदुस्तर्कवारिधिम्
तार्किकास्तं गुरुं वन्दे तर्कदं गोतमं मुनिम् ॥ १ ॥
तर्कसहाय्यकामानां गच्छतां वैदिके पथि
प्रीत्यै गोतमसूत्राणां वृत्तिं कुर्वे यथाश्रुति ॥ २ ॥

अथ निःश्रेयसाधिगमकारणं पदार्थतत्त्वज्ञानं विस्तरेणोपदिदिक्षुः करुणैकनिलयो भगवान् गोतमाचार्य्यस्तत्परं शास्त्रमारभमाणः पूर्वन्तावत्तज्ज्ञानतोनिःश्रेयसाधिगमप्रतिज्ञामाह—

"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" ॥ १ ॥

निर्देशे यथावचनं विग्रहः, चार्थे सर्वपदार्थप्रधानो द्वन्द्वसमास इतरेतरयोगः, प्रमाणानि च प्रमेयञ्च संशयश्च प्रयोजनञ्च दृष्टान्तश्च सिद्धान्तश्चावयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलञ्च जातयश्च निग्रहस्थानानि च तानि तथा, तेषां तत्त्वज्ञानात्=असमर्थसमासोऽयं, प्रमाणादीनां तत्त्वस्येत्यन्वयात्, समानासमानजातीयव्यवच्छिन्नं विविक्तानारोपितं रूपं तत्त्वं, तस्य ज्ञानं=साक्षात्कारस्तस्मान्निःश्रे-

यस्याधिगमः=त्रिविधदुःखात्यन्तनिवृत्तिर्निःश्रेयसं, मोक्षः कैवल्यमपवर्ग-इति तत्पर्य्यायः, तस्याधिगमः=प्राप्तिर्भवतीत्यर्थः।

"य इत्तद्विदुस्तेऽमृतत्वमानशुः" (ऋ० २।३।१८।२३) "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (यजु० ३१।१८) "तमेव विद्वान् न विभाय मृत्योः" (अथर्व० १।५।४४) "यस्मिन् द्यौः पृथिवीचान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथामृतस्यैष सेतुः" (मुण्ड० २।२।५) "ब्रह्मविदाप्नोति परम्" (तै० २।१) इत्यादिश्रुतिभ्यईश्वरतत्त्वज्ञानमेव निःश्रेयसस्यासाधारणो हेतुरिति हि वैदिकोराद्धान्तः, ईश्वरतत्त्वज्ञानञ्च नान्तरेण जीवात्मतत्त्वज्ञानमुपपद्यते, तस्य तदविनाभूतत्वेन तदायत्तत्वात्, जीवात्मतत्त्वज्ञानञ्च शास्त्रश्रवणाद् द्रव्यगुणकर्मसामान्यविशेपसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां विविक्तानारोपितस्वरूपविज्ञानेनोत्पद्यमानमपि न सहसा निःश्रेयसाय कल्पते, तस्य दृढ़भूमित्वाभावेन महाजटिलातिकुटिलवादिवृन्दोद्भावितत‍र्कजालैर्मध्ये स्खलनसम्भवात्, दृढ़भूमित्वे च तस्य तर्कजालोपजनितात्मासम्भावनादिस्खलनहेतुप्रतिबन्धजातनिरासकतया कारणं खल्वान्वीक्षिकी विद्यैवैका, यां किल तर्कतत्त्वविदो विद्वांसः "शास्त्रादीक्षितस्य=श्रुतस्यार्थस्यानु=पश्चादीक्षणं=साधकबाधकयुक्तिभ्यामवधारणमन्वीक्षा, तया प्रवर्तते या साऽन्वीक्षिकी" इति योगेन रूढ्या च न्यायविद्यापरनाम्नीं तर्कविद्यामाचक्षते, त्रय्यन्तनिष्णातास्तु ब्रह्मवादिनो मननमिति सङ्गिरन्ते, साच महाजटिलातिकुटिलवादिवृन्दोद्भावितत‍र्कजालविप्लावितप्रामाण्येषु समस्तवैदिकार्थेषु पुनर्वेदशास्त्राविरोधिसत्तर्कोपन्यासमुखेन समस्तकुतर्कजालं समूलमर्दमुपमर्दयन्ती दृढ़तरप्रामाण्यप्रत्ययमासादयति, यतश्च दृढ़भूमि भवदात्मतत्त्वज्ञानं न भूयः कदापि मध्ये स्खलनमापद्यते, तस्याश्चैतस्या अभिधेयाः खलु प्रमाणादयो निग्रहस्थानपर्य्यन्ताः षोडशैव पदार्था अभ्युपगम्यन्ते न न्यूनाः अपर्य्याप्तत्वात, नाप्यधिकाः अनुपयुक्तत्वात्, तत्र च निखिलपदार्थव्यव-

स्थापकत्वेन प्राधान्यात्प्रथमं **प्रमाणं** बुभुत्सितत्वेनोपस्थितत्वाच्चानन्तरं **प्रमेय**मुपदिश्यते, संशयादयस्तु यथासम्भवं प्रमाणे प्रमेये चान्तर्भवन्तोऽपि तर्कप्रवृत्तिहेतुत्वात्पृथगुपदिश्यन्ते, यद्यपि च सर्वेषामेषामविशेषेण तत्त्वज्ञानं न निःश्रेयसाधिगमे हेतुः किन्तु कस्यचित्साक्षात् कस्यचिच्चासाक्षात्, तथापि निःश्रेयसाधिगमहेतुत्वं कस्यापि तत्त्वज्ञानं नातिवर्तते, तस्मात् प्रमाणादीनां तत्त्वस्य ज्ञानान्निःश्रेयसाधिगम इति प्रतिज्ञातमितिभावः ॥

**तत्र** प्रमाणादीनां तत्त्वमिति **शैषिकी** षष्ठी, तत्त्वस्य ज्ञायमानत्वेन निःश्रेयसस्य चाधिगम्यत्वेन कर्मत्वात् तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति च द्वे **कर्मणि** षष्ठ्यौ, कारककारकार्थौ चोभावपि यत्र न विवक्ष्येते स **शेष** इति विवेकः ॥ १ ॥

**ननु**—कथं तत्त्वज्ञानेन निःश्रेयसमधिगम्यते? तत्राह—

**"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"** ॥ २ ॥

दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां=मध्येषष्ठीयम्, अधर्मजन्यं प्रतिकूलवेदनीयं गुणो **दुःखम्**, निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियमनोवेदनाभिः सम्बन्धो **जन्म**, प्रवृत्तिसाधनौ धर्माधर्मौ **प्रवृत्तिः**, कार्य्ये कारणोपचारात्, रागद्वेषौ **दोषः**, मिथ्याज्ञानमज्ञानमविवेको भ्रान्तिज्ञानमविद्याचेत्यनर्थान्तरम्, दुःखञ्च जन्म च प्रवृत्तिश्च दोषश्च मिथ्याज्ञानञ्च तानि तथा, तेषामुत्तरोत्तरापाये=यदुत्तरोत्तरं तस्यतस्यापाये विनाशे सति तदनन्तरापायात्=तदनन्तरस्य तत्तत्सन्निहितपूर्वपूर्वस्य विनाशादपवर्गः=उक्तलक्षणं निःश्रेयसमधिगम्यत इत्यर्थः ॥

**यद्धि** ज्ञानमात्मप्रतिभासिरूपे न प्रतिष्ठते, **किमुक्तं**? यद्वस्तु यथा न भवति तत्तथा गोचरयते यज्ज्ञानम् अतस्मिँस्तज्ज्ञानमिति यावत् तन्मिथ्याज्ञानमित्याचक्षते, तच्चात्माद्यपवर्गपर्य्यन्तेषु प्रमेयेषु बहुधा वर्त्तमानमपि जन्ममरणप्रबन्धलक्षणसंसारस्य "अनित्ये नित्यज्ञानम्, अशुचौ शुचिज्ञानं,

दुःखे सुखज्ञानम्, अनात्मसु शरीरादिप्रकृतिपर्य्यन्तेषु चात्मज्ञानम्" इति चतुर्विधमेव कारणमास्थीयते, **तद्यथोक्तं** भगवता पतञ्जलिना "**तस्य-हेतुरविद्या**" (यो० २।२४) "**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या**" (यो० २।५) इति, तन्मूलौ चानुकूलप्रतिकूलार्थविषयौ रागद्वेषौ, नहि तत्त्वं विद्वान् कश्चित्क्वचिदविषये रज्यति, कञ्चिदकारणं वा द्वेष्टि, रागद्वेषमूला च धर्माधर्मप्रवृत्तिः, लोके रागद्वेषबुद्धीनामेव मूढानां तथा प्रवृत्तिदर्शनात्, "**इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः**" (वै० ६।२।१५) इति वैशेषिकसूत्राच्च, धर्माधर्मप्रवृतिमूलञ्च जन्म "**वीतरागजन्मादर्शनात्**" (न्या० ३।१।२५) इति वक्ष्यमाणात्, जन्ममूलञ्चाखिलं दुःखम्, "**आत्तो वै सशरीरः प्रियाप्रियाभ्याम्**" (छा० ८।१२।१) इति छान्दोग्यश्रुतेरिति मिथ्याज्ञानमेव त्रिविधदुःखमूलम्, तच्च यावदनुवर्तते न तावत्तत्कथमपि निवर्तते, कारणे सद्भवति कार्य्यसद्भावस्याप्यावश्यकत्वात्, **उक्तञ्च** दर्शनान्तरे "**कारणभावात्कार्य्यभावः**" (वै० ४।१।३) इति, तस्मान्निःश्रेयसार्थिभिरार्य्यतनयैरादौ यत्नतो मिथ्याज्ञानमेव निवर्त्यं तन्निवृत्त्या निखिलदुःखनिवृत्तेरवश्यम्भावात्, तन्निवर्तकञ्चाविप्लवं पदार्थतत्त्वज्ञानम्, अन्वयव्यतिरेकाभ्यां तस्यैव तन्निवर्तकत्वावधारणात्, **तद्यथोक्तं** सांख्ययोगवेदान्तेषु, "**नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्**" (सां० १।५६) "**विवेकख्यातिरविप्लवा हानोपायः**" (यो० १।२६) "**विद्यैव तु निर्धारणात्**" (वे० ३।३।४८) इति, **तच्च** यदाऽस्य वैदिकानि कर्माणि कुर्वतो भगवत्प्रसादेन शास्त्रपरिशीलनादुत्पद्यते, तदा तत्प्रतिकूलत्वान्मिथ्याज्ञानमपैति "**एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकरतीह सोम्य**" (मुण्ड० २।१।१०) इत्यादिश्रुतेः, मिथ्याज्ञानापाये च कानुरज्येत् कं वा द्विष्यादिति रागद्वेषौ दोषस्तावदपैति, दोषापाये च कथं कुत्सिते वा काम्ये वा कर्मणि प्रवर्तेत, कथं वा देशात्महितकरेभ्यः सहजकर्मभ्यो निवर्तेतेति तत्पूर्विका जन्मफलप्रदा धर्माधर्मप्रवृत्तिरपैति **तद्य-**

था वक्ष्यति, "न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य" (न्या० ४।१।६४) इति, प्रवृत्त्यपाये च बीजाभावाज्जन्मापैति, जन्मापाये च सर्वं दुःखमपैति, निमित्तापाये नैमित्तिकस्याप्यपायात्, "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छा० ८।१२।१) इति छान्दोग्ये श्रवणाच्च, सर्वदुःखात्यन्तापाय एव च निःश्रेयसमित्येवं तत्त्वज्ञानेन मिथ्याज्ञानादिनिवृत्त्या निःश्रेयसमधिगम्यत इतिभावः ॥ २ ॥

तत्र प्रथमोद्दिष्टं प्रमाणपदार्थं विभज्य प्रमाणसामान्यलक्षणमाह—

**"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" ॥ ३ ॥**

प्रमाणानि=प्रमीयतेऽनेनेति प्रमाणं प्रमाकरणमिति यावदिति प्रमाणसामान्यलक्षणम् । तच्च प्रत्यक्षानुमानोपमानशब्दाः=प्रत्यक्षञ्चानुमानञ्चोपमानञ्च शब्दश्चेति भेदाच्चतुर्विधमित्यर्थः ॥

तत्र सर्वप्रमाणज्येष्ठत्वात् प्रत्यक्षस्य प्रथमं, तत्पूर्वकत्वाच्चानुमानस्य तदनन्तरं, तत्समानत्वाच्चोपमानस्य तत्पश्चात्, प्रत्यक्षानुमानोभयपूर्वकप्रवृत्तिमत्त्वाच्च शब्दस्यान्ते निर्देश इति विवेकः ॥

इदमत्र बोध्यम्—त्रिविधा ह्यस्य शास्त्रस्य प्रवृत्तिः, उद्देशो लक्षणं परीक्षा च, तत्र संज्ञया पदार्थमात्राभिधानमुद्देशः, उद्दिष्टस्य तत्त्वव्यवच्छेदकोऽसाधारणो धर्मो **लक्षणम्**, लक्षितस्य लक्षणं सम्भवति न वेति प्रमाणैरवधारणं **परीक्षा**, विभागोऽप्युद्देश एव, तत्रापि तल्लक्षणानपायात्, विशेषस्तु केवलमियानेव-समानसंज्ञयाऽभिधानमुद्देशः, विशेषसंज्ञयाभिधानं विभागः, अतो न शास्त्रप्रवृत्तित्रैविध्यानुपपत्तिरिति ॥ ३ ॥

प्रत्यक्षं लक्षयति—

**"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" ॥ ४ ॥**

इन्द्रियार्थसन्निकर्षोत्पन्नं=घ्राणादीनामिन्द्रियाणां गन्धादिभिः प्रातिस्विकार्थैर्यः सन्निकर्षः संयुक्तसमवायादिलक्षणः सम्बन्धस्तस्मादुत्पन्नं जायमानं भवज्ज्ञानं=यज्ज्ञानमव्यपदेश्यं="गन्धज्ञानं, रसज्ञानम्" इति

विषयसंज्ञया न व्यपदिश्यतेऽव्यभिचारि=स्वार्थञ्च न व्यभिचरति, व्यवसायात्मकम्—अवधारणात्मकञ्च भवति, तत्प्रत्यक्षं=प्रत्यक्षप्रमाणमित्यर्थः ॥

**आत्मा** मनसा सन्निकृष्यते, मनोघ्राणादिभिरिन्द्रियैः, इन्द्रियाणि च गन्धादिभिरर्थैः, ततः शब्दकर्मतापत्तिवर्ज्यं तद्वति तत्प्रकारकं "गन्धोऽयं रसोऽयम्" इत्यवधारणात्मकं यज्ज्ञानमुपजायते तदेव **प्रत्यक्षं** प्रमाणमितिभावः ॥

**तत्र** प्रत्यक्षमिति लक्ष्यनिर्देशः, इतरल्लक्षणम्, **इन्द्रियार्थसन्निकर्षोत्पन्नं** ज्ञानं यदा "गन्धज्ञानं, रसज्ञानम्" इति स्वविषयनामधेयशब्देन व्यपदिश्यते, **किमुक्तं ?** स्वविषयस्य वाचको यः संज्ञाशब्दस्तद्गोचरतामापद्यते, तदा तत्प्रमाणतां विजहाति प्रमेयताञ्चोपगच्छति, शब्दप्रमाणविषयत्वात्, तथा चासम्भवोदूषणं, तन्माभूदित्युक्तम् **"अव्यपदेश्यं"** कर्मणि कृत्यप्रत्ययः, संज्ञाशब्दो व्यपदेशः, तत्कर्मतामापन्नं ज्ञानं व्यपदेश्यं, तद् यन्नभवति तदव्यपदेश्यं शब्दकर्मतामनापन्नमित्यर्थः, । **इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यं** भवदपि भवति तदभाववति तत्प्रकारकं किञ्चिज्ज्ञानं **यथा** ग्रीष्मे भौमेनोष्मणा संसृज्य स्पन्दमानासु सूर्य्यमरीचिषु दूरतः पश्यतः **"उदकम्"** इति, मन्दतमसि रज्ज्वां वा **"भुजङ्गमः"** इति चाक्षुषं ज्ञानं, तत्रातिव्याप्तिर्माभूदित्युक्तम् **"अव्यभिचारि"**=स्वप्रतिभासिरूपेऽप्रतिष्ठा व्यभिचारः, सोऽस्यास्तीति व्यभिचारि=मिथ्याज्ञानं तदभाववति तत्प्रकारकं ज्ञानमिति यावत्, यत् तन्नभवति तदव्यभिचारि=प्रमात्मकं तद्वति तत्प्रकारकं ज्ञानमिति यावदित्यर्थः । **इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि** भवति किञ्चिदनवधारणात्मकं=संशयात्मकं ज्ञानं **यथा** दूरात्पश्यतो "धूमो वा रेणुर्वा, स्थाणुर्वा पुरुषो वा" इति चाक्षुषं ज्ञानं, तत्रातिव्याप्तिर्माभूदित्युक्तं **"व्यवसायात्मकम्"**=अवधारणं व्यवसायः, इदमित्थमेवेति निश्चय इति यावत्, स एव आत्मा=रूपं यस्य ज्ञानस्य तद् व्यवसायात्मकं=निश्चयात्मकमित्यर्थः, **तथाच** संशयव्युदासः । **समानासमानजातीय-**

**व्यवच्छेदो लक्षणार्थः**=प्रत्यक्षस्यानुमानादिकं समानजातीयं, प्रमेयजातञ्चासमानजातीयं, ततो व्यवच्छेदः=व्यावृत्तिः भेद इति यावल्लक्षणस्य प्रयोजनं, तच्चातिव्याप्त्यादिलक्षणदोषनिराकरणात्सुनिष्पन्नमिति विवेकः ॥

**केचित्तु** यावन्तोऽर्थास्ते सर्वे सर्वथा सर्वदा सर्वत्र नामधेयेनान्विताः विद्यन्ते, नास्ति सोऽर्थो यः कथञ्चित् कदाचित् कुत्रचिन्नामधेयेन वियुज्यते अतस्तद्गोचरं ज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमपि शाब्दं प्रसज्यते, अर्थवत्तदन्वितशब्दस्यापि विषयत्वेन हेतुत्वात्, तत्र लक्षणं माऽतिप्रसांक्षीदित्युक्तम् "**अव्यपदेश्यम्**"=अशाब्दं केवलार्थगोचरमित्यर्थ इत्याहुः ॥

**वाचस्पतिमिश्रास्तु** शाब्दव्युदासो न युक्तः, संशयविपर्ययोभयव्युदासार्थम् "**अव्यभिचारि**" पदम्, विपर्ययवत्संशयस्यापि स्वप्रतिभासिरूपेऽप्रतिष्ठितत्वात्, "अव्यपदेश्यं, व्यवसायात्मकम्" इति पदद्वयञ्च विभागप्रदर्शनार्थम्। **तत्र** व्यपदेशो विशेषणमुपलक्षणं वा जात्यादि, तत्कर्म व्यपदेश्यं विशेष्यमिति यावत्, सर्वं हि सविकल्पकं विशेषणविशेष्यभावेन वस्तुषु प्रवर्तते, अविद्यमानं व्यपदेश्यं यस्मिन् तदव्यपदेश्यं जात्यादिस्वरूपावगाहि नतु जात्यादीनां मिथो विशेषणविशेष्यभावावगाहि **निर्विकल्पकं** ज्ञानमिति यावत्, व्यवसायो निश्चयो विकल्प इत्यनर्थान्तरं, स एवात्मा=रूपं यस्य तद् व्यवसायात्मकं=जात्यादीनां मिथो विशेषणविशेष्यभावावगाहि **सविकल्पकं** ज्ञानमिति यावत्, **एतदुक्तं भवति**—द्विविधन्तावत्प्रत्यक्षं निर्विकल्पकं सविकल्पकञ्च, तत्रोभयम् "**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारि**" इति लक्षणेन सङ्गृहीतमपि न स्वशब्देनोपात्तं वादिविप्रतिपत्तेः' तत्र निर्विकल्पकस्य पदम् "**अव्यपदेश्यं**" सविकल्पकस्य च "**व्यवसायात्मकम्**" इति, इत्याहुः ॥

**इदमत्रबोध्यम्**—वैदिकानान्तावज्ज्ञाने प्रमाणव्यवहारो मुख्यः, तेनापि हि हातुमुपादातुमुपेक्षितुंचार्थः प्रमीयते, तज्जनके चेन्द्रियादौ गौणः, तस्य प्रमात्मकज्ञानोपजननेन हानोपादानोपेक्षाबुद्धिलक्षणफलो-

त्पत्तौ हेतुत्वात्, तदेतत्सूचनायैव चाचार्य्यः प्रत्यक्षादीनि प्रमाणानि ज्ञानमुखेनैवाललक्षत, **तत्र यदा** इन्द्रियादिकं प्रमाणं तदा तज्जन्यं ज्ञानं फलं, **यदा** तु ज्ञानं तदा हानोपादानोपेक्षा बुद्धय इति ॥ ४ ॥

अथानुमानं लक्षयति—

**"[1]तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतोदृष्टञ्च" ॥ ५ ॥**

ज्ञानमित्यनुवर्त्तते, तत्पूर्वकं ज्ञानमनुमानमित्यन्वयः, **तत्पूर्वकं**=तदा प्रत्यक्षं परामृशति, तत् प्रत्यक्षं गृहीतव्याप्तिकस्य लिङ्गस्य पक्षे दर्शनं साक्षात्कार इति यावत् पूर्वं कारणं यस्य तत् तत्पूर्वकं लिङ्गप्रत्यक्षकारणकं ज्ञानं=परोक्षलिङ्गिगोचरं यज्ज्ञानं तदनुमानम्=अनुमानप्रमाणं, तच्च पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्चेति त्रिविधं=त्रिप्रकारमित्यर्थः ॥

**यदा** हि प्रतिपत्ताऽयं पक्षे लिङ्गं प्रतिपद्यते, **किमुक्तं?** धूमएवायं न वाष्पादिकमित्यसन्दिग्धधूमादिलिङ्गदर्शनमुपैति तदैकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वाद् "यत्र धूमस्तत्राग्निः" इति महानसादौ सपक्षे गृहीतपूर्वां व्याप्तिं स्मरति, लिङ्गदर्शनेन व्याप्तिं स्मरतश्चास्य यदनु नूनम् **"एष वह्निमान्"** इत्यादिरूपं परोक्षलिङ्गिगोचरं ज्ञानमुपजायते **तदेव** हानादिबुद्धिफलकत्वादनुमानं प्रमाणं मुख्यं, लिङ्गदर्शनंचोक्तज्ञानफलकत्वाद्गौणम्, **तच्च** पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्चेति भेदात् त्रिविधं, **तत्र पूर्ववत्**=वतिप्रत्ययः, यत्रानुमाने पूर्वेण तुल्यं साध्यं वर्तते तत्पूर्ववत्, यादृशस्य लिङ्गस्य यादृशेन लिङ्गिना पूर्वं व्याप्तिर्गृहीता तादृशलिङ्गदर्शनात्तादृशलिङ्गिगोचरं यदनुमानं तत्पूर्ववत्, कि-

---

(१) मुद्रितपुस्तकेषु सर्वत्र "अथ तत्पूर्वकम्" इत्यादि सूत्रपाठ उपलभ्यते सचापपाठः अथेत्यस्य भाष्यप्रतीकत्वात्, एतच्च **"अथेत्यानन्तर्य्ये, अनुमानविशेषणार्थं सूत्रं तत्पूर्वकमिति"** इति भाष्यवार्तिकेऽथशब्दं व्याख्याय सूत्रपाठश्रुतेरवगम्यते, भाष्येऽपि च **"अथानुमानम्"** इति युक्तः पाठो न केवलमथेति, न्यायवार्तिकतात्पर्य्यटीकायां तावन्मात्रस्यैव व्याख्यातत्वात्, "अथोपमानम्, अथशब्दः" इत्यग्रिमभाष्यशैलीदर्शनाच्च ॥

**मुक्तं**? यत्पूर्वं लिङ्गेन सह दृष्टं साध्यं यच्च सम्प्रत्यनुमेयं तयोरत्यन्तजात्यभेदे यदनुमानं तत्पूर्ववत्, विशेषतो दृष्टव्याप्तिकमनुमानं पूर्ववदिति यावत्, **यथा** धूमेन वह्न्यनुमानम् । **शेषवत्**=यत्रानुमाने शेषेण तुल्यं साध्यं वर्तते तत् शेषवत् । यः परस्योपकारे वर्तते स शेषः, **किंबहुना** यः परार्थः स शेषः "**शेषः परार्थत्वात्**" (मी० ३।१।१) इत्युक्तेः । अभावनिरूपणार्थत्वात्प्रतियोग्यपि शेषः । नहि प्रतियोगिनं विहाय शक्यनिरूपणो भवति कश्चिदभावः । तदिह च साधनाभावस्य प्रतियोगि साधनं विवक्षितं, तत्तुल्यश्चाभावनिरूपणार्थत्वात्साध्याभावस्य प्रतियोगि साध्यं, तद् गोचरयते यदनुमानं तत् शेषवत् । **किमुक्तं**? साध्याभावस्य साधनाभावेन व्याप्तिग्रहाद् यदनुमानं प्रवर्तते तत् शेषवत्, व्यतिरेकव्याप्तिकमनुमानं शेषवदिति यावत्, **यथा** गन्धवत्त्वेन हेतुना पृथिव्यामितरभेदानुमानं, **यथा** वाऽष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वेन हेतुना शब्दस्याकाशाश्रितत्वानुमानं, स्पर्शादेश्च वाय्वाश्रितत्वानुमानम्, इच्छादीनां चाऽऽत्माश्रितत्वानुमानम् । **अस्यैव** च परिशेषानुमानमिति नामान्तरम् । **परिशेषश्च** प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः । स च विस्तरेणान्यत्र व्याख्यातोऽत उपरम्यते । **सामान्यतोदृष्टं**=यत्रानुमाने सामान्यतोदृष्टव्याप्तिकं साध्यं वर्तते तत् सामान्यतोदृष्टं, **किमुक्तं**? यत्पूर्वं लिङ्गेन सह दृष्टं साध्यं यच्च सम्प्रत्यनुमेयं तयोरत्यन्तजातिभेदे यदनुमानं तत् सामान्यतोदृष्टं साध्यतावच्छेदकहेतुतावच्छेदकव्यापकयोर्धर्मयोर्व्याप्तिग्रहे प्रवर्तमानमनुमानं सामान्यतोदृष्टमिति यावत्, यथा शब्दस्पर्शादीनामिच्छादीनाञ्च गुणत्वेन द्रव्याश्रितत्वानुमानं, यथा वा गन्धादिज्ञानानां क्रियात्वेन तत्करणघ्राणादीन्द्रियानुमानं, यथा वा प्रवृत्तित्वेन हेतुना वर्णाश्रमिणां वैदिककर्मसु प्रवृत्तेः फलवत्त्वानुमानम् । **एतदुक्तं भवति** व्याप्तिग्रहाधीनजन्म ह्यनुमानं, यावल्लिङ्गस्य लिङ्गिना सार्धं व्याप्तिर्न गृह्यते, न तावल्लिङ्गदर्शनात्कथमप्यनुमानज्ञानमुदेतुमर्हति । **व्याप्तिश्च** त्रिधा—विशेषव्याप्तिः, सामान्यव्याप्तिः, व्यतिरेकव्याप्तिश्च । धूमेन वह्नौ साध्ये "यत्र धूमस्तत्र वह्निः," इति हेतुतावच्छेदकसाध्य-

तावच्छेदकधूमत्ववह्नित्वरूपविशेषमुखेन प्रवृत्ता व्याप्तिः "**विशेषव्याप्तिः**"। शब्दादिनाऽऽकाशादौ साध्ये "यो गुणः स द्रव्याश्रयः" इति हेतुतावच्छेदकसाध्यतावच्छेदकशब्दत्वाकाशत्वादिव्यापकगुणत्वद्रव्यत्वरूपसामान्यमुखेन प्रवृत्ता व्याप्तिः "**सामान्यव्याप्तिः**"। गन्धवत्त्वेन पृथिव्यामितरभेदे साध्ये "यत्रेतरभेदाभावस्तत्र गन्धवत्त्वाभावः" इति साध्याभावसाधनाभावरूपव्यतिरेकमुखेन प्रवृत्ता व्याप्तिः "**व्यतिरेकव्याप्तिः**"। तत्र विशेषव्याप्तिकमनुमानं "**पूर्ववत्**" व्यतिरेकव्याप्तिकं "**शेषवत्**" सामान्यव्याप्तिकञ्च **सामान्यतोदृष्ट**मितिभावः॥

**तत्र** व्यतिरेकव्याप्त्याऽप्यन्वयव्याप्तिरेव गृह्यते साध्याभावव्यापकीभूताभावप्रतियोगित्व" रूपतल्लक्षणस्यान्ततो गत्वा तत्रैव पर्य्यवसानदर्शनात्। अतो न त्रयी व्याप्तिः किन्तु द्वयी। तस्याश्च द्वयीत्वादनुमानमपि द्विविधं न त्रिविधमिति **वैशेषिकाः**। विशेषव्याप्तेः सामान्यव्याप्तेश्चान्वयव्यतिरेकशालित्वात् तद्व्याप्तिकं लिङ्ग**मन्वयव्यतिरेकि**, व्यतिरेकव्याप्तेश्चान्वयशालित्वाभावात् तद्व्याप्तिकं लिङ्गं **केवलव्यतिरेकी**ति परिभाष्यते। **अन्वयव्यतिरेकि** लिङ्गन्तु पक्षधर्मत्वं सपक्षसत्त्वं विपक्षव्यावृत्तत्वम् अबाधितविषयत्वम् असत्प्रतिपक्षत्वञ्चेति पञ्चभिर्लक्षणैरुपपन्नमनुमितिज्ञानं जनयति। **व्यतिरेकि** च सपक्षसत्त्वं विहाय शेषचतुर्भिर्लक्षणैरुपपन्नम्। सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः, **किमुक्तं?** यत्र साध्यसन्देहः स पक्षस्तत्रवृत्तित्वं "**पक्षधर्मत्वम्**"। साध्यधर्मयोगेन निर्ज्ञातं धर्म्यन्तरं सपक्षः, **किमुक्तं?** यत्र साध्यनिश्चयः स सपक्षस्तत्रास्तित्वं "**सपक्षसत्त्वम्**"। साध्यधर्मसंस्पर्शशून्यो धर्मी विपक्षः, **किमुक्तं?** यत्र साध्याभावो निश्चितः स विपक्षस्तत्रावृत्तित्वं **विपक्षव्यावृत्तित्वम्**। अनुमेयस्यार्थस्य प्रत्यक्षेणाऽऽगमेन वाऽनपहरणमबाधितविषयत्वम्, **किमुक्तं?** प्रत्यक्षेणागमेन वा यस्य साध्याभावो न निश्चीयते तद्भावोऽ**बाधितविषयत्वम्**। संशयबीजभूतेनार्थेन प्रत्यनुमानतया प्रयुज्यमानेनानुपहतत्वमसत्प्रतिपक्षत्वम्, **किमुक्तं?** यस्य साध्याभावसाधकं हेत्वन्तरं न विद्यते तद्भावोऽ**सत्प्रतिपक्षत्वम्**। यस्य चान्व-

यव्यतिरेकिणः केवलव्यतिरेकिणो वा सतो लिङ्गस्यैतेषां लक्षणानामेकमपि न विद्यते न तल्लिङ्गं मन्तव्यम्, अपि च ? लिङ्गाभासः । **अत एव** च तेषामेकैकस्यापायात्पञ्च हेत्वाभासाः वक्ष्यन्ते **"सव्यभिचार-विरुद्धप्रकरणसमसाध्यसमकालातीताः हेत्वाभासाः"** (न्या० १।२।४) इति । यस्य हि लिङ्गस्य पक्षधर्मत्वं नास्त्यसौ **साध्यसमो**ऽसिद्धः । यस्य सपक्षसत्त्वं नास्त्यसौ **सव्यभिचारो**ऽनैकान्तिकः । यस्य विपक्षव्यावृत्तत्वं नास्ति स **विरुद्धः** । यस्याबाधितविषयत्वं नास्ति स **कालातीतो** बाधितः । यस्यासत्प्रतिपक्षत्वं नास्ति स **प्रकरणसमः** सत्प्रतिपक्षः । **किं बहुना** एतेष्वेव पञ्चसु लक्षणेषु लिङ्गस्याविनाभावः परिसमाप्यते । परिसमाप्ताविनाभावञ्च लिङ्गं ज्ञानविषयीकृतं तद्विषयं ज्ञानं वाऽनुमितिकरणत्वाद**नुमानं** प्रमाणम् । व्यापारवदसाधारणं कारणं करणमिति व्याप्तिस्मरणं **व्यापारः**। तज्जन्या साधनीयधर्मगोचरा च प्रतिपत्ति**रनुमितिः** फलम् । **अथवा** लिङ्गज्ञानजन्या साधनीयधर्मगोचरा प्रतिपत्ति**रनुमानं** । फलञ्च हानोपादानादिबुद्धिरिति विवेकः ॥

**पञ्चलक्षणकाल्लिङ्गाद्गृहीतान्नियमस्मृतेः ।**
**परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते ॥ १ ॥**

**इदमत्र बोध्यम्**—वस्तुस्वभावसिद्धः साध्यसाधनयोरव्यभिचरितसम्बन्धो हि व्याप्तिरिति स्थितम् । नव्यास्तु **"साध्यवदन्यावृत्तित्वं"**= साध्यवत्प्रतियोगिकभेदाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति तल्लक्षणमाचक्षते । **तथा च** वह्निमान् धूमादित्यादौ साध्यो वह्निः, साध्यवान् महानसादिस्तदन्यो जलह्रदादिस्तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ च साध्यवदन्यस्मिँस्तप्तायःपिण्डादौ वह्नेः सद्भावान्नातिव्याप्तिः । **अत्र** येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः, **अन्यथा** समवायसम्बन्धेन वह्निमन्तो वह्नेरवयवास्तदन्यो महानसादिस्तत्रधूमस्य विद्यमानत्वेनाव्याप्तिप्रसङ्गात् । **साध्यवदन्यश्च**

साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् निश्चेतव्यः, **तेन** यत्किञ्चिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमसत्त्वेऽपि नाव्याप्तिः। **एवं** येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन **साध्यवदन्यावृत्तित्वं** वोद्धव्यं, **तेन** साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि नाव्याप्तिः। **साध्यवदन्यावृत्तित्वञ्च** साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, **तेन** धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः। **अत्र** यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावत्त्वादित्यादौ **"विशिष्टं शुद्धान्नातिरिच्यते"** इति न्यायेन विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्साध्यवदन्यस्मिन् गुणादाववृत्तित्वं नास्ति **तथापि** हेतुतावच्छेदकरूपेणावृत्तित्वं वक्तव्यं, **तथा च** सत्तात्वेन सत्तायास्तत्रावृत्तित्वाभावेऽपि हेतुतावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वेनावृत्तित्वसद्भावान्नाव्याप्तिः॥

**हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं** व्याप्तिरिति तेषां द्वितीयं लक्षणम्। पर्वतो वह्निमान् धूमादित्यादौ हेतुर्धूमस्तत्समानाधिकरणो घटाभावः पटाभावस्तत्प्रतियोगी घटादिरप्रतियोगी वह्निस्तत्सामानाधिकरण्यं धूमस्येति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ च हेतुर्वह्निस्तत्समानाधिकरणस्तप्तायःपिण्डे धूमाभावस्तत्प्रतियोगी धूमो नाप्रतियोगीति नातिव्याप्तिः। **अत्र** हेत्वधिकरणं हेतुतावच्छेदकविशिष्टाधिकरणं विवक्षितं, **तेन** द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यस्य नाव्याप्तिः। हेतुतावच्छेदकसम्बन्धेन च **हेत्वधिकरणं** बोध्यं, **तेन** समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः। **अभावश्च** प्रतियोगिव्यधिकरणोऽभिप्रेतः, **तेन** कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः। **प्रतियोगिव्यधिकरणत्वञ्च** न प्रतियोग्यनधिकरणवृत्तित्वं, कपिसंयोगी एतद्वृक्षत्वादित्यत्रैवाव्याप्तेः, प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो

योऽभावस्तस्यैव वृक्षे मूलावच्छेदेन सत्त्वात्। नापि प्रतियोग्यधिकरणावृत्तित्वं, संयोगी सत्त्वादित्यादौ ; सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वेनातिव्याप्तिप्रसङ्गात्, **अपि च ?** स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तित्वम्, अतो न पूर्वोक्तः कश्चिद्दोषः। **परन्तु** प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं बोध्यं, **तेन** विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादेर्विशिष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वेऽपि नातिव्याप्तिः। **उक्तप्रतियोग्यनधिकरणत्वञ्च** साध्यतावच्छेदकसम्बन्धेन वाच्यं, **तेन** ज्ञानवान् सत्त्वादित्यादौ सत्ताधिकरणस्य घटादेर्विषयतया ज्ञानाधिकरणत्वेऽपि नातिव्याप्तिः। नापि वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽप्यव्याप्तिः। **ननु** प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं, तत्सामान्यस्य वा, यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नस्य वा ? **आद्ये** कपिसंयोगी एतद्वृक्षत्वादित्यत्रैवाव्याप्तिः, यतः कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि भवति, तदनधिकरणञ्च वृक्ष इति। **द्वितीये** तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसामानाधिकरण्यात्। **नच** वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति **वाच्यं,** घटाभावे यो वन्ह्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी, तदधिकरणञ्च पर्वतादिरित्येवं क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात्। **यदि** तु घटाभावतो वह्न्यभावो भिन्न इत्युच्यते, **तदा** "धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः, तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धस्तेन च सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति। **तृतीये** च कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः, तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य

गुणत्वात्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि, तदवच्छिन्नानधिकरणत्वञ्च हेत्वधिकरणस्यात्मन इति चेन्न। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् अतो न कश्चिद्दोष इति॥ ५॥

**अथोपमानं** लक्षयति—

**"प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्॥ ६॥"**

ज्ञानमित्यनुवर्तते। प्रसिद्धसाधर्म्यात्=विपर्येण विपर्यिणं लक्षयति। प्रसिद्धस्य पूर्वं प्रमितस्य गवादेः साधर्म्यात् साधर्म्यं सादृश्यं तज्ज्ञानात् यत्साध्यसाधनं=साध्यस्य साधनीयस्य संज्ञासंज्ञिसम्बन्धस्य साधनं सिद्धिर्ज्ञानमिति यावत् तदुपमानम्=उपमानप्रमाणमित्यर्थः।

**"यथागौस्तथागवयः"** इति वनेचरवाक्यमाकर्ण्य वनङ्गतस्य नागरिकस्य पुरोऽवस्थिते प्राणिपिण्डे गोसादृश्यदर्शनाद् यद् वाक्यार्थस्मरणपूर्वकं **"नूनमस्य गवयशब्दः संज्ञा"** इति संज्ञासंज्ञिसम्बन्धज्ञानमुपजायते तदेवोपमानप्रमाणमितिभावः॥

**तत्र** गौणे पक्षे गोसादृश्यज्ञानमुपमितिकरणत्वा**दुपमानं**, वाक्यार्थस्मरणं **व्यापारः**, संज्ञासंज्ञिसम्बन्धज्ञानञ्चो**पमितिः** फलम्। **मुख्य**पक्षे तु संज्ञासंज्ञिसम्बन्धज्ञानमु**पमानं**, हानोपादानादिबुद्धि**रुपमितिः** फलमिति विवेकः॥

**इदमत्रबोध्यम्**—"उष्ट्रविधर्मा नासिकाग्रे च लसदेकशृङ्गः खड्गमृगः" इति कुतश्चिदारण्यकपुरुषादुपश्रुत्य दैवादरण्यं गतस्य नागरिकस्य पुरोऽवस्थिते प्राणिपिण्डे यदुष्ट्रवैधर्म्यदर्शनेन वाक्यार्थस्मरणपूर्वकं **"नूनमस्य खड्गमृगशब्दः संज्ञा"** इति संज्ञासंज्ञिसम्बन्धज्ञानमुत्पद्यते तदप्युपमानमेव। साधर्म्यज्ञानस्येव वैधर्म्यज्ञानस्यापि तद्धेतुत्वाभ्युपगमादिति॥ ६॥

**अथ** शब्दं लक्षयति—

**"आप्तोपदेशः शब्दः"॥ ७॥**

ज्ञानमित्यनुवर्तते। आप्तोपदेशः=उपदिश्यतेऽनेनेत्युपदेशो वाक्यम्,

अर्थाव्यभिचारित्वमाप्तिस्तया वर्तते यः स आप्तः, आप्तश्चासावुपदेशश्चेत्याप्तोपदेशोऽर्थाव्यभिचारि वाक्यं, तज्जन्यं यद्वाक्यार्थज्ञानं तद् शब्दः=शब्दप्रमाणमित्यर्थः ।

यः शब्दःकदाचित्कुत्रचित्कथञ्चिदर्थं न व्यभिचरति स प्रमाणमिति भावः ॥

तत्र शब्दो गौणं, शब्दार्थज्ञानञ्च मुख्यं **शब्दप्रमाणम्** । आद्ये-शब्दार्थप्रतिपत्तिर्द्वितीये च हानोपादानादिबुद्धिः शाब्दी **प्रमा** फलमिति विवेकः ॥ ६ ॥

तं विभजते—

**"स द्विविधो दृष्टादृष्टार्थभेदात्"** ॥ ८ ॥

स=प्रमाणभूतः शब्दो दृष्टादृष्टार्थभेदात्=दृष्टोऽर्थो येन प्रवक्त्रा स दृष्टार्थ ईश्वरः, न दृष्टः **किन्तु** अनुमितोऽर्थो येन प्रवक्त्रा सोऽदृष्टार्थः ऐतरेयप्रभृतिर्ऋषिमुनिगणः, तयोर्दृष्टादृष्टार्थप्रवक्त्रोर्भेदाद् दृष्टादृष्टार्थ-प्रवक्तृकत्वादिति यावद् द्विविधः=द्विप्रकार इत्यर्थः ।

प्रमाणभूतः शब्दस्तावद् द्विविधः—ईश्वरप्रोक्तः, ऋषिमुनिगण-प्रोक्तश्च । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति चत्वारो वेदा **ईश्वर-प्रोक्तः** । आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थवेदश्चेति चत्वार उपवेदाः, ऐतरेयब्राह्मणं शतपथब्राह्मणं ताण्ड्यब्राह्मणं गोपथब्राह्मणमिति चत्वारि ब्राह्मणानि, ऐतरेयारण्यकं तैत्तिरीयारण्यकमिति द्वे आरण्यके, ईशाद्या दशोपनिषदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि, वैशेषिकं न्यायः सांख्यं योगः पूर्वमीमांसोत्तरमीमांसा चेति षडुपाङ्गानि, मानवधर्मशास्त्रं रामायणं भारतञ्चेति षड्त्रिंशद्भेद **ऋषिमुनि-गणप्रोक्तः** । **तत्रे**श्वरप्रोक्तः शब्दः सर्वथा सर्वदा सर्वत्र स्वतः प्रमाणं, तद् यथाहुर्भगवन्तो दर्शनकाराः—**"निजशक्त्याभिव्यक्तेः स्वतः प्रामाण्यम्"** ( सां०=५।५१ ) **"तद्वचनादाम्नायस्य प्रामाण्यम्"** ( वै०—१०।२।१० ) **"तत्प्रमाणं बादरायणस्यान-**

**पेक्षत्वात्**" ( पूर्वमी०–१।१।५ ) इति । ऋषिमुनिगणप्रोक्तश्च वेदानुकूलः प्रमाणं, प्रतिकूलोऽप्रमाणं परतः प्रमाणमिति यावत्, **तद्यथाह** भगवान् जैमिनिः **"विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्"** ( पूर्वमी०–१।३।३ ) इति । **अनुमानम्**=अदृष्टार्थप्रवक्तृकमित्यर्थः । **तदुभयभिन्नो** यावान् शब्दः, स सर्वः सर्वथा सर्वदा सर्वत्राप्रमाणमन्यत्रलोकसिद्धप्रमाण्यादिति भावः ॥

तत्र **"तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः"** ( न्या०–२।१।५७ ) इति परीक्षालक्षणे सूत्रे तच्छब्देन परतःप्रमाणभूतोऽदृष्टार्थप्रवक्तृक एव शब्दः परामृश्येत, जीवबुद्धिरचितत्वेनाशङ्कनीयदोषतया परीक्षार्हत्वात्, न स्वतः प्रमाणभूतो दृष्टार्थप्रवक्तृकः, तस्य सर्वज्ञबुद्धिरचितत्वेन सर्वथा सर्वदा सर्वत्रानाशङ्कनीयदोपतया परीक्षानर्हत्वादिति विभागप्रदर्शनम् । यः शब्दः स्वप्रतिपाद्यमर्थं प्रमाणीकर्तुं प्रमाणान्तरं कालत्रयेऽपि नापेक्षते तत् **स्वतःप्रमाणं,** यश्चापेक्षते तत् **परतःप्रमाणमिति** विवेकः ॥ ८ ॥

**अथो**द्देशक्रमप्राप्तं प्रमेयं विभजते—

**"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्"** ॥ ९ ॥

न प्रमाणविषयमात्रमिह प्रमेयमभिमतम्, **अपि च?** विशिष्टमिति सूचयितुं "तु" शब्दः । **अथवा** यौगिकं प्रमेयमत्र न विवक्षितम्, **अपि च?** पारिभाषिकमिति सूचयितुं "तु" शब्दः । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः=यथावचनं विग्रहः, चार्थे द्वन्द्वसमास इतरेतरयोगः, आत्मा च शरीरञ्चेन्द्रियाणि चार्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलञ्च दुःखञ्चापवर्गश्च ते तथा, आत्माद्यपवर्गान्ताः द्वादशपदार्थाः प्रमेयं=प्रमेयपदवाच्या इत्यर्थः ।

**यद्यपि** पृथिव्यादीनि द्रव्याणि, रूपादयो गुणाः, उत्क्षेपणादीनि कर्माणि, सामान्यं विशेष इति द्विविधं सामान्यं, नित्यद्रव्यवृत्तयोऽन्त्याः

विशेषाः, समवायश्चेत्यनेकविधं प्रमेयं, **तथापि** न तत्सर्वमत्र विवक्षितं **किन्तु** द्रव्यादीनां तेषां यस्य यस्य तत्त्वज्ञानं निःश्रेयसायात्यन्तमुपयुक्तं तदेवेह विशिष्टं प्रमेयं विवक्षितं, तच्चात्माद्यपवर्गान्तं द्वादशविधमेव न न्यूनं नाप्यधिकमिति भावः ॥

**ज्ञातं सम्यक् स्वरूपेण यन्मोक्षाय विनिश्चितम् ।**
**तत्प्रमेयमिहाभीष्टं न प्रमाणार्थमात्रकम् ॥ १ ॥**

**तत्र** सुखदुःखयोर्भोक्ता जीव **आत्मा**, भोगायतनं **शरीरं**, भोगसाधनानि **इन्द्रियाणि**, भोक्तव्याः इन्द्रियार्था **अर्थाः**, भोगो **बुद्धिः**, सर्वविषयमन्तःकरणं **मनः**, धर्माधर्मौ **प्रवृत्तिः**, प्रवृत्तिहेतुरागादयो **दोषाः**, पुनः पुनर्जन्म **प्रेत्यभावः**, ससाधनसुखदुःखोपभोगः **फलम्**, प्रतिकूलवेदनीयं पीडात्मकं **दुःखम्**, दुःखात्यन्तनिवृत्तिपूर्वकः परमानन्दोपभोगोऽ**पवर्ग** इति विवेकः ॥ ९ ॥

**तत्र** प्रथमोद्दिष्टमात्मानं लिलक्षयिषुस्तत्सद्भावे लक्षणभूतं लिङ्गमाह—

**"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्"** ॥ १० ॥

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानि=इच्छा च द्वेषश्च प्रयत्नश्च सुखञ्च दुःखञ्च ज्ञानञ्च तान्येतानि षडात्मनः=प्रत्यगात्मनो लिङ्गं=सद्भावे प्रमाणमित्यर्थः ।

**"हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम्"** (वै०—९।२।४) इत्युक्तत्वाल्लिङ्गं प्रमाणम् । यस्य सद्भावे षडिच्छादयो गुणाः प्रमाणं स आत्मा । **किमुक्तं?** यस्तावद्गुणः स द्रव्याश्रितो दृष्टः यथा रूपम् । इच्छादयोऽपि गुणाः । नच तेऽयावद्द्रव्यभाविनोऽहम्प्रत्ययसमानाधिकरणाः बाह्येन्द्रियाप्रत्यक्षाः सन्तः पृथिव्यादीनि द्रव्याणि कथञ्चिदाश्रयितुमर्हन्ति । द्रव्येण च तदाश्रयेणावश्यं भवितव्यम् । अतो यद् द्रव्यं तेषामाश्रयः स आत्मेति भावः ॥

**तत्र** स्वार्थे परार्थे वाऽप्राप्तार्थप्रार्थनम् **इच्छा**, यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते स द्विष्टसाधनताज्ञानजन्यो गुणो **द्वेषः**, कृतिपर्य्या-

यश्चेष्टाजनको गुणः **प्रयत्नः**, धर्मजन्यमनुकूलवेदनीयं गुणः **सुखम्**, अधर्मजन्यंप्रतिकूलवेदनीयं गुणो **दुःखम्**, इन्द्रियार्थसन्निकर्षादिभिरुत्पन्ना बुद्धि**र्ज्ञान**मिति विवेकः ॥

**इदमत्र बोध्यम्**—यद्यप्यत्र लिङ्गमुखेनेच्छादीनुपन्यस्य "तदाश्रयत्वमात्मत्वम्" इति प्रत्यगात्मनो लक्षणमभिहितं, **तथापि** तन्मनोयोगविशिष्टस्यैव विज्ञातव्यं न केवलस्य। तस्य कूटस्थनित्यत्वेनानित्येच्छादिगुणाश्रयत्वानभ्युपगमात्। धर्मोपचयापचयाभ्याञ्च धर्मिविकारस्य सर्वतन्त्रसिद्धत्वात्। मुक्त्यवस्थायाञ्च मनोयोगनिवृत्त्या निखिलगुणनिवृत्तेरभिधास्यमानत्वात्। शरीरादिकं समानजातीयं, प्रमाणसंशयादिकञ्चासमानजातीयं, ताभ्यां व्यवच्छेदलक्षणस्य च प्रयोजनस्य विशिष्टलक्षणेऽप्युपपत्तेर्न कश्चिद्दोषइति ॥ १० ॥

**शरीरं** लक्षयति—

**"चेष्टेन्द्रियार्थाश्रयः शरीरम्"** ॥ ११ ॥

चेष्टेन्द्रियार्थाश्रयः=हिताहितप्राप्तिपरिहारानुकूला क्रिया **चेष्टा**, भोगसाधनानि घ्राणादीनि **इन्द्रियाणि**, भोक्तव्याः गन्धरसादयो गुणा **अर्थाः**, चेष्टा चेन्द्रियाणि चार्थाश्च ते तथा, तेषामाश्रयो यत् तत् शरीरं=शरीरपदवाच्यमित्यर्थः ।

**यद्धि** हिताहितप्राप्तिपरिहारानुकूला क्रिया तावदधितिष्ठति, येन चानुगृहीतानीन्द्रियाणि स्वस्वविषयान् निपुणतरं गृह्णन्ति, यस्मिँश्च सति गन्धादयोऽर्थाः सुखदुःखोपलब्धौ निमित्तत्वमुपगच्छन्ति, तद् शरीरम्। **किमुक्तम्?** ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य पुंसस्तदुपायानुष्ठानलक्षणा समीहापरपर्य्याया चेष्टा यत्र वर्तते, यस्यानुग्रहेण चानुगृहीतान्युपघातेन चोपहतानीन्द्रियाणि स्वस्वविषयेषु साध्वसाधुषु प्रवर्तन्ते, यस्मिँश्चार्थेभ्यो जायमानयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते तद् शरीरम्। **किंबहुना**—आधारत्वेन चेष्टायाः अनुग्राहकत्वेनेन्द्रियाणां भोगसाधनभावनिमित्तत्वेन चार्थानामाश्रयो यः तत् शरीरमिति भावः॥

**इदमत्र बोध्यम्**—"भोगायतनं शरीरम्" इति वक्तव्ये "चेष्टेन्द्रियार्थाश्रयः शरिरम्" इति लक्षणाभिधानं शरीरस्य भोगायतनत्वलाभार्थम्। नहि चेष्टादीनामनाश्रयः कश्चिद् भोगायतनमुपपद्यते। लक्षणस्य प्रयोजनन्तु समानजातीयेभ्य आत्मादिभ्योऽसमानजातीयेभ्यश्च प्रमाणसंशयादिभ्यो व्यवच्छेदः। तच्चोक्तलक्षणेऽप्युपपन्नतरम्। अतो न काचिदनुपपत्तिरिति ॥ ११ ॥

इन्द्रियाणि विभज्य लक्षयति—

**"घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" ॥ १२ ॥**

घ्राणरसनचक्षुस्त्वक्श्रोत्राणि=घ्राणञ्च रसनञ्च चक्षुश्च त्वक् च श्रोत्रञ्च, तान्येतानि पञ्चेन्द्रियाणि=इन्द्रियपदवाच्यानि भूतेभ्यः=पृथिव्यादिभ्यः पञ्चभूतेभ्यः प्रादुर्भवन्तीत्यर्थः।

**यद्** भोगसाधनं तदिन्द्रियं। **किमुक्तं?** शरीराश्रयं सत्स्वसंयुक्तेऽर्थे ज्ञातुरपरोक्षप्रतीतिसाधनं यद् द्रव्यं तदिन्द्रियमिति इन्द्रियसामान्यलक्षणम्। तदेतद् द्विविधम्—आभ्यन्तरं बाह्यञ्च। सर्वविषयमन्तःकरणं मन आभ्यन्तरम्। तदग्रे स्वयं लक्षयिष्यति। बाह्यन्तु घ्राणं रसनं चक्षुः स्पर्शनं श्रोत्रञ्चेति भेदात्पञ्चविधम्। तत्र येन जिघ्रति तद् घ्राणं, **किमुक्तं?** गन्धग्राहकं यदिन्द्रियं तद् **घ्राणम्।** येन रसयति तद् रसनं, **किमुक्तं?** रसग्राहकं यदिन्द्रियं तद् **रसनम्।** येन चेष्टते तद् चक्षुः, **किमुक्तं?** रूपग्राहकं यदिन्द्रियं तच्चक्षुः। येन स्पृशति तत् स्पर्शनं, **किमुक्तं?** स्पर्शग्राहकं यदिन्द्रियं तद् **स्पर्शनम्।** इदञ्च त्वक्स्थानत्वात्, **"त्वक्"** इति व्यपदिश्यते, यथा मञ्चस्थानत्वात्पुरुषो मञ्च इति। येन शृणोति तद् श्रोत्रं, **किमुक्तं?** शब्दग्राहकं यदिन्द्रियं तत् **श्रोत्रम्,** इति पञ्चानां पञ्च विशेषलक्षणानि। तानि चैतानि पञ्चेन्द्रियाणि यथाक्रमं पृथिव्यादिपञ्चभूतप्रकृतिकानि। **किमुक्तं?** पृथिवीप्रकृतिकं घ्राणं, जलप्रकृतिकं रसनं, तेजःप्रकृतिकं चक्षुः, वायुप्रकृतिकं स्पर्शनं, व्योमप्रकृतिकञ्च

श्रोत्रम्। **किंबहुना**—यं विशेषगुणं हि यदिन्द्रियं नियमेन गृह्णाति तत्तत्समवायिद्रव्यप्रकृतिकं द्रव्यमिति निश्चेतव्यम्। इन्द्रियाणामात्मप्रकृतिगुणग्राहकत्वनियमात्। पृथिवीविशेषगुणं गन्धं घ्राणं पयोविशेषगुणं रसं रसनं तेजोविशेषगुणं रूपं चक्षुः वायुविशेषगुणं स्पर्शं स्पर्शनम्, आकाशविशेषगुणं शब्दं श्रोत्रं नियमेन गृह्णाति। **तेन** भवति प्रतिपत्तिः **नूनं** पृथिवीप्रकृतिकं घ्राणं, पयःप्रकृतिकं रसनं, तेजःप्रकृतिकं चक्षुः, वायुप्रकृतिकं स्पर्शनम्, आकाशप्रकृतिकञ्च श्रोत्रमिति भावः॥

**ननु** कानि तानि भूतानि येभ्यो घ्राणादीनीन्द्रियाणि प्रभवन्ति? तत्राह—

**"पृथिव्यापस्तेजोवायुराकाशमिति भूतानि"** ॥ १३ ॥

स्पष्टम्।

**तत्र** बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं **भूतत्वं,** द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्ति–गुणवृत्ति–जातिमत्त्वञ्च **विशेषगुणत्वमिति** विवेकः॥ १३॥

**अर्थं** विभज्य लक्षयति—

**"गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः"** ॥ १४ ॥

अत्रोद्देशक्रमसारिता अर्थाः लक्ष्यतया प्रतिपत्तव्याः। पृथिव्यादिगुणाः=पृथिव्यादीनां पञ्चभूतानां विशेषगुणाः गन्धरसरूपस्पर्शशब्दाः= गन्धरसरूपस्पर्शशब्दाभिधानाः ये तदर्थाः=तेषां घ्राणादीनामिन्द्रियाणामर्थाः विषयास्ते अर्थाः=अर्थपदवाच्या इत्यर्थः।

**तत्रोद्देशक्रमसारितम्—"अर्थाः"** इति लक्ष्यपदं **"तदर्थाः"** इति लक्षणम्। घ्राणादिभिरिन्द्रियैरर्ष्यमाणत्वमर्थत्वमिति तदभिप्रायः। गन्धत्वादयोऽर्थाः माभूवन्नत उक्तं **पृथिव्यादिगुणाः**। ते च के इति विभागाकांक्षायामुक्तं **गन्धरसरूपस्पर्शशब्दाः** इति विवेकः॥

**इदमत्र बोध्यम्**—यथाहि वैशेपिकाणां द्रव्यगुणकर्मस्वर्थशब्दः पारि-

भाषिकः "अर्थ इति द्रव्यगुणकर्मसु" (वै०—८।२।३) इत्युक्तत्वात्। न तथा नैयायिकानां **किन्तु** विषयापरपर्य्यायः। **विषयाश्च** यद्यपि गन्धादिवदिन्द्रियाणां संख्यापरिमाणसंयोगविभागादयो गुणाः पृथिव्यप्तेजाँसि द्रव्याणि, कर्म, सामान्यविशेषश्चेत्यनेकविधा विद्यन्ते, **तथापि** न ते गन्धादिनिरपेक्षाः सन्तः पुरुषाणां सक्तिहेतवोऽपि **च** ? तत्सापेक्षा-इत्यन्वयव्यतिरेकाभ्यां गन्धादिषु पञ्चस्वेव प्राधान्येन सक्तिहेतुता व्यवतिष्ठते। तस्याश्च तत्रैव व्यवस्थानाद् युक्तो पञ्चानामेव तेषां विषयवाचिनाऽर्थशब्देन निर्देश इति ॥ १४ ॥

बुद्धिं लक्षयति—

**"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्"** ॥ १५ ॥

बुद्धिः=बोधः, उपलब्धिः=उपलम्भः, ज्ञानं=ज्ञप्तिः, इति=इत्येतत् त्रयमनर्थान्तरं=नान्यार्थकं समानार्थकमित्यर्थः।

**एतैः** पर्य्यायशब्दैर्यः पदार्थोऽभिधीयते, **किमुक्तं?** यन्निबन्धनः प्रत्यगात्मनि बुध्ये चोपलभे च जाने चेति व्यवहारः प्रवर्तते, सा **बुद्धि**-रिति भावः ॥ १५ ॥

क्रमप्राप्तं मनो लिलक्षयिषुस्तत्सद्भावे लिङ्गमाह—

**"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"** ॥ १६ ॥

युगपज्ज्ञानानुत्पत्तिः=आत्मेन्द्रियार्थसन्निकर्षे सत्यपि तत्तदर्थगोचरज्ञानानां यो युगपदनुत्पादः, तन्मनसः=मनःसंज्ञकस्येन्द्रियस्य लिङ्गं=सद्भावे प्रमाणमित्यर्थः।

**आत्मेन्द्रियार्थसन्निकर्षे** सत्यपि युगपज्ज्ञानानि नोत्पद्यन्ते। **चेदसौ** कारणान्तरसंयोगनिरपेक्षस्तद्धेतुर्भवेत् **तदाऽ**वश्यमुत्पद्येरन्। तेषां युगपदनुत्पादेन भवत्यनुमानम् अस्ति नूनं किञ्चित्कारणान्तरं यस्य संयोगादेकत्र ज्ञानमुत्पद्यतेऽसंयोगाच्चापरत्र नोत्पद्यते। **किमुक्तम्?** आत्माधिष्ठितानां घ्राणादीनामिन्द्रियाणां गन्धादिभिः स्वस्वविषयैः सन्निकर्षे सत्यपि यस्य

कारणान्तरस्यासंयोगाद् रसनेन रसगोचरं ज्ञानं न जन्यते घ्राणेन च संयोगाद् गन्धगोचरं ज्ञानं जन्यते तदेव कारणान्तरं **मन** इति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि नैयायिकैर्मध्यमपरिमाणं मनोऽभ्युपगम्यते, तस्य च सर्वदा घ्राणादिभिरिन्द्रियैः संयोगो विद्यते नासंयोगः, **तथापि** नेदृशः संयोगोऽत्र ज्ञानहेतुर्विवक्षितः । तस्य साधारणत्वेन ज्ञानप्रयोजकत्वाभावात् । **अपि** चात्मकृत्या तत्तदिन्द्रियप्रदेशे लब्धवृत्तिकस्य मनसः संयोगः । स चासाधारण एव न साधारणोऽतो न कश्चिद्दोष इति॥

**प्रवृत्तिं** लक्षयति—

**"प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः"** ॥ १७ ॥

वाग्बुद्धिशरीरारम्भः=वागिन्द्रियं **वाग्**, बुध्यतेऽनयेति बुद्धि**र्मनः**, चेष्टाश्रयः **शरीरम्**, आरभ्यते इत्यारम्भो **व्यापारः**, शुभाशुभकर्मेति यावत्, वाक् च बुद्धिश्च शरीरञ्च तानि तथा, तेषां य आरम्भः=व्यापृतिर्विहितनिषिद्धक्रियेति यावत्, सा प्रवृत्तिः=प्रवृत्तिपदवाच्येत्यर्थः ।

**यद्** धर्माधर्मजनकं वाचा मनसा शरीरेण च विहितं निषिद्धं कर्म क्रियते । **किमुक्तं?** यद् वाचिकं मानसं कायिकञ्च पुण्यपापात्मकं कर्म सा प्रवृत्तिरिति भावः ॥ १८ ॥

**दोषं** लक्षयति—

**"प्रवर्तनालक्षणा दोषाः"** ॥ १९ ॥

प्रवर्तनालक्षणाः=विहितनिषिद्धकर्मप्रवृत्तिहेतुता प्रवर्तना, प्रवर्त्यतेऽनया शुभाशुभकर्मसु पुरुष इति तद्व्युत्पत्तेः, सैव लक्षणं समानासमानजातीयव्यवच्छेदकं येषां ते प्रवर्तनालक्षणाः रागादयो दोषाः=दोषपदवाच्या इत्यर्थः ।

**यत्प्रयुक्तो**हि पुरुषः पुण्ये पापे च कर्मणि प्रवर्तते । **किमुक्तं?** पुण्ये पापे च कर्मणि प्रवर्तमानं पुरुषं यः प्रवर्तयति स रागादिदोष इति भावः ॥

**इदमत्र बोध्यम्**—रागद्वेषपूर्विका हि निखिला धर्माधर्मप्रवृत्तिरिति

सर्वतन्त्रसिद्धान्तः। रागद्वेषौ च दोषौ मोहप्रभवौ यावन्मोहोऽनुवर्तते तावत्पुरुषोऽपि तद्वशः परिस्पन्दते, न कदाचिदुपरमते। मोहश्च कारणत्वेन रागद्वेषौ सततमन्वेति। तेन द्विविधः सन्नपि दोषः स्वकारणेन मोहेन त्रिविधः उपपन्नः। तस्य त्रैविध्योपपत्तेश्च युक्तः सूत्रेऽपि "दोषाः" इति बहुवचनेन तन्निर्देश इति ॥ १८ ॥

**संसारकाराभवनप्रवेशमार्गास्त एते त्रय एव दोषाः।**
**एषां प्रहाणोद्यममादधानो न जन्ममृत्यू पुनरभ्युपैति॥१॥**

प्रेत्यभावं लक्षयति—

**"पुनरुत्पत्तिः प्रेत्यभावः" ॥ १८ ॥**

पुनरुत्पत्तिः=मृत्वा पूर्वशरीरं हित्वा पुनरुत्पादः शरीरान्तरोपग्रहः प्रेत्यभावः=प्रेत्यभावशब्दवाच्य इत्यर्थः।

या खलु प्रत्यगात्मनः पूर्वोपात्तशरीरादिपरित्यागेनान्यशरीरादेरुपसङ्क्रान्तिः स प्रेत्यभावः। **किमुक्तम्?** अपूर्वाभिः शरीरेन्द्रियमनोवेदनाभिरात्मनो वियोगो **मरणं** संयोगश्च **जन्म,** ते चोभे मरणजन्मनी क्रियाभ्यावृत्त्या भवन्ती प्रेत्यभावः। **किंबहुना** यत्र क्वचित्प्राणिनिकाये वर्तमानः पुरुषोऽयं यत्पूर्वोपात्तान् देहादीन् जहाति तन्मरणं, यत्तत्रान्यत्र वाऽन्यान् देहादीनुपादत्ते तज्जन्म, तयोश्च यः पुनः पुनरभ्यासोऽनादिरपवर्गान्तः स **प्रेत्यभावः** इति भावः ॥ १९ ॥

फलं लक्षयति—

**"प्रवृत्तिदोषजनितोऽर्थः फलम्" ॥ २० ॥**

प्रवृत्तिदोषजनितः=पूर्वोक्तलक्षणाभ्यां प्रवृत्तिदोषाभ्यामुत्पादितोऽर्थः=जात्यायुर्भोगलक्षणोऽर्थः फलमित्यर्थः।

प्रवृत्त्या दोषैश्च जात्यायुर्भोगलक्षणो योऽर्थस्तावदुत्पाद्यते तत्फलमिति भावः॥

**तत्र** प्रवृत्तिजनितोऽर्थः फलमिति वक्तव्ये दोषग्रहणं न केवलं प्रवृत्तिं

प्रति दोषाणां हेतुभावोऽपितु जात्यायुर्भोगलक्षणप्रवृत्तिकार्य्यं प्रत्यपीति प्रदर्शनार्थम् । **किमुक्तं ?** प्रवृत्तिमूलं तावद्दोषाः यावत्तत्त्वज्ञानेन नोच्छिद्यन्ते तावत्प्रवृत्तिरुक्तलक्षणं कार्य्यं प्रसूते "**सतिमूले तद्विपाको जात्यायुर्भोगाः**" (यो०–२।१४) इति योगसूत्रात्, नान्यथा, तदेतदप्रदर्शितमिव माभूदिति दोषपदमुपात्तम् । जात्यायुर्भोगानाञ्च सुखदुःखसंवेदनात्मको भोगो मुख्यं फलं, जन्मायुषी तु तच्छेषत्वाद्गौणमिति विवेकः ॥२०॥

**दुःखं** लक्षयति—

**"बाधनालक्षणं दुःखम्" ॥ २१ ॥**

बाधनालक्षणं=बाधना पीडा, सैव लक्षणं समानासमानजातीयव्यवच्छेदकं यस्य तद् दुःखमित्यर्थः ।

**यदुत्पन्नं** भवद् बाधयति पीडयति **तद्** दुःखम् । **किमुक्तं ?** यत्प्रतिकूलवेदनीयं तद् **दुःखमि**ति भावः ॥

**तत्र** दुःखं द्विविधं मुख्यं गौणं च । **यत्स्वतः** पीडात्मकं **तन्मुख्यं** यत्त्वसति **स्वराज्ये** तत्साधनं तद् **गौण**मिति विवेकः ॥ २१ ॥

**अपवर्गं** लक्षयति—

**"तदत्यन्तविमोक्षोऽपवर्गः" ॥ २२ ॥**

निःश्रेयसं कैवल्यं मुक्तिरपवर्ग इत्यनर्थान्तरम् । तदत्यन्तविमोक्षः=तस्मादुक्तलक्षणकाद् दुःखाद् यः प्रत्यगात्मनोऽत्यन्तोऽन्तमतिक्रान्तो विमोक्षो विमुक्तिः सोऽपवर्गः=अपवर्गपदार्थ इत्यर्थः ।

**यस्तावदुक्तलक्षणेन** दुःखेन प्रत्यगात्मनोऽन्तमतिक्रान्तो वियोगः, **किमुक्तम् ?** उक्तलक्षणस्य दुःखस्य याऽत्यन्ता निवृत्तिः **सोऽपवर्ग** इति भावः॥

**इदमत्र बोध्यम्**—यद्यपीह "**दुःखात्यन्तविमोक्षोऽपवर्गः**" इति मोक्षलक्षणं सूत्रितं **तथापि** "दुःखात्यन्तविमोक्षपूर्वको ब्रह्मानन्दोपभोगो मोक्षः" इति तल्लक्षणं द्रष्टव्यम् । वैदिकानां तत्त्वज्ञानेन दुःखात्यन्तनिवृत्त्या चिदात्मना स्वेन ब्रह्मानन्दोपभोगस्यैव मोक्षत्वाभ्युपगमात् ।

ब्रह्मानन्दोपभोगश्च दुःखात्यन्तनिवृत्तिनान्तरीयको न यत्ननिष्पाद्यः, दुःखात्यन्तनिवृत्तिस्तु यत्ननिष्पाद्या, तस्मात्सैवापवर्ग इत्युक्तमिति ॥

तत्र मृत्युरेव मोक्ष इति देहात्मवादिनो **लोकायतिकाः** । आत्मोच्छेदो मोक्ष इति शून्यवादिनो **माध्यमिकाः** । भावनाप्रचयान्निखिलदुःखवासनोच्छित्तौ विषयाकारोपप्लवाभावेन विशुद्धविज्ञानसन्तानोदयो मोक्ष इति विज्ञानवादिनो **योगाचारप्रमुखाः सर्वे बौद्धाः** । आवरणमोक्षो मोक्ष इत्यनेकान्तवादिनो **जैनाः** । अहं ब्रह्मासीतिवाक्यजन्याखण्डाकारवृत्त्याऽविद्यानिवृत्तौ जीवात्मनः सच्चिदानन्दब्रह्मलक्षणस्वस्वरूपाधिगमो मोक्ष इति मायावादिनः **शाङ्कराः** । जगत्कर्तृत्वं विहाय सर्वज्ञत्वादिनिखिलकल्याणगुणप्राप्तिपूर्वको वासुदेवयाथात्म्यानुभवो मोक्ष इति विशिष्टाद्वैतवादिनो **रामानुजीयाः** । जगत्कर्तृत्वलक्ष्मीपतित्वश्रीवत्सवर्जं भगवज्ज्ञानायत्तनिर्दुःखपूर्णसुखं मोक्ष इति द्वैतवादिनो **माध्वाः** । द्विभुजकृष्णेन सार्धं स्वांशभूतानां जीवानां गोलोके लीलानुभवो मोक्ष इति शुद्धाद्वैतवादिनो **वल्लभीयाः** । स्वराज्येन गौणस्यात्मतत्त्वज्ञानेन च मुख्यस्य दुःखस्यात्यन्तनिवृत्त्या चिदात्मना स्वेन ब्रह्मानन्दोपभोगो मोक्ष इति वेदवादिनो **गोतमप्रमुखाः सर्वे दर्शनकृत** इति विवेकः ॥ २२ ॥

**प्रमाणं** प्रमेयं च विभज्य लक्षितं, सम्प्रति क्रमप्राप्तं संशयं तावद्विभज्य लक्षयति—

**"समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः"** ॥ २३ ॥

समानानेकधर्मोपपत्तेः=समानधर्मोपपत्तेरनेकधर्मोपपत्तेः—साधारणो धर्मः समानधर्मः, अनेकेभ्यः समानासमानजातीयेभ्यो व्यावर्तको धर्मोऽसाधारणो धर्मोऽनेकधर्मः, तयोरुपपत्तिरुपलम्भस्तस्मात् साधारणधर्मोपलम्भाद् असाधारणधर्मोपलम्भाद्, **अनेन** धर्म्युपलम्भोऽपि सङ्गृह्यते, **तेन** साधारणधर्मवतोऽसाधारणधर्मवतश्च धर्मिणः प्रत्यक्षादिति निष्कर्षः, विप्रतिपत्तेः=विरुद्धकोटिद्वयोपस्थितेः, उपलब्ध्यनुपलब्ध्यव्यवस्थातः=एकतर-

कोटिनिश्चायकस्य विशेषधर्मस्यैकत्रोपलब्धेरपरत्रानुपलब्धेश्चाव्यवस्थानात्, चकारेण दुरदृष्टं समुच्चीयते, दुरदृष्टाच्च विशेषापेक्षः=सामान्यविशेषस्मृतिपूर्वको यो विमर्शः=मृशिर्ज्ञाने, विरुद्धार्थावमर्शः एकस्मिन् धर्मिणि विरुद्धनानाधर्मावगाही किंस्विदिति प्रत्ययो जायते स संशयः=संशयपदवाच्य इत्यर्थः ।

**यदा** हि प्रतिपत्ताऽयमुभयकोटिसाधारणं तदसाधारणं वा कञ्चिद् धर्मं क्वचिदेकस्मिन् धर्मिणि प्रतिपद्यते विरुद्धकोटिद्वयोपस्थापकशब्देन वा विप्रतिपद्यते **तदा**ऽस्य प्रतिपत्तुरेकतरकोटिनिश्चायकस्य विशेषधर्मस्य तत्रोपलब्धेरपरत्र चानुपलब्धेरव्यवस्थितौ सत्यां सामान्यविशेषस्मृतिपूर्वको यः किंस्विदिति प्रत्ययः समुत्पद्यते स संशय इति भावः ॥

**तत्र** "विमर्शः संशयः" इति संशयसामान्यलक्षणम् । समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेरिति त्रीणि प्रत्येकं शेषपदैरुपेतानि च विशेषलक्षणानि । **किमुक्तं ?** समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इत्येकं लक्षणम् । अनेकधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति द्वितीयं लक्षणम् । विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति तृतीयं लक्षणम् । **समानधर्मोपपत्तेः**=कोटिद्वयसहचरितस्य समानधर्मस्योच्चैस्तरत्वादेरुपपत्तेरुपलम्भात्, **अनेन** धर्म्युपलम्भोऽपि सङ्गृह्यते, तेनोक्तसाधारणधर्मवतो धर्मिणः प्रत्यक्षादित्यभिप्रायः, **उपलब्ध्यनुपलब्ध्यव्यवस्थातः**=वक्रकोटरादिविशेषधर्मस्य स्थाणावुपलब्धेः पुरुषे चानुपलब्धेः, शिरःपाण्यादिविशेषधर्मस्य पुंस्युपलब्धेः स्थाणौ चानुपलब्धेरव्यवस्थानात् धर्मिविशेषनिश्चायकस्य वक्रकोटरशिरःपाण्यादेरसाधारणधर्मस्योपलम्भाभावादिति यावत्, **विशेषापेक्षः**=स्थाणुत्व-पुरुषत्वादिसामान्यविशेषो विशेषस्तमपेक्षते कामयते कारणत्वेनेति विशेषापेक्षः, तस्यापेक्षा वा यस्यासौ विशेषापेक्षः, **अपेक्षा** इच्छा, **तस्या** अनुभूयमानविशेषत्वनियमात् स्थाणुत्व-पुरुषत्वादिसामान्यविशेषस्मृतिपूर्वक-

इति यावत् यो **विमर्शः**=विरुद्धार्थावमर्शः **"स्थाणुर्वा पुरुषो वा"** इत्यादिरूपः प्रत्ययः स **संशय** इति प्रथमलक्षणस्यार्थः ।

**अनेकधर्मोपपत्तेः**=समानासमानजातीयकादनेकसाद्विशेषकस्य श्रावणत्वादिलक्षणस्यासाधाणधर्मस्योपपत्तेरुपलम्भात् श्रावणत्वादिलक्षणासाधारणधर्मवतः शब्दस्य धर्मिणः प्रत्यक्षादिति यावत्, **उपलब्ध्यनुपलब्ध्यव्यवस्थातः**=द्रव्याश्रयित्वादिविशेषधर्मस्य शब्दे तावदुपलब्धेर्द्रव्यादौ चानुपलब्धेरव्यवस्थितत्वात् द्रव्याश्रयित्वादेर्विशेषधर्मस्योपलम्भाभावादिति यावत् **विशेषापेक्षः**=गुणत्वद्रव्यत्वादिसामान्यविशेषस्मृतिपूर्वको यो **विमर्शः**="शब्दो गुणो वा द्रव्यं वा कर्म वा" इत्यादिरूपो विरुद्धार्थावमर्शः स **संशय** इति द्वितीयलक्षणस्यार्थः ।

**विप्रतिपत्तेः**=अस्त्यात्मेत्येके, नास्त्यात्मेत्यपरे, इत्यादिविरुद्धकोटिद्वयोपस्थितिर्विप्रतिपत्तिस्ततः, **उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च**=आत्मास्तित्व-नास्तित्वनिश्चायकस्य प्रामाणिकत्वाप्रामाणिकत्वरूपविशेषधर्मस्योपलब्धेरनुपलब्धेश्चाव्यवस्थितत्वात् प्रामाणिकत्वाप्रामाणिकत्वरूपविशेषधर्मस्याग्रहादिति यावत्, **विशेषापेक्षः**=अस्तित्वनास्तित्वरूपसामान्यविशेषस्मृतिपूर्वको यो **विमर्शः**="आत्माऽस्ति नास्ति वा" इत्यादिरूपो विरुद्धनानाधर्मावगाही प्रत्ययः स **संशय** इति तृतीयलक्षणस्यार्थः ।

**अत्र** समानानेकधर्मोपपत्तौ विप्रतिपत्तौ च सत्यामपि वक्रकोटरशिरःपाण्यादिविशेषधर्मदर्शिनो न दृष्टः संशयः, अत उक्तम् **"उपलब्ध्यनुपलब्ध्यव्यवस्थातः"** इति । **तथापि** प्रेक्षारूढस्य साधारणादिधर्मदर्शिनो विशेषधर्ममपश्यतोऽपि न दृष्टः संशयः, अत उक्तं **"विशेषापेक्षः"** इति । **सर्वकारणेषु** चैषु साधारणधर्मोपपत्तिरसाधारणधर्मोपपत्तिर्विप्रतिपत्तिश्चेत्येतत् त्रयं **मुख्यं** कारणम्, इतरद् द्वयञ्च **सहकारि** कारणमिति विवेकः ॥ २३ ॥

**अथ** प्रयोजनं लक्षयति—

**"यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥"**

अत्र "अर्थ" शब्दो नेन्द्रियार्थमाह, नापि द्रव्यगुणकर्माणि, किन्त्वर्थ्यमानमात्रम्, अर्थ्यते यः सोऽर्थ इति तद्व्युत्पत्तेः। यं=यं यमर्थम्=अर्थ्यमानमधिकृत्य=उद्दिश्य प्रवर्तते=तत्सम्पादनाय परिसन्दते तत्=तत्सर्वं प्रयोजनं=प्रयोजनपदवाच्यमित्यर्थः।

**यद्धि** सततमर्थ्यते, **किमुक्तं** ? यदर्थनाप्रयुक्तः खलु पुरुषस्तत्सम्पादनाय चेष्टते, चेष्टमानश्च मध्ये रक्षोभिर्विघ्नैः शतधापीड्यमानोऽपि न जातु निवर्तते, **तत्** सुखदुःखाप्तिहानी तत्साधनं स्वराज्यादिकं च **प्रयोजनं** प्रयुज्यतेऽनेनेति तद्व्युत्पत्तेरिति भावः॥

**तत्र** प्रयोजनं द्विविधं मुख्यं गौणञ्च। सुखदुःखाप्तिहानी **मुख्यम्**, इतरेच्छानधीनेच्छाविषयत्वात्। तत्साधनं स्वराज्यादिकं **गौणम्**, इतरेच्छाधीनेच्छाविषयत्वादिति विवेकः॥ २४॥

**दृष्टान्तं** लक्षयति—

**"लौकिकपरीक्षकाणां यस्मिन्नर्थे**
**बुद्धि-साम्यं स दृष्टान्तः"** ॥ २५॥

लौकिकपरीक्षकाणां=नैसर्गिकं वैनयिकं च बुद्ध्यतिशयमप्राप्ताः लौकिकाः, तद्विपरीतास्तदुभयं प्राप्ताः परीक्षकाः, तेषामुभयेषां वादिप्रतिवादिनामिति यावत्, यस्मिन्नर्थे=भावात्मकेऽभावात्मके वा यस्मिन्नर्थे बुद्धिसाम्यं=प्रयोज्यप्रयोजकभावव्यवस्थितसाध्यसाधनाधिकरणताबुद्धेः साध्याभावपूर्वकसाधनाभावाधिकरणताबुद्धेर्वा समत्वं तुल्यत्वं वर्तते स=सोऽर्थो दृष्टान्तः=दृष्टान्तपदवाच्य इत्यर्थः।

**यस्मिन्नर्थे** वादिबुद्धिवत् प्रतिवादिबुद्धिरपि प्रयोज्यप्रयोजकभावेन व्यवस्थितयोः साध्यसाधनयोरन्वयं वा व्यतिरेकं वा गोचरयति, **किमुक्तं** ? यस्मिन्नर्थे वादिबुद्धिवत् प्रतिवादिबुद्धिरपि साध्यसाधर्म्यात्तद्धर्मभावित्वं वा साध्यवैधर्म्यादतद्धर्मभावित्वं वा विषयीकरोति स दृष्टान्तः। **किंबहुना** वादिप्रतिवादिसम्प्रतिपत्तिविषयः व्याप्तिसंवेदनभूमिरिति यावत् योऽर्थः स **दृष्टान्त** इति भावः॥

तत्र दृष्टान्तो द्विविधः साधर्म्यदृष्टान्तो वैधर्म्यदृष्टान्तश्च । अन्वयव्याप्तिसंवेदनभूमिः **साधर्म्यदृष्टान्तः**, व्यतिरेकव्याप्तिसंवेदनभूमि**र्वैधर्म्यदृष्टान्त** इति विवेकः ॥ २५ ॥

**द्विविधोऽपि दृष्टान्तः सुदृष्टिभिर्यत्नतोऽधिगन्तव्यः ।**
**स हि निश्चलः फलनिधेरनुमानमहातरोः स्कन्धः ॥ १ ॥**

**सिद्धान्तं** लक्षयति—

**"तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः"** ॥ २६ ॥

तन्त्राधिकरणाभ्युपगमसंस्थितिः=प्रमाणत्वेनाभ्युपगतं शास्त्रं तन्त्रं, तन्त्र्यते व्युत्पाद्यते प्रमेयजातमनेनेतितद्व्युत्पत्तेः, अधिकरणमाधारः **"आधारोऽधिकरणम्"** ( अष्टा० १।४।४५ ) इति पाणिन्यनुशासनात्, आधारः आश्रय इति चानर्थान्तरम्, अभ्युपगमः स्वीकारः, तन्त्राधिकरणश्चासावभ्युपगमश्चेति तन्त्राधिकारणाभ्युपगमः, तस्य संस्थितिः सम्यक्प्रकारेण निश्चयरूपतया स्थितिर्यस्मिन्नर्थे स तन्त्राधिकरणाभ्युपगमसंस्थितिः प्रमाणभूतशास्त्रमूलकाभ्युपगमविषयीभूतोऽर्थ इति यावत् सिद्धान्तः=सिद्धान्तपदवाच्य इत्यर्थः ।

यस्मिन्नर्थे हि तन्त्राधिकरणोऽभ्युपगमः सन्तिष्ठते, **किमुक्तं ?** प्रामाणिकत्वेन यस्तावदर्थोऽभ्युपगम्यते, स **सिद्धान्त** इति भावः ॥ २६ ॥

तं विभजते—

**"सर्वतन्त्र-प्रतितन्त्राधिकरणाभ्युपगम-संस्थित्यर्थान्तरभावात्"** ॥ २७ ॥

सिद्धान्त इत्यनुवर्तते । सर्वतन्त्राणि च प्रतितन्त्रं चाधिकरणं चाभ्युपगमश्च ते तथा, तेषां याः संस्थितयः तत्तदर्थे सम्यक्स्थितयः, तासामर्थान्तरभावात्-परस्परभेदात् सिद्धान्तश्चतुर्विध इत्यर्थः ।

**सम्यक्स्थितिर्हि** संस्थितिः । न च सा सर्वेषां तन्त्राणामेकविधा सम्भवति । नहि यस्मिन्नर्थे वादितन्त्रं सन्तिष्ठते तस्मिन्नेव प्रतिवादितन्त्रमपि सन्तिष्ठत इति युज्यते, **अन्यथा** वादप्रतिवादानुपपत्तेः । **साऽपं**

सर्वतन्त्रसंस्थितिः प्रतितन्त्रसंस्थितिरधिकरणसंस्थितिरभ्युपगमसंस्थिति-रिति भेदाच्चतुष्प्रकारा । तस्याश्चतुष्प्रकारत्वाच्च युक्तस्तन्निबन्धनः सिद्धान्तोऽपि सर्वतन्त्रसिद्धान्तः, प्रतितन्त्रसिद्धान्तः, अधिकरणसिद्धान्तः, अभ्युपगमसिद्धान्त इति भेदाच्चतुष्प्रकार इति भावः ॥ २७ ॥

**तत्र** सर्वतन्त्रसिद्धान्तं लक्षयति—

**"सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः**
**सर्वतन्त्रसिद्धान्तः"** ॥ २८ ॥

अर्थः=योऽर्थः तन्त्रे=स्वतन्त्रेऽधिकृतः=उपदिष्टः सर्वतन्त्राविरुद्धः=केनापि तन्त्रेण न विरुध्यते, स सर्वतन्त्रसिद्धान्तः=सर्वतन्त्रसिद्धान्तपदवाच्य-इत्यर्थः ।

**यो** ह्यर्थो वादिप्रतिवादितन्त्रेषु समानतयाऽधिक्रियते प्रस्तूयते समुपदिश्यते, **किमुक्तं?** यस्मिन्नर्थे वादिप्रतिवादिनोरुभयोः समाना सम्प्रतिपत्तिर्विद्यते, **किंबहुना** यमर्थं वादिप्रतिवादिनावुभावपि प्रामाणिकतया समानमभ्युपगच्छतः, स **सर्वतन्त्रसिद्धान्तः**, सर्वेषां वादिप्रतिवादितन्त्राणां सिद्धान्त इति तद्व्युत्पत्तेरिति भावः ॥

**तत्र** वैशेषिकाः गौतमाः कापिलाः पातञ्जलाः वैदान्तिकाः मीमांसकाश्च सर्वे **वैदिकाः** वादिनः । बौद्ध-जैन-चार्वाकप्रभृतयः सर्वे **बाह्याः** प्रतिवादिनः । क्वचिदितो वा विपरीतम् । उभयेषां चैषां "सकारणं **जगत्**, सात्मकं **शरीरम्**, श्रेयान् **देशात्माभिमानः**, प्राप्तव्यं **स्वराज्यम्**, अधिगन्तव्यो **मोक्षः**, श्रेयसी **गुरुजनगोष्ठी**, श्रद्धातव्यं **गुरुजनवाक्यम्**, देशात्महितदेशिकाश्च **गुरवः**"इत्यादौ, **वैदिकानां** च सर्वेषाम् "ईश्वरीयो **वेदः**, तद्व्याख्यानानि **ब्राह्मणानि**, वेदप्रणिहितो **धर्मः**, तद्विपर्य्ययोऽ**धर्मः**, वेदः **स्वतःप्रमाणम्**, तदितरत्सर्वं ब्राह्मणप्रभृतिशास्त्रं **परतःप्रमाणम्**, ईश्वरो **निमित्तकारणम्**, प्रकृति-**रुपादानकारणम्**, कार्य्यं निखिलं **जगत्**, निरपेक्षविभुरी**श्वरः**, सापेक्षविभ्वी **प्रकृतिः**, मध्यमपरिमाणं **मनः**, अणुपरिमाणो **जीवा**-

**त्मा**, स च कर्मसु **स्वतन्त्रः**, तद्भोगे **परतन्त्रः**, ईश्वरवत्प्रकृतिवच्च स्वरूपतो**ऽनाद्यनन्तः**, न कदाचिदुत्पद्यते न वा कदाचित्प्रध्वस्यते, सती **प्रकृतिः**, सच्चित्स्वरूपो **जीवात्मा**, सच्चिदानन्दस्वरूपो जगतां पति**रीश्वरः**, तत्त्वज्ञानान्**मोक्षः**, मोक्षाव्यवहितपूर्वभाविनी चेश्वरीयै**श्वर्य-प्राप्तिः**, यत्प्राप्त्या खल्वेष चरमदेहो भगवान् योगी वीतशोको जीवन्मुक्तः परमस्वराट् वशी विहरति, सर्वेषु लोकेषु च यथाकामं चरति, नास्ति किञ्च-नाशक्यं नाम जगद्व्यापारवर्जं यदिच्छन् न कुर्य्यात्, यदिच्छन् न वि-जानीयात्, यद् यथा कामयते तत् तथा सम्पद्यते, यदिच्छति तत्संनिधत्ते, यदिच्छति तन्निर्मिमीते, यत्रेदमुक्तम्—"**एवमप्युपन्यासात् पूर्व-भावादविरोधं बादरायणः**" ( वे० ४।४।७) "**सङ्कल्पादेव तु तच्छ्रुतेः**" (वे० ४।४।८) "**जगद्व्यापारवर्जं प्रकरणादसं-निहितत्वाच्च**" ( ४।४।१७ ) "**जीवन्मुक्तश्च**" ( सां० ३।७८ ) "**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्व-ज्ञातृत्वञ्च**" ( यो० ३ । ४९ ) "**निर्माणचित्तान्यस्मितामा-त्रात्**" (यो० ४।४) इति । **ततश्च** क्षीणे प्रारब्धकर्मणि मोक्षः, यत्रेद-मुक्तं "**भोगेन त्वितरे क्षपयित्वा सम्पद्यते**" (वे० ४।१।१९) इति । **स च** त्रिविधदुःखात्यन्तनिवृत्तिपूर्वको ब्रह्मानन्दोपभोगः । **ततो**ऽपु-नरावृत्तिरित्यु**त्सर्गः**, पुनरावृत्तिरित्य**पवादः** । सा चेश्वराज्ञयाऽधिकारं प्राप्तानां यावदधिकरम्, यत्रेदमुक्तं "**यावदधिकारमवस्थितिराधि-कारिकाणाम्**" ( वे० ३।३।३२ ) इति, **न** पुनः कर्मोज्ञानादितोऽस्स-दादितुल्या । तस्येश्वरदर्शनेन सर्वथा प्रक्षयादित्यादौ सर्वत्र समाना सम्प्रतिपत्तिरिति विवेकः ॥ २८ ॥

**प्रतितन्त्रसिद्धान्तं** लक्षयति—

"**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः**"॥२९॥

तन्त्रेऽधिकृतोऽर्थ इत्यनुवर्तते । समानतन्त्रसिद्धः—योऽर्थः स्वतन्त्रेऽधि-

कृतः समानतन्त्रेषु सिद्धः सन्नपि परतन्त्रासिद्धः=परतन्त्रेषु न सिध्यति नाधिक्रियते स प्रतितन्त्रसिद्धान्तः=प्रतितन्त्रसिद्धान्तपदवाच्य इत्यर्थः।

यस्तावदर्थः स्वतन्त्रे स्वसमानतन्त्रेषु चाधिक्रियमाणोऽपि परतन्त्रेषु नाधिक्रियते **यथा** बौद्धानां **क्षणभङ्गवादः**, वैदिकानां च **जीवेश्वरप्रकृतिवादः**, स **प्रतितन्त्रसिद्धान्तः**, स्वप्रतिकूलस्य तन्त्रस्य सिद्धान्त इति तद्व्युत्पत्तेरिति भावः ॥ २९ ॥

अधिकरणसिद्धान्तं लक्षयति—

**"यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥३०॥**

यत्सिद्धौ=यस्य प्रकृतस्यार्थस्य प्रमाणेन सिद्धौ जातायामन्यप्रकरणसिद्धिः=प्रक्रियते इति प्रकरणं प्रकृतं, ततोऽन्यस्य तदनुपक्तस्यार्थस्य तदन्तर्भावेण स्वयमेव सिद्धिर्जायते सः=प्रमाणेन सिद्धिं प्राप्तः प्रकृतार्थोऽधिकरणसिद्धान्तः=अधिकरणसिद्धान्तपदवाच्य इत्यर्थः ॥

यस्मिन्नर्थे प्रमाणेन सिद्धे सति तदनुषङ्गिणोऽर्थास्तदन्तर्भावेण स्वयमेव सिध्यन्ति, **किमुक्तं ?** प्रमाणेन सिध्यन् योऽर्थः स्वाश्रितानामर्थानामात्मान्तर्भावेण सिद्धिहेतुः, **किंबहुना** यस्यार्थस्य सिद्ध्यैव तदधिष्ठाना अर्थाः सिद्धिमुपयन्ति **यथा** जगत्कर्तृत्वेनेश्वरसिद्धौ **सार्वज्ञ्यादयः**, जीवात्मनित्यत्वसिद्धौ वा **क्षणभङ्गभङ्गादयः**, वेदानामीश्वरीयत्वसिद्धौ वा **स्वतःप्रामाण्यम्**, ऐतरेयादिब्राह्मणानामनीश्वरीयत्वसिद्धौ वा **परतःप्रामाण्यम्**, ईश्वरस्य व्यापकत्वसिद्धौ वा **निराकारत्वम्**, जीवात्मनां नानात्वसिद्धौ वाऽ**णुपरिमाणत्वम्**, सो**ऽधिकरणसिद्धान्तः**, स्वाधिकरणानामर्थानामात्मसिद्ध्यैव सिद्धिहेतुः सिद्धान्तः, अधिकरणभूतो वा सिद्धान्त इति तद्व्युत्पत्तेरितिभावः ॥ ३० ॥

**"अनुमेयस्य सिद्ध्याऽर्थो योऽनुषङ्गेण सिध्यति।**
**स स्यादाधारसिद्धान्तः सर्वशक्तियथेश्वरः ॥ १ ॥**

अभ्युपगमसिद्धान्तं लक्षयति—

**"अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः" ॥ ३१ ॥**

अपरीक्षिताभ्युपगमात्=यस्यापरीक्षितस्यार्थस्याभ्युपगमात् तद्विशेषपरीक्षणं=तद्गतस्य कस्यचिद् धर्मविशेषस्य परीक्षणं जायते, सोऽभ्युपगमसिद्धान्तः=अभ्युपगमसिद्धान्तपदवाच्य इत्यर्थः।

यस्तावदपरीक्षित एवार्थः कस्यचिद् धर्मविशेषस्य परीक्षणाय केवलमापरीक्षाकालं प्रामाणिकत्वेनाभ्युपगम्यते **यथा**ऽस्तु जन्यो जीवात्मा **स** किं सकारणः स्यात् आहोस्विदकारणः? **यथा** वा भवतु जगतः कारणं ब्रह्म, तत्किमसहायं विवर्तते ससहायं वा? **भवतु** वाऽविद्यासहायं ब्रह्म, **सा** किं ब्रह्मणो व्यतिरिक्ता स्यात् आहोस्विदव्यतिरिक्ता, इत्यादि, सः **"अभ्युपगमसिद्धान्तः"** अभ्युपगममात्रेण सिद्धान्त इति तद्व्युत्पत्तेरिति भावः ॥ ३१ ॥

**इमाश्च सिद्धान्तभिदाश्चतस्रो**
**न्यायप्रवृत्तेः प्रथमं निमित्तम्।**
**प्रवर्तते नैव परीक्षकाणा-**
**मनाश्रया न्यायकथा कदाचित् ॥ १ ॥**

अथ क्रमप्राप्तमवयवं लिलक्षयिषुः पूर्वं तावत्तद्विभागमाह—

**"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" ॥ ३२ ॥**

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि=प्रतिज्ञा च हेतुश्चोदाहरणञ्चोपनयश्च निगमनञ्चेति पञ्चावयवाः=अवयवपदार्था इत्यर्थः।

**साधनीयस्यार्थस्य** यावति शब्दसमूहे सिद्धिः परिसमाप्यते तावतः प्रयोक्तव्यस्य शब्दसमूहस्यैकैकशः शब्दात्मको **भागो**ऽवयवः। **स च** प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनमिति भेदात् पञ्चविधः। **किमुक्तं?** स्वयमवगतमर्थमनुमानेन परस्मै प्रतिपादयता प्रयुक्ते

वाक्यविशेषे ये सम्भूयेतरेतरप्रत्ययितेनार्थेनार्थवन्तः सन्तस्तदङ्गतामुपयान्ति ते **"अवयवाः"** इति परिभाष्यन्ते। **ते च** प्रतिज्ञादयः पञ्चेति भावः॥

**तत्रो**पनय इत्येक एवावयव इति **केचित्**। उदाहरणमुपनयश्चेति द्वावेवावयवाविति **बौद्धाः**। उदाहरणोपनयनिगमनानि प्रतिज्ञाहेतूदाहरणानि वेति त्रय एवावयवा इति **सांख्या योगाः पूर्वोत्तरमीमांसकाश्च**। स्वार्थानुमाने तूदाहरणादयस्त्रयः, परार्थानुमाने च प्रतिज्ञादयः पञ्चैवावयवा इति **गौतमा वैशेषिका**श्चेति विवेकः॥

**इदमत्र बोध्यम्**—यद्यपि स्वप्रतिपत्त्यर्थं प्रवृत्ते स्वार्थानुमाने प्रतिज्ञादिभिस्त्रिभिरुदाहरणादिभिर्वा त्रिभिरवयवैरानुमानिकी प्रतिपत्तिः सम्यक् परिनिष्पद्यते **तथापि** परप्रतिपत्त्यर्थं प्रवृत्ते परार्थानुमाने न ते त्रयोऽवयवास्तस्याः सम्यक् परिनिष्पादने पर्य्याप्ताः। **नहि** प्रतिपादक इव प्रतिपादयितव्यः परः सर्वतोऽवबुद्धानुमानतत्त्वो भवति येनावयवत्रयेणापि तथा प्रतिपद्येत। **तत्**प्रतिपत्तिश्चावश्यकी। **सा** च न तावत्सम्यक् परिनिष्पद्यते यावत्प्रतिज्ञादयो निगमनान्ताः पञ्चावयवाः यथाक्रमं न प्रयुज्यन्ते। **प्र**तिज्ञायां हि हेत्वपेक्षा, हेतौ चोदाहरणापेक्षा, प्रयुज्यमाने चोदाहरणे पक्षे हेतुसमन्वयार्थमुपनयापेक्षा, हेतुसमन्वये च तत्र साध्यवत्त्वनिश्चयापादनार्थं निगमनापेक्षा सुस्पष्टा। **तस्मात्** परं प्रतिपादयितुं प्रतिपादकेन सर्वत्र **परार्थानुमाने** प्रतिज्ञादयः पञ्चैवावयवाः प्रयोक्तव्याः, **स्वार्थानुमाने** तु यथाकाममिति॥ ३२॥

**तत्र** प्रतिज्ञां लक्षयति—

**"साध्यनिर्देशः प्रतिज्ञा"**॥ ३३॥

साध्यनिर्देशः=साधनीयधर्मविशिष्टो धर्मी साध्यः, तस्य यो निर्देशः अभिधायकः शब्दविशेषः निर्दिश्यतेऽभिधीयतेऽनेनेति तद्व्युत्पत्तेः, स प्रतिज्ञा=प्रतिज्ञापदार्थ इत्यर्थः।

**येन** हि शब्दविशेषेण साधनीयधर्मविशिष्टो धर्मी निर्दिश्यते। **किमुक्तं?** यद् वचनं साधनीयधर्मविशिष्टं धर्मिणमभिधत्ते। **किंबहुना** यस्माच्छब्द-

विशेषात् साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारक-पक्षतावच्छेदकावच्छिन्न-पक्षविशेष्यकबोध उत्पद्यते **यथा** पर्वतो वह्निमान्, ब्राह्मणानि न वेदः, अनित्यः शब्दः, इतरभेदवती पृथिवी, सात्मकं जीवच्छरीरमित्यादिः, सा "**प्रतिज्ञा**" प्रतिज्ञायतेऽनयेति तद्व्युत्पत्तेरिति भावः ॥ ३३ ॥

हेतुं लक्षयति—

**"उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः" ॥ ३४ ॥**

उदाहरणसाधर्म्यात्=उदाहरणं दृष्टान्तः, समानधर्मता **साधर्म्यम्**, उदाहरणेन साधर्म्यमुदाहरणसाधर्म्यं, **तस्मात्** उदाहरणसमानधर्मत्वात् साध्यसाधनं=साधनीयधर्मविशिष्टो धर्मी साध्यस्तस्य साधनं सिद्धिः क्रियते येन तदभिधायको यः शब्दविशेषः स हेतुः=हेतुपदार्थ इत्यर्थः।

उदाहरणे **सपक्षे** साधनीयधर्मविशिष्टे धर्मिणि **पक्षे** च समानधर्मत्वेन वर्तमानेन येन साध्यं साध्यते, **किमुक्तं**? यस्तावदुदाहरणस्य साधनीयधर्मविशिष्टधर्मिणश्च समानो धर्मो भवन् साध्यसाधनायोपन्यस्यते, **किं बहुना** यो ह्युदाहरणे गृहीतान्वयव्याप्तिकः पक्षे प्रतिसन्धीयमानो धर्मः साध्यसाधनत्वेनाभिधीयते, तदभिधायको यस्तृतीयान्तः पञ्चम्यन्तो वा शब्दविशेषः स "**हेतुः**" इति भावः ॥ ३४ ॥

अन्वयिहेतुं लक्षयित्वा व्यतिरेकिणं लक्षयिष्यन्नतिदिशति—

**"तथा वैधर्म्यात्" ॥ ३५ ॥**

साध्यसाधनं हेतुश्चेत्येतद् द्वयमनुवर्तते। तथा=उदारणसाधर्म्यात्साध्यं साध्यते येन स यथा हेतुः तथा वैधर्म्यात्=उदाहरणवैधर्म्यात्साध्यसाधनं येन क्रियते सोऽपि हेतुरवगन्तव्य इत्यर्थः।

उदाहरणे **सपक्षे** साधनीयधर्मविशिष्टे धर्मिणि **पक्षे** च विरुद्धधर्मत्वेन वर्तमानेन येन साध्यं साध्यते, **किमुक्तं**? यस्तावदुदाहरणे न वर्तते केवलं साधनीयधर्मविशिष्टे धर्मिणि पक्षे वर्तमानः साध्यसाधनायोपन्यस्यते, **किंबहुना** यो ह्युदाहरणे गृहीतव्यतिरेकव्याप्तिकः पक्षे प्रतिसन्धीयमानो

धर्मः साध्यसाधनत्वेनाभिधीयते, तदभिधायको यस्तृतीयान्तः पञ्चम्यन्तो वा शब्दविशेषः स "**हेतुः**" इति भावः ॥

तत्रान्वयव्याप्तिको हेतुरन्वयिहेतुः "**उदाहरणसाधर्म्यात् साध्यसाधनम्**" इत्याख्यायते। व्यतिरेकव्याप्तिकश्च व्यतिरेकिहेतुः "**उदाहरणवैधर्म्यात्साध्यसाधनम्**" इत्यभिधीयते। पर्वतो वह्निमानित्यत्र "**धूमात्**" ब्राह्मणानि न वेद इत्यत्र "**ऋषिप्रणीतत्वात्**" अनित्यः शब्द इत्यत्र "**प्रयत्नानन्तरीयकत्वात्**" इत्यन्वयिहेतुः। इतरभेदवती पृथिवीत्यत्र "**गन्धवत्त्वात्**" सात्मकं जीवच्छरीरमित्यत्र "**प्राणित्वात्**" इति व्यतिरेकिहेतुरिति विवेकः ॥ ३५ ॥

उदाहरणं लक्षयति—

**"साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्"** ॥३६॥

साध्यसाधर्म्यात्=प्रयोजकत्वं पञ्चम्यर्थः, साधनीयधर्मविशिष्टो धर्मी पक्षः **साध्यः**, समानधर्मता **साधर्म्यम्**, तस्मात्=साध्यधर्महेतुधर्मकत्वात् तद्धर्मभावी=तस्य उक्तलक्षणसाध्यस्य धर्मः हेतुलक्षणाद् धर्मादन्यः साध्यलक्षणो धर्मः, स एव भावः, सोऽस्त्यस्येति **तद्धर्मभावी** साध्यधर्मको दृष्टान्तः=यो दृष्टान्तः स उदाहरणम्=उदाहरणपदार्थ इत्यर्थः।

यस्तावद् दृष्टान्तो हेतुरूपधर्माश्रयत्वात् साधनीयधर्मविशिष्टेन धर्मिणा सधर्मा, साध्यरूपधर्माश्रयत्वाच्च तद्धर्मभावी, **किमुक्तं?** यस्मिन् दृष्टान्ते हेतुधर्मसद्भावप्रयुक्तः साध्यधर्मसद्भावः, तदभिधायकं वचनमुदाहरणम्। **किंबहुना** "योयो धूमवान् सस वह्निमान् यथा महानसम्" इत्यादि साध्यसाधनयोरुभयोरन्वयव्याप्तिप्रतिपादकं वचनम् "**उदाहरणम्**" इति भावः ॥ ३६ ॥

उदाहरणान्तरं लक्षयति—

**"तद्विपर्ययाद् वा विपरीतम्"** ॥ ३७ ॥

दृष्टान्त उदाहरणमित्यनुवर्तते। उदाहरणान्तरसूचनाय **वाशब्दः**। तद्विपर्य्ययात्=साध्यवैधर्म्यात् साधनीयधर्मविशिष्टस्य धर्मिणः साध्यस्य यः

साधनीयधर्मलक्षणसाध्याख्यो धर्मस्तद्विरुद्धस्य साध्याभावरूपधर्मस्याश्रयत्वाद् विपरीतम्=उदाहरणापेक्षया नपुंसकम्, अतद्धर्मभावी तस्य साधनीयधर्मविशिष्टस्य धर्मिणो हेतुलक्षणो धर्मस्तद्धर्मः स एव भावः सोऽस्त्यस्येति तद्धर्मभावी न तद्धर्मभावी **अतद्धर्मभावी** हेतुधर्मानाश्रयो यो दृष्टान्तः स उदाहरणम्=उदाहरणपदार्थ इत्यर्थः।

यस्तावद् दृष्टान्तः साध्यधर्माभावाश्रयत्वात् साधनीयधर्मविशिष्टेन धर्मिणा विधर्मा, हेतुधर्माभावाश्रयत्वाच्चातद्धर्मभावी, **किमुक्तं ?** यस्मिन् दृष्टान्ते साध्यधर्माभावप्रयुक्तो हेतुधर्माभावः, तदभिधायकं वचनमुदाहरणम्। **किंबहुना**—"यत्सात्मकं न भवति तत् प्राणि न भवति यथा घटादिकम्" इत्यादि व्यतिरेकव्याप्तिप्रतिपादकं वचनम् "**उदाहरणम्**" इति भावः॥

**तत्रोदाहरणं** द्विविधम् अन्वयि व्यतिरेकि च। **यो** दृष्टान्तः स उदाहरणं, **किमुक्तं ?** साध्यसाधनयोरन्वयव्यतिरेकव्याप्तिप्रतिपादकं वचनमुदाहरणमित्यन्वयव्यतिरेकिणोरुभयोरप्युदाहरणयोः **सामान्यलक्षणम्**। साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्तः इत्यन्वयिनः, साध्यवैधर्म्याद् तद्धर्मभावी दृष्टान्त इति व्यतिरेकिणश्च **विशेषलक्षणम्**। अन्वय्युदाहरणं साधर्म्यनिदर्शनं व्यतिरेक्युदाहरणं च वैधर्म्यनिदर्शनमित्याख्यायते। निदर्शनं दृष्टान्त इति च पर्य्यायशब्दः। पर्वतो वह्निमान् धूमादित्यत्र "**महानसं**" ब्राह्मणानि न वेदः ऋषिप्रणीतत्वादित्यत्र "**अङ्गोपाङ्गानि**" अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्यत्र "**घटः**" इत्यन्वय्युदाहरणम्। इतरभेदवती पृथिवी गन्धवत्त्वादित्यत्र "**जलादि**" सात्मकं जीवच्छरीरं प्राणित्वादित्यत्र "**घटादिकम्**" इति व्यतिरेक्युदाहरणमिति विवेकः॥ ३७॥

उपनयं लक्षयति—

**"उदाहरणापेक्षस्तथेत्युपसंहारो**
**न तथेति वा साध्यस्योपनयः॥ ३८॥**

उदाहरणापेक्षः=उक्तलक्षणमुदाहरणमात्मलब्धयेऽपेक्षत इत्युदाहरणापेक्षः उदाहरणतन्त्रः उदाहरणवशः उदाहरणस्य वशिनो वश्य इति यावत् तथेति=तथाचायमित्याकारो नतथेति वा=नचतथाऽयमित्याकारश्च साध्यस्य=निष्ठत्वं षष्ठ्यर्थः, साधनीयधर्मविशिष्टो धर्मी साध्यस्तन्निष्ठः पक्षनिष्ठ इति यावत् य उपसंहारः=हेतोरुपसंहार उपन्यासः उपसंह्रियतेऽनेनेति तद्व्युत्पत्तेरुपसंहारबोधकः शब्दविशेषः, स उपनयः=उपनयपदार्थ इत्यर्थः ।

**येन** शब्दविशेषेण ह्युदाहरणे साध्याविनाभूततया दृष्टो हेतुरन्वयव्याप्तौ **तथेति** व्यतिरेकव्याप्तौ च **न तथेति** पक्षनिष्ठत्वेनोपसंह्रियते । **किमुक्तम् ?** उदाहरणे तावत्साध्यसाधनयोरन्वयव्याप्तिर्वा व्यतिरेकव्याप्तिर्वा यादृशी व्याप्तिर्गृहीता तादृग्व्याप्तिविशिष्टस्य हेतोः "तथा चायम्" इति वा "नच तथायम्" इति वा पक्षधर्मत्वेनोपसंहारप्रतिपादको यः शब्दविशेषः स उपनयः । **किं बहुना**ऽन्वयिव्यतिरेकिभेदेनोदाहरणस्य द्वैविध्यात् तद्वश्य उपनयोऽपि द्विविधः—तथा चायमित्याकारः, नच तथायमित्याकारश्च । **यदो**दाहरणमन्वयि **तदा** तथाचायमित्याकारः, **यदा** व्यतिरेकि **तदा** नचतथायमित्याकारो यः साध्यधर्मिणि पक्षे गृहीतव्याप्तिकस्य हेतोरुपसंहारः स "**उपनयः**" इति भावः ॥

**तत्र** पर्वतो वह्निमान् धूमात् महानसवदित्यत्र "योयो धूमवान् स सर्वो महानसवद् वह्निमान् दृष्टः तथाचायं पर्वतः, योय ऋषिप्रणीतः स सर्वोऽङ्गोपाङ्गवन्न वेदो दृष्टः तथाचेमानि ब्राह्मणानि, योयः प्रयत्नानन्तरीयकः स सर्वो घटवदनित्यो दृष्टः तथाचायं शब्दः" इत्य**न्वय्युपनयः** । यद्यदितरभेदवन्न भवति तज्जलादिवद्गन्धवन्न भवति नच तथेयं पृथिवी, यद्यत्सात्मकं न भवति तत्प्राणि न भवति यथा घटादि, नच तथेदं जीवच्छरीरम्" इति च **व्यतिरेक्युपनय** इति विवेकः ॥३८॥

**निगमनं** लक्षयति—

**"हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्" ॥ ३९ ॥**

हेत्वपदेशात्=हेतुत्वं पञ्चम्यर्थः, हेतुमत्त्वं हेतुः, तस्यापदेशो व्यपदेशः, **तस्मात्** तद्धेतुकमिति यावत् प्रतिज्ञायाः=प्रतिज्ञाविषयीभूतस्यार्थस्य पुनर्वचनं=तस्मात्तथेति भूयोऽभिधानं यत्, तन्निगमनं=निगमनपदवाच्य-मित्यर्थः ॥

हेतुमत्त्वव्यपदेशपूर्वको यः प्रतिज्ञातार्थस्य साध्यस्य सिद्धरूपतया "**तस्मात्तथा**" इति पुनर्निर्देशः, **किमुक्तं ?** हेतौ पक्षधर्मताभिधान-बलेन पक्षस्य निश्चितसाध्यवत्तया यत् तस्मात्तथेत्यभिधानं, **किंबहुना** व्याप्तिविशिष्टस्य हेतोः पक्षधर्मत्वं प्रतिपाद्य साध्यस्य पक्षधर्मत्वप्रतिपादकं तस्मात्तथेति यद्वचनं तद् "**निगमनम्**" इति भावः ॥

**तत्रान्वयिनि "तस्मात्तथा"** व्यतिरेकिणि च "**तस्मान्नतथा**" इति निगमनमिति **केचित्**। उभयत्रापि "**तस्मात्तथा**" इत्येव निगमनमिति **वैदिका** इति विवेकः ॥ ३९ ॥

**अथो**द्देशक्रमप्राप्तं तर्कं लक्षयति—

**"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तित-**
**स्तत्त्वज्ञानार्थमूहस्तर्कः"** ॥ ४० ॥

अविज्ञाततत्त्वे=न विज्ञातमवबुद्धं तत्त्वं स्वरूपं विविक्तानारोपितं रूपं यस्यार्थस्य तस्मिन्नर्थे=पदार्थे कारणोपपत्तितः=कारणस्य तत्त्वावबोधसाध-नस्योपपत्तित उपलब्धितस्तत्त्वज्ञानार्थं=तत्त्वावबोधार्थमूहः=अवश्यम-नेनेत्थं भवितव्यमिति सम्भावनाप्रत्ययः कल्पनाविशेषः प्रवर्तते यः, स तर्कः=तर्कपदार्थ इत्यर्थः ।

यस्य पदार्थस्य सामान्यतोऽवबुद्धेऽपि तत्त्वे विशेषतस्तत्त्वं नावबुध्यते तदवबोधानुकूलसाधनं चोपलभ्यते, तस्य पदार्थस्य विशेषतस्तत्त्वाव-बोधार्थं यस्तावत्साधनोपलम्भबलेन "**अवश्यमनेनेत्थं भवित-व्यम्**" इति भवितव्यतावभासः सम्भावनात्मा प्रत्ययः सञ्जायते, स तर्कः । **किमुक्तं?** "योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते स किमुत्पत्ति-धर्मकः आहोस्विदनुत्पत्तिधर्मकः ? यदेतदैतरेयादिब्राह्मणजातं तत् किं

वेदः आहोस्विदवेदः? यदिदं प्राप्तव्यं स्वराज्यं तत् किं परावलम्बनेन प्राप्यते अथवा स्वावलम्बनेन? यत्रायं धूमो दृश्यते स किं वह्निमान् आहो स्विन्निर्वह्निः?" इत्यादिसंशयानन्तरं "तत्त्वं जानीय" इति तत्त्वजिज्ञासायां संशयधर्मिणि तस्मिन् ज्ञात्रादिपदार्थे "भोगवैचित्र्यं, प्रामाण्याय वेदमन्त्रोपादानं, परावलम्बकेषु स्वराज्यप्राप्त्यभावः, निर्वह्निकेषु धूमदर्शनाभावः" इति संशयज्ञानोल्लिख्यमानपक्षयोरेकतरपक्षोत्थापनानुकूलकारणावलोकनेन यस्तावत् तत्त्वज्ञानप्रयोजनः "अवश्यमनेनानुत्पत्तिधर्मकेणावेदेन स्वावलम्बनप्राप्येण वह्निमता च भवितव्यम्" इति सम्भावनाप्रत्यय उत्पद्यते, स तर्कः। **किं बहुना**—सामान्यतो ज्ञाते धर्मिणि विशेषतो ज्ञानाय प्रमाणोपपत्तिमपेक्षमाणा संशयप्रवृत्तितः परस्तात् प्रमाणप्रवृत्तितश्च पुरस्तादुभयोर्मध्यवर्तिनी प्रमाणविषयविवेचनेन प्रमाणमनुगृह्णन्ती या काचन "**भवेदिदमेवम्**" इति सहृदयसाक्षिका सम्भावनाप्रतीतिरुपजायते स "**तर्कः**" इति भावः॥

**तत्र** "तर्कः" इति लक्ष्यस्य "ऊहः" इति लक्षणस्य "अविज्ञाततत्त्वेऽर्थे" इति विषयस्य "कारणोपपत्तितः" इति कारणस्य "तत्त्वज्ञानार्थम्" इति फलस्य निर्देश इति विवेकः॥

**इदमत्र बोध्यम्**—यद्यपि सर्वेषु वैदिकदर्शनेषु तर्कोऽभ्युपगम्यते **तथापि** नासौ सर्वत्राविशिष्टः **अपिच?** क्वचित्प्रमाणरूपः, क्वचिच्च प्रमाणानुग्राहकः। **तत्र** वैशेषिकादिषु पञ्चसु वैदिकदर्शनेषु "**तत्त्वप्रकाशिका युक्तिः प्रयुक्तिस्तर्कः, कारणोपपत्तिलक्षणया युक्त्या वा जायमानः प्रत्ययस्तर्कः**" इत्यभ्युपगमेनानुमानप्रमाणान्तर्भूतत्वात् **प्रमाणरूपः**। न्यायदर्शनेचास्मिन् प्रमाणसंशयान्तरालदशावर्त्तित्वेन प्रमाणविषयविवेचकत्वात्**प्रमाणानुग्राहकः**। प्रमाणानि हि प्रवर्तमानानि तर्कविविक्तं विषयं परिच्छिन्दन्तीति॥

"**तर्कः**" इति लक्ष्यनिर्देशः, "**कारणोपपत्तित ऊहः**" इति लक्षणम्, "**अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थम्**" इति प्रयोजना-

भिधानम्। **कारणोपपत्तितः**=कारणं व्याप्यं तस्योपपत्तिरारोपस्तसादूहः=व्यापकारोपः, **किमुक्तं?** व्याप्यारोपेण व्यापकारोपः **यथा** चेन्निर्वह्निः स्यात् तर्हि निर्धूमः स्यादिति निर्वह्नित्वारोपान्निर्धूमत्वारोपः, **किं बहुना**ऽनिष्टप्रसङ्गो यः स तर्कः । **स**चात्माश्रयोऽन्योऽन्याश्रयश्चक्रकोऽनवस्था प्रमाणबाधितार्थ इति भेदात् पञ्चविधः । **स्वस्य** स्वापेक्षानिबन्धनोऽनिष्टप्रसङ्गः "**आत्माश्रयः**" स्वापेक्षापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गो "**अन्योऽन्याश्रयः**" स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनोऽनिष्टप्रसङ्गः "**चक्रकः**" अप्रामाणिकाव्यवस्थितपरम्परोपनिबन्धनोऽनिष्टप्रसङ्गो "**अनवस्था**" तदेतच्चतुष्टयभिन्नोऽनिष्टप्रसङ्गः "**प्रमाणबाधितार्थः**" । स च द्विविधः व्याप्तिग्राहकः, विषयपरिशोधकश्च । धूमो यदि वह्निव्यभिचारी स्यात् तदा वह्निजन्यो न स्यादिति **प्रथमः** । पर्वतो यदि निर्वह्निः स्यात् तदा निर्धूमः स्यादिति **द्वितीयः** । प्रथमोपस्थितत्वम्, उत्सर्गः, अपवादः, विनिगमनाविरहः, लाघवं, गौरवं, व्याघातः, प्रतिबन्दिरित्यादयस्तु प्रसङ्गानात्मकत्वेऽपि प्रमाणानुग्राहकत्वसाधर्म्यात् तर्कपदव्यपदेश्या इति **नव्याः** ।आत्माश्रयादयस्तावद्दोषाः, तेच व्याप्तिनिश्चयविघटनेन हेत्वाभासतामासादयन्तो हेतूनां प्रयोक्तॄनभिभावयन्ति, **किमुक्तं?** प्रयुक्तेषु हेतुषु समागच्छद्भिरेभिः प्रयोक्तारः खलु निगृह्यन्ते, तस्मादेते निग्रहस्थानान्तर्भूता इति **प्राञ्चः** । तत्राविद्यासम्बन्धाद् ब्रह्मैव बध्यते मुच्यतेचेति वदन् वादी प्रष्टव्यः किमयं सम्बन्धो निर्निमित्तः अहोस्वित् सनिमित्त-इति । **न** तावदाद्यः, मुक्तस्यापि तत्प्रसङ्गात्। **द्वितीय**श्चेत् तदा वक्तव्यं किं तन्निमित्तम् अविद्या वा तदन्यद् वा? । **नान्त्यः** अनभ्युपगमात् । **अविद्ये**ति चेत् सा किं सम्बन्धप्रतियोगिन्येव स्यात् उतान्या काचन? । **सम्बन्धप्रतियोगिनी** चे**दात्माश्रयः** । अन्या चेत् तयाऽप्यविद्यात्वाविशेषाद् ब्रह्मसम्बन्धार्थमन्या काचनाविद्याऽपेक्षितव्या । येयमपेक्ष्यते सा चेत्प्रथमा तदा**ऽन्योऽन्याश्रयः** । तृतीया काचन चेत् तयाऽपि सम्बन्धार्थमन्या काचनापेक्षितव्या येयमपेक्ष्यते सा चेत् प्रथमा **चक्रकः** । चतुर्थी काचन चे**दनवस्थे**ति विनियोगप्रकारः ॥ ४० ॥

**निर्णयं** लक्षयति—

**"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" ॥ ४१ ॥**

विमृश्य=विमर्शं कृत्वा विमर्शः संशयः सन्देहस्तं कृत्वा पक्षप्रतिपक्षाभ्याम्=अत्र पक्षग्रहणेन पक्षविषयं साधनं प्रतिपक्षग्रहणेन च प्रतिपक्षविषयस्य साधनस्योपालम्भं प्रतिषेधमुपलक्षयति, पक्षप्रतिपक्षौ चैकाधिकरणस्थौ मिथो विरोधिनौ धर्मौ, **ताभ्यां** तद्गोचराभ्यां साधनोपालम्भाभ्यां यदर्थावधारणं="स्थाणुरयम्, अस्त्यात्मा" इत्यादिरूपमर्थस्य पदार्थस्यावधारणं निर्धारणं तद्गोचरं निश्चयात्मकं ज्ञानमिति यावत् स निर्णयः=निर्णयपदार्थ इत्यर्थः ।

**सं**शयानन्तरं संशयधर्मिणि वादिप्रतिवादिभ्यां साध्यत्वेन युगपत् परिगृहीतयोः प्रतिद्वन्द्विधर्मयोः प्रवृत्ताभ्यां साधनोपालम्भाभ्यामेकस्य निवृत्तेरपरस्य चावस्थितेरवश्यम्भावात् यत्तावदविशिष्टधर्मविशिष्टे धर्मिणि **"स्थाणुरयम्, अस्त्यात्मा"** इत्यादिरूपमवधारणात्मकं तत्त्वज्ञानमुत्पद्यते, **किमुक्तं?** "स्थाणुर्वा पुरुषो वा, अस्त्यात्मा नास्ति वा" इत्यादि संशय्य प्रवृत्ताभ्यां स्थाणुत्वपुरुषत्वास्तित्वनास्तित्वगोचराभ्यां साधनोपालम्भाभ्यां पुरुषत्वनास्तित्वयोः प्रतिषेधेन निवृत्त्या यत्तावत् स्थाणुत्वविशिष्टे धर्मिणि स्थाणौ **"स्थाणुरयम्"** अस्तित्वविशिष्टात्मधर्मिणि च **"अस्त्यात्मा"** इत्यादिरूपं यथार्थं ज्ञानं तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानमुपजायते स **"निर्णयः"** इति भावः ॥

**इदमत्र बोध्यम्**—यदेतत् सूत्रकृता निर्णयलक्षणमभ्यधायि तत्परीक्षाविषयस्य निर्णयस्यैव लक्षणं निश्चेतव्यं न निर्णयमात्रस्य । **वादे** विमर्शं विना **वेदे** चान्तरेण पक्षप्रतिपक्षाभ्यां निर्णयस्य दर्शनादिति ॥ ४१ ॥

**अथोद्देशः पदार्थानामपवर्गक्रमस्तथा ।**
**निर्णयान्ता नवार्थाश्च प्रविभज्यात्र लक्षिताः ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ
प्रथमाध्यायस्याद्यमाह्निकम् ।



# प्रथमोऽध्यायः ।

## द्वितीयमाह्निकम्

अथ क्रमप्राप्तं वादं लक्षयति—

**"प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" ॥ १ ॥**

प्रमाणतर्कसाधनोपालम्भः=प्रत्यक्षादिभिः प्रमाणैस्तदनुग्राहकैस्तर्कैश्च पक्षस्य साधनं प्रतिपक्षसाधनस्य चोपालम्भः प्रतिषेधः क्रियतेऽस्मिन्निति प्रमाणतर्कसाधनोपालम्भः, सिद्धान्ताविरुद्धः=सिद्धान्तेन सिद्धान्तार्थप्रतिपादकतयाऽभ्युपगतशास्त्रेणाविरुद्धाः विरोधवर्जितास्तर्काः क्रियन्तेऽस्मिन्निति सिद्धान्ताविरुद्धः, पञ्चावयवोपपन्नः=पञ्चभिरेव न न्यूनैर्नाधिकैः प्रतिज्ञादिभिरवयवैरुपपन्ना विशिष्टाः प्रयोगाः प्रयुज्यन्तेऽस्मिन्निति पञ्चावयवोपपन्नः, पक्षप्रतिपक्षपरिग्रहः=एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ, प्रत्यनीकभावात् "अस्त्यात्मा, नास्त्यात्मा" इति, तयोः परिग्रहः वादिप्रतिवादिभ्यां साध्यत्वेनाभ्युपगमो विद्यतेऽस्मिन्निति पक्षप्रतिपक्षपरिग्रहः, एवं भूतो यः कथाविशेषः स वादः=वादपदार्थ इत्यर्थः ।

**नाना**प्रवक्तृकविचारगोचरा वाक्यसन्दृब्धिर्हि **"कथा"** इत्याचक्षते । सा च वादो जल्पो वितण्डा चेति भेदात् त्रिधा । **तत्र** यस्मिन् कथाविशेषे पक्षप्रतिपक्षपरिग्रहपूर्वकौ प्रमाणैस्तर्कैश्च तत्साधनोपालम्भौ सम्प्रवर्तेते, तर्काश्च सिद्धान्तार्थप्रतिपादकतयाऽभ्युपगतशास्त्रेणाविरुद्धाः प्रयोगाश्च पञ्चभिरेव न न्यूनैर्नाधिकैः प्रतिज्ञादिभिरवयवैरुपपन्नाः प्रयुज्यन्ते, स वादः । **किमुक्तं?** यत्र वादिप्रतिवादिभ्यां प्रमाणैस्तर्कैश्च स्वस्वपक्षः साध्यते,

प्रतिपक्षसाधनञ्च प्रतिषिध्यते, साधनाय प्रतिषेधाय च प्रयोक्तव्यास्तर्काः सिद्धान्तार्थप्रतिपादकतयाऽभ्युपगतशास्त्रेण न विरुध्यन्ते, प्रयोगाश्च प्रतिज्ञादिभिः पञ्चभिरेवावयवैरुपेताः प्रक्रियन्ते, सोऽयमन्यतरपक्षनिर्णयावसानो वाक्यसमूहो वादः। **किंबहुना**—"अनधिगततत्त्वावबोधः, संशयविनिवृत्तिः, अध्यवसिताभ्यनुज्ञानम्" इति त्रिविधं फलमाकांक्षतस्तत्त्वबुभुत्सोः शिष्यस्य गुरुसब्रह्मचर्य्यादिभिः सह समारब्धो यस्तत्त्वनिर्णयफलः कथाविशेषः स **"वादः"** इति भावः॥

**तत्र** "वादः" इति लक्ष्यनिर्देशः, शेषं पदत्रयं लक्षणम्। वितण्डायां पक्षप्रतिपक्षपरिग्रहसत्त्वेऽपि प्रतिपक्षसाधनाभावात्, जल्पे च पक्षप्रतिपक्षपरिग्रहपूर्वकपक्षप्रतिपक्षोभयसाधनसत्त्वेऽपि सिद्धान्तार्थप्रतिपादकतयाऽभ्युपगतशास्त्रेणाविरुद्धैरेव तर्कैरनुगृहीतैः प्रमाणैस्तदुभयसाधनं विधातव्यं न जातु छलजात्यादिभिरिति नियमाभावान्नातिव्याप्तिरिति सूचनाय **"प्रमाणतर्कसाधनोपलम्भः"** इति पदम्। स्वपक्षस्य साधनाय प्रतिपक्षसाधनस्य च प्रतिषेधाय तर्काः सिद्धान्तार्थप्रतिपादकतयाऽभ्युपगतशास्त्रेण विरुद्धाः प्रयोगाश्च न्यूनाधिकावयवैरुपेताः बुद्ध्या न प्रयोक्तव्याः, किन्तु तर्कास्तदविरुद्धाः प्रयोगाश्च पञ्चावयवोपपन्ना एव यथाशक्ति प्रयोक्तव्या इति नियमसूचनाय **"सिद्धान्ताविरुद्धः" "पञ्चावयवोपपन्नः"** इति पदद्वयमिति विवेकः॥ १॥

जल्पं लक्षयति—

**"यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः"** ॥ २॥

यथोक्तोपपन्नः=यथोक्तेन वादलक्षणेनोपपन्नः विशिष्टः छलजातिनिग्रहस्थानसाधनोपालम्भः=छलेन जात्या निग्रहस्थानैश्च स्वपक्षस्य साधनं प्रतिपक्षसाधनस्य चोपालम्भः प्रतिषेधः क्रियतेऽस्मिन्निति छलजातिनिग्रहस्थानसाधनोपालम्भश्च यः कथाविशेषः स जल्पः=जल्पपदार्थ इत्यर्थः।

**यस्मिन्** कथाविशेषे वादिप्रतिवादिभ्यां पक्षप्रतिपक्षौ परिगृह्य प्रमाणै-

स्तर्कैर्वक्ष्यमाणैश्छलजातिनिग्रहस्थानैश्च तदुभयसाधनोपालम्भौ विधीयेते स जल्पः। **किमुक्तं?** यत्र पक्षप्रतिपक्षपरिग्रहपूर्वकं प्रमाणैस्तर्कैश्च तदुभय-साधनोपालम्भौ प्रवर्तेते, प्रवर्तमानयोश्च तयोः साधने प्रतिपक्षविघातेन स्वपक्षस्य रक्षणात् उपालम्भे च स्वातन्त्र्येण प्रतिपक्षसाधनस्य विहननात् तर्कवत्प्रमाणाङ्गभावमुपयन्ति छलजातिनिग्रहस्थानानि प्रयुज्यन्ते, स पर-स्परजयोद्देशेन प्रवृत्तो विजिगीषुकथाविशेषो जल्पः। **किंबहुना**—यत्र वादिप्रतिवादिनावुभावपि स्वंस्वं पक्षं साधयेते, प्रतिपक्षसाधनञ्चोपाल-भेते, साधनोपालम्भयोश्च प्रमाणतर्कछलजातिनिग्रहस्थानानि यथासम्भवं प्रयुञ्जाते, स वाक्यसमूहो **"जल्पः"** इति भावः॥

**केचित्तु** यद्यपि छलजात्यादिभिरुपालम्भ एव भवति नतु साधनं **तथापि** वक्ष्यमाणलक्षणैश्छलजातिनिग्रहस्थानैः साधनाय=स्वपक्षसाध-नायोपालम्भः=प्रतिपक्षसाधनस्योपालम्भः क्रियते यत्र स छलजातिनिग्र-हस्थानसाधनोपालम्भ इत्यर्थान्न कश्चिद्दोषः। प्रतिपक्षोपालम्भेऽर्थतः स्वपक्ष-सिद्धेरिति व्याचक्षते। **कश्चित्तु** यथोक्तेन वादलक्षणेनोपपन्नः=विशिष्टो यश्छलजातिनिग्रहस्थानैः साधनस्य=परकीयसाधनस्योपालम्भः=दूषणं यत्र तद्वाक्यजातं **"जल्पः"** इति व्याचष्टे॥ २॥

**वितण्डां** लक्षयति—

**"स प्रतिपक्षस्थापनाहीनो वितण्डा"** ॥ ३॥

प्रतिपक्षस्थापनाहीनः=प्रतिवादिनाऽभ्युपगतः पक्षः प्रतिपक्षः, तस्य प्रमाणादिभिः साधनं स्थापना, तया हीनो वर्जितो यः स=जल्पः, स वितण्डा=वितण्डापदार्थ इत्यर्थः।

**जल्पस्य** यल्लक्षणं व्याख्यातं तदेव प्रतिपक्षस्थापनया हीनं लक्षणं यस्य विजिगीषुकथाविशेषस्य स वितण्डा। **किमुक्तं?** यत्र प्रतिवादी स्वकीयं पक्षं न स्थापयति, वादिपक्षञ्च प्रमाणैस्तर्कैश्छलजातिनिग्रहस्थानैश्च नानाचेष्टैः प्रतिषेधति, स विजिगीषुकथाविशेषो वितण्डा। **किं बहुना**

स्वपक्षस्थापनाहीना परपक्षदूषणमात्रावसाना च या कथा सा "**वितण्डा**" वितण्ड्यते परप्रतिपत्तिर्विहन्यतेऽनयेति तद्व्युत्पत्तेरिति भावः ॥

**तत्र** यस्य वेदनाद् भवता निःश्रेयसाधिगम उपदिश्यते तस्मिन्नीश्वरे "किं प्रमाणम्" इति नास्तिकेनाक्षिप्ते वैदिको वितण्डया प्रत्यवतिष्ठते। **किं** भो ? त्वत्प्रयुक्तः "**किं प्रमाणम्**" इति किंशब्द आक्षेपार्थो वा, कुत्सितार्थो वा वितर्कार्थो वा प्रश्नार्थो वा ?। **चेदाक्षेपार्थः, तदे**श्वरसद्भावे नास्ति प्रमाणमित्युक्तं स्यात्। तच्च प्रतिज्ञामात्रं न तेन साध्यं सिध्यति यावत्तत्साधकं किञ्चिल्लिङ्गं नाभिधीयते, तच्च नाभ्यधायीति निगृहीतो भवान्। न्यूनाभिधानात्। न्यूनञ्च निग्रहस्थानमित्यग्रे स्पष्टम्। **कुत्सितार्थश्चेत्, तदे**श्वरसद्भावे कुत्सितं प्रमाणमस्तीत्युक्तं स्यात्। तथा च स एव दोषः। अस्यापि प्रतिज्ञामात्रत्वात्। प्रतिज्ञा चान्तरेण लिङ्गं नार्थस्य साधिकेति सर्वजनीनमेतत्। **वितर्कार्थश्चेत्, तदा** वितर्कस्य संशयात्मकत्वेन पक्षान्तरसापेक्षतया पक्षान्तरमपि निर्वचनीयमितीश्वरसद्भावे किमेतत्प्रमाणमुतान्यदिति स्यात्। तच्च भवता न निरवाचि। तथा च स एव न्यूनत्वं दोषः। **प्रश्नार्थश्चेत्, तदा** वक्तव्यं किं ज्ञातविषयोऽयं भवत्प्रश्नः आहोस्विदज्ञातविषयः? । ज्ञातविषयश्चेत्, तदा व्यर्थः प्रश्नः। पूर्वमेव ज्ञातत्वात्। अज्ञातविषयश्चेत्, तदाऽनुपपन्नः प्रश्नः। अज्ञाते विषये तदनुत्थानात्। **अथ** सामान्यतो ज्ञाते विशेषतश्चाज्ञाते तस्मिन् प्रश्न इति चेत्, **तदा** येन प्रमाणेन तद्विषयं सामान्यतो ज्ञानमभिप्रेतं तेनैव विशेषतोऽपि तत्सेत्स्यतीति कृतमाक्षेपेणेति तदुदाहरणविवेकः ॥ ३ ॥

**वैतण्डिकः प्रयतते निजपक्षसिद्ध्यै**
**ताञ्चैष वेद परपक्षनिषेधलभ्याम्।**
**तस्मादियं स्वमतसाधनवर्जिताऽपि**
**युक्ता प्रयोजनवती भवितुं वितण्डा ॥ १ ॥**

अथ क्रमप्राप्तं **हेत्वाभासं** विभजन् तत्सामान्यलक्षणमाह—

**"सव्यभिचारविरुद्धप्रकरणसमसाध्य-समकालातीताः हेत्वाभासाः"** ॥ ४ ॥

हेत्वाभासाः=यो हेतुलक्षणाभावादहेतुः सन् हेतुसामान्याद् हेतुवदाभासते, **किमुक्तं?** पक्षधर्मत्वादीनां पञ्चानां रूपाणामेकेनापि रूपेण हीनः सन् यः कतिपयहेतुरूपयोगाद्धेतुरिवावभासते, **किं बहुना**—यः परमार्थतो हेतुर्न भवति केवलं पञ्चम्यादिनिर्देशसामान्याद् यथा हेतुर्भवति तथोपलभ्यते, स **"हेत्वाभासः"** इति हेत्वाभाससामान्यलक्षणम्। ते च सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीताः=सव्यभिचारश्च विरुद्धश्च प्रकरणसमश्च साध्यसमश्च कालातीतश्चेति भेदात् पञ्चविधा भवन्तीत्यर्थः।

अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं, यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं, ज्ञायमानं सद् यदनुमितिप्रतिबन्धकं तत्त्वं वा हेत्वाभासत्वमिति हेत्वाभाससामान्यलक्षणमिति **नव्याः। सच** अनैकान्तिकः, विरुद्धः, प्रकरणसमः, साध्यसमः, कालातीतः, इति भेदात्पञ्चविध इति भावः ॥

**तत्र** प्रकरणसमस्य नामान्तरं सत्प्रतिपक्षः, साध्यसमस्यासिद्धः, कालातीतस्य च बाधित इति विवेकः ॥ ४ ॥

तत्रानैकान्तिकं लक्षयति—

**"अनैकान्तिकः सव्यभिचारः"** ॥ ५ ॥

अनैकान्तिकः=एकस्मिन्नन्ते भव ऐकान्तिकस्तद्विपर्य्ययादनैकान्तिकः एकत्राव्यवस्थितः, अनियत इति यावद् यो हेतुः, स सव्यभिचारः=सव्यभिचारपदवाच्य इत्यर्थः।

यस्तावदर्थः साध्यते स स्वाभावमपेक्ष्यैकोऽन्तः। तत्र तस्य परिसमापनात्। तमपेक्ष्य च स्वाभावो द्वितीयोऽन्तः। तस्यापि तत्र परिसमाप्तेः। तयोश्चोभयोरन्तयोर्यो हेतुरेकस्मिन्नन्ते साध्ये साध्याभावे वा नियतो न

विद्यते, **किमुक्तं?** यस्य हेतोः साध्यसाध्याभाववद्वृत्तित्वनियमो नास्ति, **किं बहुना**—यो हेतुः साध्यवति वर्तमानः साध्याभाववत्यपि वर्तते, साध्यवत्यवर्तमानो वा साध्याभाववत्यपि न वर्तते, स **"सव्यभिचारः"** एकत्राव्यवस्थितिर्व्यभिचारस्तया सह वर्तते इति सव्यभिचार इति तद्व्युत्पत्तेरिति भावः ॥

**तत्र** साधारणासाधारणानुपसंहारिभेदादनैकान्तिकस्त्रिविधः। यो हेतुः साध्यवति वर्तमानः साध्याभाववत्यपि वर्तते, **किमुक्तं?** पक्षसपक्षयोर्वर्तमानो विपक्षेऽपि वर्तते, स **"साधारणः"** यथा शब्दो नित्यः अस्पर्शत्वादित्यत्रास्पर्शत्वम्। **यश्च** साध्यवत्यवर्तमानः साध्याभाववत्यपि न वर्तते, **किमुक्तं?** सपक्षविपक्षयोरवर्तमानः केवलपक्षमात्रे वर्तते, स **"असाधारणः"** यथा शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वम्। **यस्य** हेतोः साध्यं सर्वत्रान्वीयते स केवलान्वयिसाध्यको **"अनुपसंहारी"** यथा घटोऽभिधेयः प्रमेयत्वादित्यत्र प्रमेयत्वमिति विवेकः ॥ ५ ॥

**विरुद्धं** लक्षयति—

**"सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः"** ॥ ६ ॥

सिद्धान्तं=प्रमाणगोचरत्वात् साधनीयधर्मोऽत्र सिद्धान्तः, तमभ्युपेत्य अभ्युपगम्य तद्विरोधी=तेन विरोधशीलः तद्विरुद्धेन साधनीयधर्माभावेन व्याप्त इति यावद् यो हेतुः प्रयुज्यते, स विरुद्धः=विरुद्धपदवाच्य इत्यर्थः।

**पक्षे** साधनीयधर्ममभ्युपगम्य प्रतिज्ञाय यस्तद्विरोधी हेतुः प्रयुज्यते, **किमुक्तं?** साध्यमुद्दिश्य तत्साधनाय प्रयुक्तो यो हेतुर्वस्तुतः साध्याभावेन व्याप्तो विद्यते, **किंबहुना**—यो हेतुः सपक्षे न वर्तते विपक्षे च वर्तते [illegible] न साध्यविपर्ययं च साधयति **यथा** ब्राह्मणानि स्वतः ता[illegible], जगदकार्य्यं सावयवत्वात्, अविनाशी जीव उत्प-तस्मादियं[illegible] नित्यः प्रयत्नानन्तरीयकत्वादित्यादिः, स युक्त[illegible]भावः ॥ ६ ॥

**प्रकरणसमं** लक्षयति—

**"यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" ॥ ७ ॥**

यस्मात्=समबलेन हेत्वन्तरेण प्रतिरुद्धसामर्थ्याद् यस्माद् हेतोः प्रकरणचिन्ता=प्रकरणं पक्षः, प्रक्रियते साधनीयधर्माश्रयतयाऽधिक्रियते यत्तत्प्रकरणमिति तद्व्युत्पत्तेः, तस्य चिन्ता "किमयं साधनीयधर्माश्रय आहोस्विदनाश्रय" इति जिज्ञासा प्रवर्तते, सः=स हेतुर्निर्णयार्थं=प्रकरणे साधनीयधर्माश्रयत्वावधारणार्थमपदिष्टः=प्रयुक्तः प्रकरणसमः=प्रकरणसम उच्यत इत्यर्थः ।

यस्तावद् हेतुः साधनीयधर्मस्य धर्मिणि पक्षे निर्धारणार्थमपदिष्टस्तुल्यबलेन हेत्वन्तरेण प्रतिबद्धत्वान्न तं निर्धारयितुं पर्याप्नोति, तत्रापर्याप्तः सँश्च "किमयं साधनीयधर्माश्रय आहो स्विदनाश्रयः" इति विमर्शात्मिकां जिज्ञासां प्रवर्तयति, स प्रकरणसमः। **किमुक्तं?** धर्मिणि पक्षे साध्यधर्मनिर्णयार्थमपदिष्टस्य यस्य हेतोः प्रतिपक्षभूतं हेत्वन्तरं वर्तते, स प्रकरणसमः। **किंबहुना**—यस्य हेतोः साध्याभावसाधकं हेत्वन्तरं विद्यते स **"प्रकरणसमः"** साध्यवत्तायां सन्दिग्धत्वात्प्रकरणेन तुल्य इति तद्व्युत्पत्तेरिति भावः ॥

**तत्र** "प्रकरणसमः" इति लक्ष्यनिर्देशः। शिष्टं लक्षणम् । अस्यैव च नामान्तरं **"सत्प्रतिपक्षः"** इति । ब्राह्मणानि वेदः आप्तशब्दादित्यत्र **"आप्तशब्दत्वं"** हेतुः प्रकरणसमः । "ब्राह्मणानि न वेद ऋषिप्रणीतत्वात्" इति साध्याभावसाधकतया तत्प्रतिपक्षस्य **"ऋषिप्रणीतत्व"** रूपहेत्वन्तरस्य विद्यमानत्वेन "किमिमानि वेद आहोस्विदवेदः" इति जिज्ञासाप्रवृत्तेः । ईश्वरः शरीरी कर्तृत्वादित्यत्र **"कर्तृत्वं"** प्रकरणसमः। "ईश्वरो न शरीरी सर्वशक्तिमत्त्वे सति भोगहेतुकर्माभावात्" इति साध्याभावसाधकतया तत्प्रतिपक्षस्य **"सर्वशक्तिमत्त्वे सति भोगहेतुकर्माभाव"** रूपहेत्वन्तरस्य सत्त्वेन "किमेष शरीरी वाऽशरीरी वा" इति

जिज्ञासोदयात् । जगदकर्तृकमनादित्वादित्यत्र च **"अनादित्वं"** प्रकरणसमः । "जगत्सकर्तृकं सावयवत्वात्" इति साध्याभावसाधकतया तत्प्रतिपक्षस्य **"सावयत्व"**रूपहेत्वन्तरस्य वर्तमानत्वेन "किमिदमकर्तृकं यद्वा सकर्तृकम्" इति चिन्तोत्पत्तेरिति विवेकः ॥ ७ ॥

**साध्यसमं** लक्षयति—

**"साध्याविशिष्टः साध्यत्वात्साध्यसमः"** ॥ ८ ॥

साध्यत्वात्=साधनीयत्वात् सिद्धत्वाभावात् असिद्धत्वादिति यावद् यो हेतुः साध्याविशिष्टः=साध्येन तुल्यः स साध्यसमः=साध्यसमपदवाच्य-इत्यर्थः ।

यस्तावद्धेतुरसिद्धत्वात् साध्यतो न विशिष्यते, **किमुक्तं ?** यस्य हेतोः पक्षतो वा स्वरूपादितो वा सिद्धिर्न विद्यते, स साध्यवत्साधनीयत्वात् **"साध्यसमः"** हेत्वाभास इति भावः ॥

**तत्र** "साध्यसमः" इति लक्ष्यनिर्देशः । शिष्टं लक्षणम् । अयमेव **"असिद्धः"** इति परिभाष्यते । **सच** बहुविधो **"वैशेपिकसूत्रवैदिकवृत्तौ"** विस्तरेण व्याख्यातोऽतो नेह पुनर्व्याख्यायते । **"ज्ञानाद्याश्रयो** देहश्चेतनत्वात्, भोगहेतुकर्मवानीश्वरः शरीरित्वात्, स्वतःप्रमाणानि ब्राह्मणानि वेदत्वात्" इत्यादिहेतुजातं च तस्य विशेषत उदाहरणमिति विवेकः ॥ ८ ॥

**कालातीतं** लक्षयति—

**"कालात्ययापदिष्टः कालातीतः"** ॥ ९ ॥

कालात्ययापदिष्टः=हेतुप्रयोगकालः कालः, तस्यात्ययेन अतिक्रमेणापदिष्टः प्रयुक्तो यो हेतुः स कालातीतः=कालातीतपदवाच्य इत्यर्थः ।

**साध्यसन्देहविशिष्टः** कालो हि हेतुप्रयोगकालः, **यथाहुः** "नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते, किन्तु सन्दिग्धे" इति । **वाह्या अप्याहुः** "सन्दिग्धे हेतुवचनात्" इति । तं कालमतीत्य यो हेतुरपदिश्यते, **किमुक्तं ?** यो हेतुः प्रत्यक्षतो वाऽनुमानतो वा शब्दतो वा

स्वसाध्यविपरीतार्थनिर्णयेन साध्यसन्देहविशिष्टं कालमतिपतति, **किंबहुना**–प्रत्यक्षादिना बलवता प्रमाणेन बाधितं विषयमधिरूढः स्वात्मनः प्रयोगकालमत्येति, सोऽयं कालस्यात्ययेनापदिश्यमानो हेतुः "**कालातीतः**" इति भावः ॥

**तत्र** "कालातीतः" इति लक्ष्यनिर्देशः । "कालात्ययापदिष्टः" इति लक्षणम् । अस्यैव संज्ञान्तरं "**बाधितः**" इति । वह्निरनुष्णः, गन्धाभाववती वा पृथिवी, द्रव्यत्वादित्यत्रौष्ण्यादिविषयेण बलवताऽबाधितप्रत्यक्षेण बाधितविषयत्वाद् "**द्रव्यत्वम्**" जीवात्मानो विभवः अपाकजत्वे सत्ययावद्द्रव्यभाविविशेषगुणाश्रयत्वाद् व्योमवदित्यत्र "**बालाग्रशतभागस्य**" ( श्वेता० ५।९ ) इत्यादिश्रुत्यनुगृहीतेन "जीवात्मानो न विभवः समानजातीयत्वे सति नानात्वात् परमाण्वादिवत्" इति बलीयसाऽनुमानेन बाधितविषयत्वात् "**अपाकजत्वे सत्ययावद्द्रव्यभाविविशेषगुणाश्रयत्वम्**" पशवो हिंस्याः प्राणित्वात् शत्रुवत् १ मांसं भक्षणीयमन्नत्वाद् व्रीह्यादिवत् २ ईश्वरः शरीरी चेतनत्वात् जीववत् ३ चतुराननो ब्रह्मा वेदप्रकाशकः अन्वर्थसंज्ञकत्वाद् व्यासवत् ४ ईश्वरः प्रतिमापनीयः ( मृच्छिलादिप्रतिमया प्रतिनिधेयः ) उग्रकर्मत्वात् "**तिलक**" प्रभृतिवत् ५ इत्यत्र च "**पशून् पाहि**" (यजु० १।१) "**गां मा हिंसीः**" (यजु० १३।४) १ "**यथा मांसं यथा सुरा**" ( अथर्व० ६।७।१ ) "**समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनां, प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात्**" (मनु० ५।४९ ) २ "**सपर्य्यगाच्छुक्रमकायम्**" ( यजु० ४०।८ ) "**न तस्य कार्य्यं करणं च विद्यते**" (श्वेता० ६।८) ३ "**यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्**" ( ऋ० ८।२।२३।३)ऋषिषु=अग्न्यादिष्वर्षिषु,४ "**न तस्य प्रतिमाऽस्ति यस्य नाम महद् यशः**" ( यजु० ३२।३ ) यस्येश्वरस्य "महत्, यशः" इति द्वयं नाम=संज्ञा, तस्येत्यन्वयः, ५ इत्यादिना प्रबलेन शब्दप्रमाणेन

बाधितविषयत्वात् प्राणित्वम्, अन्नत्वं, चेतनत्वम्, अन्वर्थसंज्ञकत्वम्, उग्रकर्मत्वम्" इति हेतुसमुदायः "कालातीतः" स्वकालमतीतः कालातीत इति तद्व्युत्पत्तेरिति विवेकः ॥ ९ ॥

अथ क्रमप्राप्तं छलं लक्षयति—

"वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" ॥ १० ॥

अर्थविकल्पोपपत्त्या=वाद्यभिप्रेतोऽर्थोऽर्थः, तस्माद् विरुद्धस्यार्थस्य कल्पनं विकल्पः, सैवोपपत्तिर्युक्तिस्तया वक्तृतात्पर्य्यविषयीभूतादर्थाद् विरुद्धार्थस्य कल्पनालक्षणयोपपत्त्या यो वचनविघातः=वादिप्रयुक्तं वाक्यं वचनं, तस्य विघातो विहननं ध्वंसो दुष्टीकरणमिति यावत्, स छलं=छलपदवाच्य इत्यर्थः ।

यमर्थमभिप्रेत्य वादिना वाक्यं प्रयुज्यते, ततो विरुद्धार्थकल्पनेन यत्तद्वाक्यस्य व्याघातः, किमुक्तम् ? अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं परिकल्प्य यद् व्याघातलक्षणदूषणाभिधानं, तद् "छलम्" इति भावः ॥ १० ॥

विभजते—

"तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्च" ११

तत्=उक्तलक्षणं छलं, "वाक्छलं सामान्यच्छलम्, उपचारच्छलं" चेति भेदात् त्रिविधं=त्रिप्रकारमित्यर्थः ।

छलं त्रिविधं वाक्छलं, सामान्यच्छलम्, उपचारच्छलञ्चेति भावः॥११॥

तत्र वाक्छलं लक्षयति—

"अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्" ॥ १२ ॥

अविशेषाभिहिते=सामान्यशब्दो नानार्थसाधारणः शब्दोऽविशेषः, तेनाभिहिते अभिधीयमानेऽर्थे=अभिमतार्थे व्याघातदोषोद्भावनाय यद् वक्तुः=अभिदधतः परस्य वादिनोऽभिप्रायात्=तात्पर्य्यमभिप्रायस्तद्विषया-

दभिमतार्थादर्थान्तरकल्पना=भिन्नस्यानभिमतस्यार्थस्य प्रकल्पनं, तत् वाक्छलं=वाक्छलपदवाच्यमित्यर्थः ।

यस्तावत्प्रयुक्तः शब्दः शक्तितोऽविशेषेण नानार्थमभिधत्ते, तेनाभिधीयमाने स्वाभिमतार्थे यदभिदधतोऽभिमतादर्थादन्यमनभिमतमर्थं प्रकल्प्य दूषणाभिधानं, **किमुक्तं ?** स्वाभिप्रेतार्थप्रतिपादनाय प्रयुक्ते सम्भवद्विशेष्यविशेषणसाधारणार्थसमर्पणकौशलशालिनि शब्दे यत्प्रयोक्तुरभिप्रेतमर्थं निहुत्य ततोऽर्थान्तरं परिकल्प्य व्याघातदोषोद्भावनं **यथा** "नवः कम्बलोऽस्यासौ नवकम्बलः" इत्यभिनवकम्बलयोगाभिप्रयेण प्रयुक्ते **"नवकम्बलोऽयं माणवकः"** इति शब्दे प्रयोक्तुरभिप्रेतादर्थादर्थान्तरं "नव कम्बला अस्यासौ नवकम्बलः" इति नवकम्बलयोगं परिकल्प्य **नास्य नव कम्बलाः सन्ति दरिद्रत्वात्, नह्यस्य द्वित्वमपि सम्भाव्यते कुतो नव"** इति, तद् **"वाक्छलं"** नानार्थसाधारणः शब्दो वाक्, तन्निमित्तं छलं वाक्छलमिति तद्व्युत्पत्तेरिति भावः ॥१२॥

**सामान्यच्छलं** लक्षयति—

**"सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्"** ॥ १३ ॥

सम्भवतः=सम्भवति यस्तस्य सम्भावनाविषयस्य तात्पर्य्यविषयस्येति यावदर्थस्य=वादिनाऽभिहितस्यार्थस्य प्रतिषेधाय यदतिसामान्ययोगात्=सम्भवन्तमर्थमतिक्रम्य वर्तमानस्य सामान्यधर्मस्य समवायादसम्भूतार्थकल्पना=असम्भवार्थस्य कल्पनं, तत् सामान्यच्छलं=सामान्यच्छलपदवाच्यमित्यर्थः ।

सम्भवन्तमर्थं व्याप्नोति चात्येति च यत्सामान्यं तद् **"अतिसामान्यम्"** अतिव्यापकं सामान्यमिति व्यपदिश्यते । तस्य सम्बन्धाद् हेतोर्यद् वादिप्रोक्तस्य सम्भवतोऽर्थस्य प्रतिषेधार्थमसम्भवार्थस्य कल्पनं, **किमुक्तं ?** वादितात्पर्य्यविषयीभूतस्यार्थस्य यत्सामान्यधर्मातिव्याप्तिबलेनासम्भवार्थकल्पनया प्रतिषेधनं **यथा** कश्चिन्महाभागो दूरादागच्छन्तं वैदिकधर्मोपदेष्टारं

वाग्मिमौलिरत्नं भगवन्तं श्रीमत्परमहंसपरिव्राजकाचार्य्यं **"महर्षिस्वामिदयानन्दसरस्वतीपादम्"** अवलोक्य चिराद् धर्मोत्सुकं भद्रवेशं नागरिकवृन्दं सम्बोधयन्नाह **"अहो नु खल्वसौ जगद्विख्यातकीर्तिरखिलजनवन्द्यो ब्रह्मवर्चस्वी देशात्मोद्धारकाग्रणीः प्रभुवरो वैदिकधर्मोपदेष्टा परिव्राड्"** इति। एतदनुजानन् पुण्यजन्मा कश्चिदपरो वादी प्राह **"सम्भवति परिव्राजि देशात्मोद्धारार्थं वैदिकधर्मोपदेष्टृत्वम्"** इति। तमेतं वादिप्रोक्तं सम्भवन्तमर्थं **"परिव्राट्त्व"** रूपसामान्यधर्मस्य सम्बन्धादसम्भवार्थकल्पनया दूषयन् परः छलवादी प्रत्यवतिष्ठते **"चेत् परिव्राजि देशात्मोद्धारार्थं वैदिकधर्मोपदेष्टृत्वं सम्भवति, तदा कृतनानावेषेष्वन्येष्वपि भिक्षुषु सम्भवेत्, अस्ति तेष्वपि परिव्राट्त्वं, परन्तु न ते वैदिकानां वचनमात्रेणापि सत्कारानर्हाः किल बकबिडालव्रतचरा भारतभूमिभाराः सम्प्रति वैदिकधर्मोपदेष्टारो दृश्यन्ते, तत्कथमाश्चर्य्यवदनुजानीषे वादिन्! "सम्भवति परिव्राजि देशात्मोद्धारार्थं वैदिकधर्मोपदेष्टृत्वम्"** इति, तत् **"सामान्यच्छलं"** सामान्यनिमित्तं छलं सामान्यच्छलमिति तद्व्युत्पत्तेरिति भावः ॥ १३ ॥

**उपचारच्छलं** लक्षयति—

**"धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्"** ॥ १४ ॥

धर्मविकल्पनिर्देशे=शक्तिलक्षणे वृत्ती धर्मः, तस्य विकल्पेन शक्त्या वा लक्षणया वा वृत्त्या शक्तिलक्षणयोरेकतरवृत्त्येति यावद् निर्देशे शब्दनिर्देशे प्रयुक्ते शब्दे योऽर्थसद्भावप्रतिषेधः=तदपरवृत्त्या परिकल्पितस्यार्थस्य सत्तायाः निषेधः, स उपचारच्छलम्=उपचारच्छलपदार्थ इत्यर्थः।

शब्दस्य तावदर्थप्रत्यायिका द्वयी वृत्तिः शक्तिर्लक्षणा च। तत्रोत्सर्गात्मिका शक्तिः, सार्वत्रिकत्वात्। अपवादात्मिका लक्षणा, क्वाचित्कत्वात्।

**मुख्या** शक्तिर्निरपेक्षत्वात्। **अमुख्या** च लक्षणा सापेक्षत्वात्। **तयो**-र्द्वयोर्लक्षणया वृत्त्या स्वाभिप्रेतस्यार्थस्य प्रतिपादनाय वादिना प्रयुक्ते शब्दे शक्त्याऽर्थान्तरं परिकल्प्य शक्त्या वा वृत्त्या प्रयुक्ते शब्दे लक्षणयाऽर्थान्तरं परिकल्प्य यत् तत्सत्ताप्रतिषेधमुखेन वचनविघातलक्षणदूषणाभिधानं, तदुपचारच्छलम्। **किमुक्तं?** मुख्यामुख्यवृत्त्योरेकतरवृत्त्या प्रयुक्तस्य शब्दस्य यत् तदपरया वृत्त्याऽर्थान्तरं परिकल्प्य निषेधनं, **यथा** लक्षणया प्रयुक्तस्य **"मञ्चाः क्रोशन्ति"** इति शब्दस्य शक्त्याऽर्थान्तरं परिकल्प्य **"मञ्चस्थाः क्रोशन्ति न मञ्चाः"** इति, शक्त्या वा प्रयुक्तस्य **"अहं नित्यः"** इति शब्दस्य लक्षणयाऽर्थान्तरं परिकल्प्य **"अमुकस्मादुत्पन्नस्त्वं न नित्यः"** इति, तद् **"उपचारच्छलम्"** उपचारो लक्षणा, तन्निमित्तं छलमुपचारच्छलमिति तद्व्युत्पत्तेरिति भावः ॥ १४ ॥

छलं त्रेधा विभज्य विशेषतो लक्षितम्। **इदानीं** तत्त्रैधात्वं व्यवस्थापयितुकामः पूर्वन्तावत् पूर्वपक्षयति—

**"वाक्छलमेवोपचारच्छलं तदविशेषात्"** ॥ १५ ॥

उपचारच्छलम्=उपचारच्छलपदवाच्यं वाक्छलमेव=अर्थान्तरत्वाभावोऽवधारणार्थः, वाक्छलतोऽर्थान्तरं न भवति, **कुतः?** तदविशेषात्=ततो विशेषो भेदस्तदभावात् तत्प्रतियोगिकभेदाश्रयत्वाभावादित्यर्थः।

**यथा** हि वाक्छले वादिना प्रयुक्तः शब्दोऽर्थान्तरं परिकल्प्य प्रतिषिध्यते तथोपचारच्छलेऽप्यर्थान्तरं परिकल्प्य प्रतिषिध्यते। परिकल्पनस्य प्रतिषेधस्य चोभयत्र समानत्वेन भेदाभावाद् भवति प्रतिपत्तिर्वाक्छलमेवोपचारच्छलं न जात्वर्थान्तरमिति भावः ॥ १५ ॥

हेत्वसिद्ध्या परिहरति—

**"न तदर्थान्तरभावात्"** ॥ १६ ॥

न=वाक्छलमेवोपचारच्छलं न, **कुतः?** तदर्थान्तरभावात्=ततो भिन्नपदार्थत्वात् तत्प्रतियोगिकभेदाश्रयत्वादित्यर्थः।

**यद्यपि** वाक्छलोपचारच्छलयोः परिकल्पनं प्रतिषेधनं चोभयं समानं विद्यते **तथापि** नैतावता साधर्म्येण तद्भेदो निह्नोतुं शक्यते। वाक्छले हि शक्त्या प्रयुक्तः शब्दः शक्त्यैवार्थान्तरं परिकल्प्य प्रतिषिध्यते, ततोऽपरस्मिन्नुपचारच्छले तु लक्षणया प्रयुक्तः शब्दः शक्त्याऽर्थान्तरं परिकल्प्य शक्त्या वा प्रयुक्तः शब्दो लक्षणयाऽर्थान्तरं परिकल्प्य प्रतिषिध्यते। **किंबहुना**—वाक्छले वस्त्वभ्युपगम्य तद्धर्मो निषिध्यते "एकोऽस्य कम्बलो न नव" इति। उपचारच्छले तु वस्तुसत्तैव निषिध्यते "नैव क्रोष्टारो मञ्चाः" इति। सोऽयमनयोर्महान् विशेषः। सति चैनयोरीदृशि महति विशेषे **"तदविशेषात्"** इत्यसिद्धो हेतुः। तदसिद्धौ च **"वाक्छलमेवोपचारच्छलम्"** इति सुतरामसिद्धम्। अतस्त्रेधैव छलं न द्वेधेति भावः ॥ १६ ॥

विपक्षे बाधकमाह—

**"अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः" ॥ १७ ॥**

चार्थो वाकारः। किञ्चित्साधर्म्यात्=यत्किञ्चित्साधर्म्यादविशेषे वा=वाक्छलोपचारच्छलयोर्विशेषाभावे चैकच्छलप्रसङ्गः=एकविधमेव सर्वं छलं प्रसज्येतेत्यर्थः।

चेदुक्तलक्षणकात्साधर्म्यादुपचारच्छलं वाक्छलतो न विशिष्यते **तदा** सामान्यच्छलेनापि न विशेष्टव्यम्। अस्ति तत्रापि तदेव साधर्म्यम्। नहि सामान्यनिमित्ते सत्यपि तस्मिन्नर्थविकल्पोपपत्त्या वादिप्रयुक्तः शब्दो न व्याहन्यते। व्याहन्यते चेत् **तदा** यत्किञ्चित्साधर्म्यस्य सद्भावेन विशेषाभावादेकविधमेव सर्वं छलं प्रसज्येत। न त्वदभिमतं वाक्छलसामान्यछलभेदतो द्विविधम्। यदि यत्किञ्चित्साधर्म्ये सत्यप्यवान्तरवैधर्म्यात्सामान्यच्छलं वाक्छलतो विशिष्टमिष्यते। तर्ह्युपचारच्छलमपि ततो विशिष्टमेष्टव्यम्। अवान्तरवैधर्म्यस्य तत्राप्युक्तत्वात्। अतो न वाक्छलमेवोपचारच्छलं किन्तु ततोऽर्थान्तरमिति भावः ॥ १७ ॥

अथ क्रमप्राप्तां **जातिं** लक्षयति—

**"साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" ॥ १८ ॥**

साधर्म्यवैधर्म्याभ्यां=साधर्म्येण च वैधर्म्येण च प्रत्यवस्थानं=प्रतीपमवस्थानं वादिनाऽवस्थापितस्य साध्यधर्मस्य प्रतिषेधनं स्थापनाहेतौ दूषणाभिधानमिति यावद् जातिः=जातिपदवाच्यमित्यर्थः ।

**यत्** खलु स्थापनाहेतौ प्रयुक्ते व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थीयते, **किमुक्तं** ? वादिना स्थापितस्य साध्यधर्मस्य प्रतिषेधासमर्थो हेतुरुपादीयते, **किंबहुना**—यद् छलवद् वस्तुतो दूषणं न भवति केवलमात्मरक्षार्थं वा पराभिभूत्यै वा क्वचित्साधर्म्यबलेन क्वचिच्च वैधर्म्यबलेन स्थापनाहेतौ दूषणबुद्ध्याऽभिधीयते, सा प्रत्यनीकभावेन जायमानत्वात् "**जातिः**" इति भावः ॥

**तत्र** साधर्म्यं वैधर्म्यं च नोदाहरणेन विवक्षितम्, **अपि च** ? येन केनचिदुदाहरणेन वा पक्षेण वा हेतुना वेति न निर्बन्ध इति विवेकः ॥१८॥

**निग्रहस्थानं** लक्षयति—

**"विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्"** ॥ १९ ॥

विप्रतिपत्तिः=विरुद्धा प्रतिपत्तिः साधनाभासे साधनबुद्धिः दूषणाभासे च दूषणबुद्धिः, अप्रतिपत्तिः=आरम्भविषयेऽनारम्भः, आरम्भस्य विषयः साधने दूषणं दूषणे चोद्धारः, तयोरकरणमिति यावत्, विप्रतिपत्तिरप्रतिपत्तिश्चेत्येतद्द्वयं निग्रहस्थानं=निग्रहस्थानपदवाच्यमित्यर्थः ।

**यस्तावत्** परेणोक्तं विपरीतं प्रतिपद्यते, स्थापितं वा न प्रतिषेधति, प्रतिषेधं च नोद्धरति, स नूनं विप्रतिपद्यमानः कर्तव्यमनारम्भमाणो वा पराजीयते । तस्मात् यां चैषा विप्रतिपत्तिरप्रतिपत्तिश्च, तदेव "**निग्रहस्थानं**" पराजयो निग्रहस्तस्य स्थानमाश्रयः कारणमिति तद्व्युत्पत्तेरिति भावः ॥ १९ ॥

**ननु** कियत्यो जातयः कियन्ति च निग्रहस्थानानि ? तत्राह—

**"तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम्"** ॥ २० ॥

तद्विकल्पात्=साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विप्रतिपत्त्यप्रतिप-

त्योश्च विकल्पात् विविधः कल्पो विकल्पः वैचित्र्यं प्रकारभेद इति यावत्, तस्मात् जातिनिग्रहस्थानबहुत्वं=जातेश्च निग्रहस्थानस्य च नानात्वमित्यर्थः।

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाद् बह्वयो जातयः, विप्रतिपत्त्यप्रतिपत्त्योश्च विकल्पाद् बहूनि निग्रहस्थानानीति भावः॥

तत्र चतुर्विंशतिधा जातिः। द्वाविंशतिधा निग्रहस्थानम्। एतत्सर्वमग्रे पञ्चमाध्याये विस्पष्टमिति विवेकः॥२०॥

**वादो जल्पो वितण्डा च हेत्वाभासाश्च पञ्चधा।**
**छलादयस्त्रयश्चैते द्वितीयेऽस्मिन् सुलक्षिताः॥१॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ**

**प्रथमाध्यायस्य द्वितीयमाह्निकम्॥२॥**



**समासश्चायंलक्षणाध्यायः प्रथमः॥१॥**





# द्वितीयोऽध्यायः

## आद्यमाह्निकम्

**प्रथमाध्याये** स्वाभिमताः **प्रमाणादयः** पदार्था उद्दिष्टाः । यथोद्देशञ्च लक्षिताः । **सम्प्रति** ते यथालक्षणं परीक्षणीया इति **द्वितीयोऽध्यायः** प्रारभ्यते । तत्र परीक्षाङ्गत्वेन संशयस्य प्रथममुपस्थितत्वात् तमेव प्रमाणादितः पुरस्तादाद्येऽस्मिन्नाह्निके परीक्षयिष्यन् पूर्वन्तावत्पूर्वपक्षयति—

**"समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः"** ॥ १ ॥

समानानेकधर्माध्यवसायात्=साधारणो धर्मः समानधर्मः, असाधारणो-धर्मोऽनेकधर्मः, तयोरुपपत्तिरध्यवसायस्तस्मात्, अन्यतरधर्माध्यवसायाद्वा=समानानेकधर्मयोरन्यतरस्य समानधर्मस्य वाऽनेकधर्मस्य वाऽध्यवासायात्संशयः=धर्मिणि संशयो न=न सम्भवतीत्यर्थः ।

**"समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः"** (न्या० १।१।२३) इति यत्संशयलक्षणमुक्तं **तत्र** "समानानेकधर्मोपपत्तेः संशयः" इत्येतद-**युक्तं**, समानधर्मस्यानेकधर्मस्य चोपपत्तेः तयोरन्यतरस्योपपत्तेर्वा धर्मिसंशयाहेतुत्वात् । **न**ह्यर्थान्तरभूतस्योपपत्त्याऽर्थान्तरभूते संशयः कथञ्चिदुत्पत्तुमर्हति । **न** जातु रूपस्यार्थान्तरभूतस्याध्यवसायादर्थान्तरभूते स्पर्शे संशयः केनचिद् दृष्टः । अर्थान्तरभूतौ च सामनानेकधर्मौ धर्मिणः सकाशात् । **अतः** कथं तत्र संशयो जायेत । धर्माध्यवसायाद् धर्मविशिष्टधर्म्यध्यव-

सायपरिग्रहे तु सुतरामनुपपन्नः संशयः। अधिगते धर्मिणि संशयासम्भवादिति भावः ॥ १ ॥

"समानानेकधर्मोपपत्तेः संशयः" इति निराकृतम्। इदानीं "विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयः" इति निराकुर्वन्नाह—

**"विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च" ॥ २ ॥**

न संशय इत्यनुवर्तते। अप्यर्थश्चः। विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च= विप्रतिपत्तेरव्यवस्थायाश्चाध्यवसायादपि संशयो न सम्भवतीत्यर्थः।

**"विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयः"** इति यदुक्तं, तदयुक्तम्। लोकमताध्यवसायमात्रेण विशेषधर्मस्योपलब्ध्यनुपलब्ध्योरव्यवस्थाज्ञानेन च संशयोदयासम्भवात्। नहि "अस्त्यात्मेत्येके, नास्त्यात्मेत्यपरे" इति लोकमतमध्यवस्यन् कश्चिदात्मनि संशेते। विप्रतिपन्नवस्तुनिश्चायकस्य विशेषधर्मस्योपलब्धिरव्यवस्थिताऽनुपलब्धिश्चाव्यवस्थितेति विभागेन जानन् वा सन्दिग्धे। यतश्च यस्य न जातूदयसम्भवस्तत् तस्य कारणमिति रिक्तं वच इति भावः ॥ २ ॥

ननु कस्मात्पुनर्विप्रतिपत्तेर्न संशयः? तत्राह—

**"विप्रतिपत्तौ च सम्प्रतिपत्तेः" ॥ ३ ॥**

न संशय इत्यनुवर्तते। विप्रतिपत्तौ च=पूर्वोक्तलक्षणायां विप्रतिपत्तौ च सम्प्रतिपत्तेः=वादिप्रतिवादिनोर्द्वयोः सम्प्रतिपत्तेः निश्चयसद्भावान्न संशय इत्यर्थः।

यां हि विप्रतिपत्तिं भवान् संशयहेतुं मनुते, न साऽस्ति विप्रतिपत्तिः, अपि च? सम्प्रतिपत्तिः। वादिप्रतिवादिनोरुभयोस्तत्र निश्चयस्य सद्भावात्। नह्यस्त्यात्मेति जानाना आत्मास्तित्वं नास्त्यात्मेति मन्वानाश्चात्मनास्तित्वं न सम्प्रतिपद्यन्ते। सम्प्रतिपत्तेश्च न क्वचित्संशयो दृष्टः। न वा तस्यास्तद्धेतुत्वमुपपद्यते। कार्य्यकारणयोर्वैरूप्यप्रसङ्गादिति भावः ॥ ३ ॥

ननूपलब्ध्यनुपलब्ध्यव्यवस्थातः कुतो न संशयः? तत्राह—

**"अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः" ॥ ४ ॥**

न संशय इत्यनुवर्तते । अव्यवस्थायाः=उक्तरूपाया अव्यवस्थाया अव्यवस्थात्मनि=स्वात्मनि व्यवस्थितत्वाच्च=प्रतिष्ठितत्वाच्च न संशय इत्यर्थः ।

येयमुपलब्ध्यनुपलब्ध्यव्यवस्था खलु संशयहेतुः प्रतिज्ञायते । सा किं स्वात्मनि व्यवस्थिता विद्यते, अथवाऽव्यवस्थिता ? । व्यवस्थिता चेत् तर्हि नेयमव्यवस्था स्यात्, व्यवस्थानादित्यनुपपन्नः संशयः । अव्यवस्थिता चेत् तर्हि कथमियमव्यवस्था स्यात्, स्वात्मन्येवातादात्म्यादिति सुतरामनुपपन्नः संशय इति भावः ॥ ४ ॥

ननु समानधर्मोपपत्त्यादेः सर्वत्र संशयहेतुत्वदर्शनात्कथमसंशयः ? तत्राह—

**"तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः" ॥ ५ ॥**

चोऽनुवर्तते । तथा च=समानधर्मोपपत्त्यादेः संशयहेतुत्वे चात्यन्त संशयः=उच्छेदोऽन्तस्तमतिक्रान्तश्चासौ संशयः स्यात्, कुतः ? तद्धर्मसातत्योपपत्तेः=तेषां समानानेकधर्माणां सातत्येन सततभावेन सर्वदोपपत्तिसम्भवादित्यर्थः ।

यस्य खलु धर्मस्योपपत्तिः संशयहेतुः परिकल्प्यते, स धर्मिणि सततमनुवर्तते । नहि धर्मिणि न सततमनुवर्तेत तद्धर्मतां चाश्नुवीतेति सम्भवति । तस्य तत्र सततमनुवृत्तेश्च तदुपपत्तिरपि सततमुपपद्यते । धर्मिग्रहणस्य धर्मग्रहणपूर्वकत्वनियमात् । धर्मी चैष गृह्यमाणस्तद्धर्मैव सततं गृह्यते, नातद्धर्मेति सर्वानुभवसिद्धम् । अतः सततभावेन सम्भवन्त्याः कारणभूतायास्तस्याः कार्य्यभूतेन संशयेनापि सततभावेनैव भवितव्यम् । सातत्येन सम्भवति कारणे कार्य्यसम्भवस्यापि तथैवावश्यकत्वात् । किमुक्तं ? समानधर्मोपपत्त्यादिकञ्चेत् संशयकारणं तदा यथेदं पूर्वं कार्य्यं करोति तथा पश्चादपि कुर्य्यादित्यत्यन्तसंशय इति भावः ॥ ५ ॥

जातः पूर्वः पक्षः, सम्प्रति तत्परिहारो वक्तव्यः ? तत्राह—

**"यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा" ॥ ६ ॥**

तद्विशेषापेक्षात्=तस्य संशयधर्मिणो ये स्थाणुत्वपुरुषत्वादयो विशेषधर्मास्तानपेक्षते यस्तस्मात् तद्विशेषधर्मस्मृतिविशिष्टाद् यथोक्ताध्यवसायादेव=अन्ययोगव्यवच्छेदोऽवधारणार्थः, उपलब्ध्यनुपलब्ध्यव्यवस्थासहकृतात्समानधर्मोपपत्त्यादिकादेव कारणात्संशये=संशये सम्भवति नासंशयः=न संशयाभावो नात्यन्तसंशयो वा=न संशयानुच्छेदो वा सम्भवतीत्यर्थः ।

**यदि** वयं केवलं समानधर्मोपपत्त्यादिकं संशयकारणं ब्रुवीमहि **तदा** तस्य कारणत्वासम्भवादसंशयः कारणत्वसम्भवाद्वाऽत्यन्तसंशयः प्रसज्येत । **परं** न वयं तत् केवलं संशयकारणं ब्रूमहे, **अपिच ?** तद्विशेषापेक्षाविशिष्टम् । **अतः** समानानेकधर्मोपपत्तौ विप्रतिपत्तौ वा सत्यां **यदाऽयं** प्रतिपत्ता विशेषधर्मोपलब्धेस्तदनुपलब्धेश्च व्यवस्थानं न पश्यति, प्रथमानुभूतयोः प्रत्यनीकधर्मयोश्च स्मरति, स्मृतयोश्च तयोर्मिथोविरुद्धत्वादेकत्रभावं तदविनाभूतस्य धर्मस्य दर्शनाच्च नाप्यभावं सम्भावयति, **तदाऽस्य** समानानेकधर्माश्रयत्वेन विप्रतिपत्त्याश्रयत्वेन वाऽवधारिते धर्मिणि विशेषावधारणाभावात् संशय एव जायते नासंशयो नवाऽत्यन्तसंशयः । **किमुक्तम् ?** उच्चैस्तरत्वादिसाधारणधर्माश्रयत्वेन द्रव्याश्रयित्वाद्यसाधारणधर्माश्रयत्वेन वा विरुद्धकोटिद्वयोपस्थितिलक्षणविप्रतिपत्त्याश्रयत्वेन वाऽधिगते धर्मिणि तत्त्वजिज्ञासायां तज्ज्ञापकस्य वक्रकोटरशिरःपाणिद्रव्याश्रयित्वप्रामाणिकत्वादिविशेषधर्मस्योपलम्भानुपलम्भयोरव्यवस्थितत्वेन स्थाणुत्व-पुरुषत्वादिसामान्यविशेषधर्मान् स्मरतो विशिष्टकारणस्य सद्भावाद् विशेषानवधारणात्मकः संशय एव सम्भवति नाकारणत्वप्रयुक्तोऽसंशयो न वा विशिष्टस्य कारणत्वाभ्युपगमेनाविशिष्टकारणप्रयुक्तोऽत्यन्तसंशय इति । **यच्चोक्तं** समानानेकधर्मोपपत्त्यादिवदुपलब्ध्यनुपलब्ध्यव्यवस्थाऽपि न संशयकारणमिति । **तद्** वयमनुमन्यामहे । **नहि** सा समानधर्मोपपत्त्यादिकारणत्रितयवत् संशयस्य मुख्यं कारणमभ्युपगम्यते **किन्तु** सहकारिकारणम् । **तच्च** केवलमकारणमिति सर्वसम्प्रतिपन्नम् । तस्याश्च स्वरूपापेक्षया व्यवस्थितत्वेऽपि विषयापेक्षयाऽव्यवस्थितत्वात् **"अव्यवस्थात्मनि व्यवस्थितत्वादव्यवस्थायाः"** इति यत्किञ्चिदेतत् । **एवं** विप्रतिपत्ते-

रपि स्वरूपापेक्षया सम्प्रतिपत्तित्वेऽपि विषयापेक्षया विप्रतिपत्तित्वात् **"विप्रतिपत्तौ च सम्प्रतिपत्तेः"** इति न किञ्चिदेतत् । **तथाच** सर्वमनवद्यमिति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि **"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः"** ( न्या० १।१।४१ ) इति निर्णयात्मिकायाः परीक्षायाः संशयपूर्वकत्वावश्यम्भावेनादौ संशयः, तदनन्तरं पूर्वः पक्षः, ततश्चोत्तरः पक्ष इति तत्प्रक्रिया युक्ता, **तथाप्युपन्यस्ताभ्यां** पूर्वोत्तरपक्षाभ्यां संशयस्य स्वयं कल्प्यत्वान्न तमाचार्य्योऽत्र पूर्वमुपन्यास्थत् । अतो न कश्चिद्दोष इति ॥ ६ ॥

**कारणमुखेन** संशयः परीक्षितः । **सम्प्रति** तत्परीक्षाप्रकारं पदार्थमात्रभाविनि परीक्षाङ्गभूते संशयमात्रेऽतिदिशन् शिक्षयति—

**"यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः"** ॥ ७ ॥

यत्र=परीक्ष्यमाणे यस्मिन् पदार्थे संशयः=जायमानः परीक्षाङ्गभूतः संशयः परैः कारणसम्भवासम्भवाभ्यामाक्षिप्यते, तत्र=तस्मिन् एवं=पूर्वोक्तेन प्रकारेणोत्तरोत्तरप्रसङ्गः=पूर्वपक्षोत्तरभाविनः समाधानात्मकस्योत्तरपक्षस्य प्रसक्तिः प्राप्तिः प्रसङ्गो बोद्धव्य इत्यर्थः ।

**यत्र** परीक्षाङ्गत्वेनोपन्यस्तः संशयः परैरुक्तैः संशयाक्षेपहेतुभिराक्षिप्यते **तत्र** सर्वत्र परीचिक्षिषमाणेन विपश्चिता तैस्तैरुक्तैः समाधानहेतुभिः स समाधेय इति भावः ॥ ७ ॥

**परीक्षाङ्गभूतः** संशयः परीक्षितः, तत्परीक्षाप्रकारश्च तथाभूते संशयमात्रेऽतिदिष्टः । **इदानीमुद्देशक्रमप्राप्तानि प्रमाणानि** परीचिक्षिषुराचार्य्यः पूर्वन्तावत्सामान्यतस्तत्परीक्षामवतारयन् पूर्वपक्षयति—

**"प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः"** ॥ ८ ॥

प्रत्यक्षादीनां=प्रत्यक्षानुमानोपमानशब्दानामप्रामाण्यं=प्रमाणत्वं न सम्भवति, **कुतः** ? त्रैकाल्यासिद्धेः=पूर्वं पश्चाद् युगपदिति त्रयाणां कालानां

समाहारः त्रिकालं, त्रिकालमेव त्रैकाल्यं, स्वार्थे ष्यञ्, तस्मिन् कालत्रयेऽसिद्धेः असिद्धत्वादित्यर्थः ।

**प्रमेय**सिद्धिहेतुत्वम् अनधिगताबाधितार्थसाधकत्वमिति यावद्धि **प्रामाण्यम्** । तच्च सिद्धे धर्मिणि वर्तितुमर्हति नासिद्धे । धर्मत्वात् । यानि च शशविषाणादिवत् कालत्रयेऽपि न सिध्यन्ति, **किमुक्तं** ? त्रिष्वपि कालेषु नार्थं साधयन्ति, तत्र तत्कथं वर्तेत । प्रत्यक्षादीनि च तथा, न प्रमेयसिद्धितः पूर्वं न पश्चात् नवा तत्समकालं सिध्यन्ति । **तस्मात्** तेषामप्रामाण्यमिति भावः ॥ ८ ॥

**ननु** कुतस्तेषां त्रैकाल्यासिद्धिः ? तत्राह—

**"पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षोत्पत्तिः" ॥ ९ ॥**

हि=यतः पूर्वं=प्रमेयसिद्धितः पूर्वं प्रमाणसिद्धौ=प्रत्यक्षादिप्रमाणसिद्धाविन्द्रियार्थसन्निकर्षात्=इन्द्रियार्थयोः सम्बन्धात् प्रत्यक्षोत्पत्तिः=प्रत्यक्षप्रमाणोत्पत्ति र्नोपपद्यत इत्यर्थः ।

**ज्ञानं** हि प्रमाणं तद्योगादर्थश्च प्रमेयः । **चेत्** तत्सिद्धितः पुरस्तात्प्रत्यक्षादीनि प्रमाणानि सिध्येयुः **तदा** प्रमेयसिद्धेः प्रमाणसिद्ध्यधीनतया तेभ्यः पूर्वं नासावर्थ इति प्रसज्येत । **तथाच** "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्" ( न्या० १।१।४) इति सूत्रव्याघातः । **तत्र** तदुत्पत्तितः पूर्वं तत्कारणत्वेनार्थस्याभ्यनुज्ञानात् । **तच्चायुक्तम्** । **अतो** भवति प्रतिपत्तिर्नैतावत् प्रमेयसिद्धितः पूर्वं प्रत्यक्षादीनि प्रमाणानि सिध्यन्तीति भावः ॥९॥

**ननु** माभूत् प्रमेयसिद्धितः पूर्वं प्रमाणसिद्धिः, पश्चाद् भविष्यति ? तत्राह—

**"पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः" ॥ १० ॥**

पश्चात्=प्रमेयसिद्धितः पश्चात् सिद्धौ=प्रमाणसिद्धौ प्रमाणेभ्यः=हेतुत्वं पञ्चम्यर्थः, प्रमाणहेतुका प्रमेयसिद्धिः=प्रमेयस्य सिद्धिर्न स्यादित्यर्थः ।

**प्रमाणेन** खलु प्रमीयमाणोऽर्थः **"प्रमेयः"** इत्येतत् सिध्यति । **चेत्**

प्रमेयसिद्धितः पश्चात् प्रमाणसिद्धिः स्यात् **तदा** प्रमेयसिद्धितः पूर्वं प्रमाणाभावे सति केन प्रमीयमाणोऽर्थः प्रमेयो भवेत् । **नहि** प्रमाणमन्तरा प्रमेयं कश्चिदात्मानं लभते । **किमुक्तं**? यद्यप्यर्थस्य स्वरूपं न प्रमाणाधीनं **तथापि** तस्य प्रमेयत्वं तदधीनमेव । **तत्र** चेत् पूर्वं प्रमेयं पश्चात् प्रमाणं **तदा** "प्रमाणेभ्यः प्रमेयसिद्धिः" इत्येतत् **"उभयसिद्धिः प्रमाणात्तदुपदेशः"** ( सां० १।१०२ ) इति सूत्रं च व्याहन्येत । **नचैतद्** युक्तम् । **अतो** भवति विज्ञातं न प्रमेयसिद्धितः पश्चात् प्रत्यक्षादीनि प्रमाणानि सिध्यन्तीति भावः ॥ १० ॥

**ननु** पूर्वापरीभावेन मासिद्धां प्रमाणप्रमेये, युगपत्सेत्स्यतः? तत्राह—

**"युगपत् सिद्धौ प्रत्यर्थनियतत्वात्**
**क्रमवृत्तित्वाभावो बुद्धीनाम्"** ॥ ११ ॥

युगपत्सिद्धौ=प्रमाणप्रमेययोरुभयोरेकस्मिन् काले सिद्धौ बुद्धीनां=प्रमाणज्ञानानां क्रमवृत्तित्वाभावः=क्रमवृत्तित्वं न भवेत्, **कुतः**? प्रत्यर्थनियतत्वात्=प्रतिप्रमेयं नियमेन वर्तमानत्वादित्यर्थः ।

**यदि** प्रमाणं प्रमेयं चोभे युगपत् सिध्येतां **तदा** यदा प्रमाणं तदा प्रमेयं यदा प्रमेयं तदा प्रमाणमिति युगपत् सिध्यत्सु गन्धादिप्रमेयेषु प्रतिप्रमेयं नियतत्वाद् युगपत्सिध्यतां तद्गोचरप्रमाणज्ञानानां क्रमवृत्तित्वं न स्यात् । प्रतिप्रमेयं च क्रमवृत्तीनि ज्ञानानि दृश्यन्ते । **तथाच** दृष्टव्याघातः । **"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"** ( न्या० १।१।१६ ) इति सूत्रव्याघातश्च । तदेतदयुक्तम् । **तस्मात्** प्रतिपद्यते न प्रमेयसिद्धिसमकालमपि प्रत्यक्षादीनि प्रमाणानि सिध्यन्तीति सिद्धं **"त्रैकाल्यासिद्धेः प्रत्यक्षादीनामप्रामाण्यम्"** इति भावः ॥ ११ ॥

**जातः** पूर्वः पक्षः, **सम्प्रति** तत्परिहारो वक्तव्यः? **तत्राह**—

**"त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः"** ॥ १२ ॥

त्रैकाल्यासिद्धेः=प्रत्यक्षादीनां त्रिषु कालेष्वसिद्धेः प्रतिषेधानुपपत्तिः=तत्प्रामाण्यप्रतिषेधो नोपपद्यते इत्यर्थः ।

**त्रिष्वपि कालेषु चेत्** प्रत्यक्षादीनि प्रमाणानि न सिध्यन्ति **तदा** कस्य प्रामाण्यं प्रतिषिध्यते। **नह्यसति** धर्मिणि तद्धर्मः प्रतिषेद्धुं शक्यते। सति कुड्ये हि चित्रम्। **अतः** प्रत्यक्षादीनामप्रामाण्यमिति यत्किञ्चिदेतत्।

**किञ्च** यश्चायं प्रतिषेधः "प्रत्यक्षादीनामप्रामाण्यम्" इति। स किं प्रत्यक्षादीनामर्थसाधकत्वलक्षणसामर्थ्यस्य प्रतिषेधः आहोस्वित् तत्सत्तायाः ?। **सामर्थ्यप्रतिषेधश्चेत् तर्हि** न प्रत्यक्षादीनि प्रतिषिद्धानि भवन्ति। सामर्थ्यमात्रप्रतिषेधात्। **सत्ताप्रतिषेधश्चेत् तर्हि** वक्तव्यं कथं न सन्ति किं सामान्यतोऽथवा विशेषतः ?। **यदि** सामान्यतः **तर्हि** प्रत्यक्षादिग्रहणं व्यर्थं, प्रमाणानि न सन्तीति वक्तव्यं। **नचैवं** वक्तव्ये किञ्चिदनुमानं तत्प्रतिषेद्धुं प्रभवति। हेतोराश्रयासिद्धेः। **अथ** विशेषतः ? **तर्हि** प्रमाणान्तराभ्युपगमो जातः। **नह्यनभ्युपगतसामान्यस्य** विशेषतः प्रतिषेधः सम्भवतीति सिद्धं प्रत्यक्षादीनां प्रमाण्यमिति भावः॥

**अथवा** प्रतिषेधानुपपत्तिः=प्रत्यक्षादीनामप्रामाण्यमिति प्रतिषेधो नोपपद्यते, **कुतः** ? त्रैकाल्यासिद्धेः=प्रत्यक्षादिवत् प्रतिषेधस्यापि त्रैकाल्यासिद्धेरित्यर्थः।

**यथाहि** पूर्वं पश्चात् युगपदिति त्रिष्वपि कालेषु प्रत्यक्षादीनि प्रमाणानि न सिध्यन्ति **तथा** प्रतिषेधोऽपि न सिध्यति। **पूर्वं** हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किं प्रतिषिध्यते। **पश्चात्** सिद्धौ प्रतिषेधाभावात् प्रतिषेध्यासिद्धिः। **युगपत्** सिद्धौ प्रतिषेध्यसिद्ध्यभ्यनुज्ञानादनर्थकः प्रतिषेध इति त्रैकाल्यासिध्या प्रतिषेधानुपपत्तौ सिद्धं प्रत्यक्षादीनां प्रामाण्यमिति भावः॥ १२॥

प्रतिषेधानुपपत्तौ हेत्वन्तरनाह—

**"सर्वप्रमाणप्रतिषेधाच्च"** ॥ १३॥

प्रतिषेधानुपपत्तिरित्यनुवर्त्तते। हेत्वन्तरपरश्चकारोऽप्यर्थः। सर्वप्रमाणप्रतिषेधाच्च=प्रत्यक्षादीनां सर्वप्रमाणानां प्रतिषेधादपि "प्रत्यक्षादीनामप्रामाण्यम्" इति प्रतिषेधानुपपत्तिरित्यर्थः।

**येन** खलु प्रमाणेन प्रत्यक्षादीनि प्रमाणानि प्रतिषिध्यन्ते "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः" इति। **तस्यापि** प्रत्यक्षादिसर्वप्रमाणान्तर्भूतत्वेनाप्रामाण्ये प्रतिषेधकप्रमाणाभावात् प्रतिषेधानुपपत्तिरिति भावः ॥१३॥

**ननु** येन प्रमाणेन प्रत्यक्षादीनि प्रमाणानि प्रतिषिध्यन्ते तत्प्रामाण्यमभ्युपगम्यते **अतो** न प्रतिषेधानुपपत्तिः? **तत्राह**—

**"तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः" ॥ १४ ॥**

चार्थो वाकारः। तत्प्रामाण्ये वा=तस्य प्रतिषेधकप्रमाणस्य प्रामाण्ये च सर्वप्रमाणविप्रतिषेधः=वीत्युपसर्गो विशिष्टार्थः, सुतरां सर्वप्रमाणप्रतिषेधो न=नोपपद्यत इत्यर्थः।

**येन** हि प्रमाणेन प्रत्यक्षादीनि प्रमाणानि प्रतिषिध्यन्ते **तत्** ततो व्यतिरिच्यते किंवा न व्यतिरिच्यते? । अन्त्ये तावदुक्तो दोषः। **आद्ये** सुतरां सर्वप्रमाणप्रतिषेधानुपपत्तिः। तद्व्यतिरिक्तस्य **प्रमाणस्य** प्रतिषेधकत्वेनाभ्युपगमादिति भावः ॥ १४ ॥

त्रैकाल्यासिद्धेर्हेतोः प्रत्यक्षादिवत् प्रतिषेधेऽपि साम्यात् पूर्वपक्षः परिहृतः। **सम्प्रति** तदसिद्धितामुद्भावयन् तं परिहरति—

**"त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः" १५**

चकारोऽप्यर्थः। त्रैकाल्याप्रतिषेधश्च=प्रत्यक्षादीनां त्रैकाल्यसिद्धिप्रतिषेधोऽपि न सम्भवति, **कुतः**? शब्दात्=पश्चात् सिध्यतः शब्दादातोद्यसिद्धिवत्=वीणादिचतुर्विधं वाद्यमातोद्यं, तस्य पूर्वसिद्धस्य सिद्धिवत् तत्सिद्धेः=पश्चात्सिध्यतः प्रमाणादपि तस्य पूर्वसिद्धस्य प्रमेयस्य सिद्धेरित्यर्थः।

**यदुक्तं** पूर्वं पश्चात् युगपदिति त्रिष्वपि कालेषु प्रत्यक्षादीनि प्रमाणानि न सिध्यन्ति। **तदसत्**। पश्चात् सिद्ध्यभ्युपगमे दोषाभावात्। **नच** प्रमेयासिद्धिर्दोष इति **वाच्यम्**। पश्चात् सिध्यतः शब्दात् पूर्वसिद्धवीणादिसिद्धिवत् पश्चात्सिध्यतः प्रमाणादपि प्रमेयसिद्धिसम्भवात्। **किमुक्तं**? यथाहि पश्चात्सिद्धः शब्दः पूर्वसिद्धस्यातोद्यस्य सिद्धौ भवति हेतुः यतोऽयं

प्रतिपद्यते वीणा वाद्यते वेणुः पूर्य्यत इति, **तथा** पश्चात्सिद्धं प्रमाणमपि पूर्वसिद्धस्य प्रमेयस्य सिद्धौ हेतुर्भवितुमर्हति, नास्त्यत्र कश्चिद्दोष इति त्रैकाल्यासिद्धेर्हेतोरसिद्धत्वादप्रामाण्यासिद्धे सिद्धं प्रत्यक्षादीनां प्रामाण्यमिति भावः ॥ १५ ॥

**ननु** "शब्दादातोद्यसिद्धिवत्" इत्ययुक्तं, शब्दस्य प्रमेयत्वेनाप्रमाणत्वादातोद्यसिद्धिहेतुत्वानुपपत्तेः ? तत्राह—

**"प्रमेया च तुला प्रामाण्यवत्"** ॥ १६ ॥

अप्यर्थश्चः । प्रमेया च=प्रमेया सत्यपि तुला=गुरुत्वेयत्तापरिच्छेदार्थं यया गुरु वस्तु तोल्यते सा प्रामाण्यवत्=स्वार्थे **ष्यञ्**, यथा निमित्तवशात् प्रमाणं भवति तथा शब्दोऽपि प्रमाणं भवितुमर्हतीत्यर्थः ।

**न** वयं प्रमाणं प्रमेयं चेति समाख्यासमावेशं पदार्थस्वभावात् प्रतिजानीमहे **येना**तोद्यसिद्धौ शब्दः प्रमाणं नोपपद्येत, **किन्तु** निमित्तवशात् । **सिद्धिहेतुत्वं** सिद्धिविषयत्वं च प्रमाणप्रमेयनिमित्तम् । **तद्** यत्र वर्तते स एवार्थः तत्तत्समाख्यया व्यपदिश्यते । चेत्सिद्धिविषयो भवन् कश्चिदर्थः कस्यचिदर्थान्तरस्य सिद्धौ हेतुतामापद्यते **तदा** सिद्धिहेतुत्वात् प्रमाणं सिद्धिविषयत्वाच्च प्रमेयमिति स एवैकोऽर्थोऽभिधीयते । **नच** येन प्रमेयेण भाव्यं न तेन प्रमाणेन भवितव्यमित्यस्ति कश्चिद्राजनियमः । **अतो** यथाहि तुला तुलान्तरेण स्वीयगुरुत्वेयत्तासिद्धौ विषयत्वात् प्रमेया सत्यपि सुवर्णादिगुरुत्वेयत्तासिद्धौ हेतुत्वाद् भवति प्रमाणं **तथा** शब्दोऽपि स्वगोचरसिद्धिविषयत्वात् प्रमेयो भवन्नातोद्यसिद्धौ हेतुत्वात् प्रमाणं भवितुमर्हति नास्त्यत्र कश्चिद्दोष इति भावः ॥ १६ ॥

**ननु** येयं हेत्वसिद्ध्युद्भावनमुखेन प्रमाणानां सिद्धिः समर्थ्यते **सा** किं सप्रमाणा स्यात् आहोस्विन्निष्प्रमाणा ? **स**प्रमाणा चेत् **तत्र** पूर्वपक्ष्यते—

**"प्रमाणतः सिद्धेः प्रमाणान्तरसिद्धिप्रसङ्गः"** ॥ १७ ॥

प्रमाणतः=कुतश्चित् प्रमाणात् सिद्धेः=प्रमाणानां सिद्धेः प्रमाणान्तरसिद्धिप्रसङ्गः=ततोऽन्यस्य प्रमाणस्य सिद्धिः प्रसज्येतेत्यर्थः ।

**येन** हि प्रमाणेन प्रत्यक्षादिप्रमाणानां सिद्धिरास्थीयते **तच्चेत्** ततो न व्यतिरिच्यते **तदा** स्वसिद्धौ स्वापेक्षणादात्माश्रयः। **अथ** व्यतिरिच्यते **तदा** प्रमाणान्तरसिद्धिप्रसङ्गः। **तथा च** प्रमाणान्तरस्यापि प्रमाणान्तरेण स्वसिद्ध्यपेक्षणादनवस्था, **"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"** ( न्या०-१।१।३ ) इति संख्यासूत्रव्याघातश्च स्यातामिति भावः ॥ १७॥

नन्वस्तु तर्हि निष्प्रमाणा तत्सिद्धिः ? **तत्राह—**

**"तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः"** ॥ १८ ॥

सिद्धेरित्यनुवर्तते। पक्षान्तरार्थो वाकारः। तद्विनिवृत्तेः=तदा प्रमाणं परामृशति, व्यतिरेको विनिवृत्तिः, ततः, प्रमाणं विनेति यावत् सिद्धेः= प्रमाणसिद्धेः प्रमाणसिद्धिवत्=यथा प्रमाणं विना प्रमाणानि सिध्यन्ति तथा प्रमेयसिद्धिः=प्रमेयस्यापि सिद्धिः स्यादित्यर्थः।

**चेत्** प्रत्यक्षादीनि प्रमाणानि प्रमाणं विनैव सिध्यन्ति **तदा** प्रमेयमपि तद्विनैव सेत्स्यति विशेषाभावात् **कृतं** तदभ्युपगमेनेति भावः॥१८॥

**समाधत्ते—**

**"न प्रदीपप्रकाशवत् तत्सिद्धेः"** ॥ १९ ॥

न=यदुक्तं तन्न, **कुतः** ? प्रदीपप्रकाशवत्=यथा प्रदीपप्रकाशः प्रदीपप्रकाशान्तरमन्तरा सिध्यति **तथा** तत्सिद्धेः=प्रमाणान्तरमन्तरा प्रमाणसिद्धेरित्यर्थः।

**यथा** हि प्रदीपप्रकाशः स्वसिद्ध्यर्थं प्रदीपप्रकाशान्तरं नापेक्षते **तथा** प्रत्यक्षादीनि प्रमाणान्यपि स्वसिद्ध्यर्थं न प्रमाणान्तरं किञ्चिदपेक्षन्ते। **किमुक्तं** ? यथा सिद्धिसाधनं प्रदीपः स्वसिद्धौ न प्रदीपान्तरं प्रयोजयति **तथा** प्रत्यक्षादीनि प्रमाणान्यपि सिद्धिसाधनानि सन्ति न स्वसिद्धौ प्रमाणान्तरं प्रयोजयन्ति। स्वसिद्धौ च स्वापेक्षामन्तरैव प्रदीपप्रकाशवत् स्वतः सिध्यन्ति। **तथाच** नात्माश्रयो नवा सूत्रव्याघातः। **अतः** सिद्धं सन्ति प्रमाणानि प्रमेयसाधनानीति भावः ॥ १९ ॥

सामान्यतः **प्रमाणानि** परीक्षितानि। **सम्प्रति** विशेषतः परीक्ष्यन्ते। **तत्र** प्रथमोद्दिष्टं **प्रत्यक्षं** तावत् परीक्षयिष्यन् पूर्वं पूर्वपक्षति—

**"प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्" ॥ २० ॥**

प्रत्यक्षलक्षणानुपपत्तिः="इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्" (न्या० १।१।४ ) इति प्रत्यक्षलक्षणं नोपपद्यते, **कुतः?** असमग्रवचनात्=अपूर्णत्वादित्यर्थः ।

**यदिदम् "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्"** इति प्रत्यक्षलक्षणमुच्यते । **तद्**समग्रं विद्यते, न समग्रम् । **नहीन्द्रियार्थसन्निकर्ष** एव प्रत्यक्षज्ञानकारणम् । **अपि च?** आत्ममनःसन्निकर्षोऽपि । **नच** सोऽभ्यधायि । **तस्मादनुपपन्नं** प्रत्यक्षलक्षणमिति भावः ॥ २० ॥

**नन्वात्ममनःसन्निकर्षो** न प्रत्यक्षज्ञानकारणं ? **तत्राह**—

**"नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः" ॥ २१ ॥**

आत्ममनसोः=आत्मनो मनसश्च सन्निकर्षाभावे=मनोघ्राणादिभिरिन्द्रियैः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः=प्रत्यक्षप्रमाणोत्पत्तिर्न=न भवतीत्यर्थः।

**यथा** हीन्द्रियार्थसन्निकर्षाभावे प्रत्यक्षज्ञानं नोत्पद्यते **तथात्मनसोः** सन्निकर्षाभावेऽपि नोत्पद्यते । **चेदयं** तत्कारणं न भवेत् **तदा** तदभावेऽपि तदुत्पद्येत । **नहि** यद् यस्य कारणं न भवति **तदभावे** तन्नोत्पद्यते भावे चोत्पद्यते । **दृष्टा** चात्ममनसोः सन्निकर्षे भवति तदुत्पत्तिः । **तस्मात्** प्रतिपद्यते नूनमिन्द्रियार्थसन्निकर्षवदस्यात्ममनसोः सन्निकर्षोऽपि प्रत्यक्षज्ञानकारणमितिभावः ॥ २१ ॥

**ननु** सद्भावमात्रेण चेदात्ममनसोः सन्निकर्षः प्रत्यक्षज्ञानकारणं **तदा** दिगादिभिः किमपराद्धं तान्यपि कारणं भवेयुः, अस्ति तेष्वपि सत्सु तदुत्पत्तिरिति **पार्श्वस्थः** कश्चिदाशङ्कते—

**"दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः" ॥ २२ ॥**

एवम्=आत्ममनसोः सन्निकर्षवद् दिग्देशकालाकाशेष्वपि=दिशि देशे काले व्योम्यपि प्रसङ्गः=प्रत्यक्षज्ञानकारणताप्रसङ्ग इत्यर्थः ।

**यथा** ह्यात्ममनसोः सन्निकर्षे सति प्रत्यक्षज्ञानमुत्पद्यते **तथा** दिग्देशकालाकाशेष्वपि सत्सु तदुत्पद्यते । सद्भावमात्रेण **चेत्** कारणत्वं परिकल्प्येत **तदा**ऽऽत्ममनसोः सन्निकर्षवद् दिगादिष्वपि तत् प्रसज्येत । अविशेषात् । **तेषा**मन्यथासिद्धत्वादकारणत्वे तु सुतरामात्ममनसोः सन्निकर्षोऽपि स्यादकारणमिति भावः ॥ २२ ॥

उक्ताशङ्कां निराकुर्वन्नात्ममनसोः सन्निकर्षस्य कारणत्वं व्यवस्थापयति—

**"ज्ञानलिङ्गत्वादात्मनो नानवरोधः" ॥ २३ ॥**

आत्मनः=प्रत्यगात्मनो ज्ञानलिङ्गत्वात्=ज्ञानगुणलिङ्गकत्वादनवरोधः=कारणत्वेन सङ्ग्रहोऽवरोधस्तद्भिन्नोऽनवरोधः, दिगादीनामनवरोधसम्भवेऽपि तत्सन्निकर्षानवरोधो न=न सम्भवतीत्यर्थः ।

**ज्ञान**मात्मनो लिङ्गं गुणत्वादित्युक्तम् । **नच** तन्मनःसन्निकर्षवर्जिते तस्मिन्कथञ्चिदुत्पत्तुमर्हति । **लोके** सर्वत्र संयुक्ते द्रव्य एव संयोगजस्य गुणस्योत्पत्तिदर्शनात् । **"अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषम्"** ( बृह० १।५।३ ) इति बृहदारण्यके श्रवणाच्च । **ज्ञानं** चात्मगुणः "यत्प्रत्यक्षं सत्स्वपरसंवेद्यं तत् पृथिव्यादिगुणो यथा रूपादि, नचैवं ज्ञानं, तद्धि प्रत्यक्षं सत्स्वमात्रसंवेद्यं यथा सुखादि, तस्मादात्मगुणः" इत्यनुमानात् । **तच्च** सन्निकर्षजम् । **सति** सन्निकर्षे भावादसति चाभावात् । **यच्चा**त्मगुणो भवन् सन्निकर्षजं, **तस्य** सन्निकर्षः कारणमिति किमु वक्तव्यम् । **न** चैवमस्ति दिगादीनां ज्ञानं लिङ्गम् । **न वा** तेषु सत्सु तस्य भावोऽसत्सु चाभावः क्वचिदुपलभ्यते येन तानि सन्निकर्षवत् कारणानि परिकल्प्येरन् । अन्वयव्यतिरेकाभ्यां हि कारणत्वमवसीयते नान्वयमात्रात् न वा व्यतिरेकमात्रात् । अन्वयव्यतिरेकौ च **यथा** सन्निकर्षे सम्भवतः न **तथा** दिगादिषु सम्भाव्येते । तेषां नित्यत्वविभुत्वाभ्यां सन्निधेरवर्जनीयतयाऽन्वयसम्भवेऽपि व्यतिरेकासम्भवात् । **नच** तदसम्भवेऽस्ति कश्चिदन्यः कारणत्वावसायोपायः ।

**अतो** भवति प्रतिपत्तिरात्ममनःसन्निकर्षादिभ्यो जायमानं ज्ञानं न जातु दिगादिभ्यो जायत **इति** सिद्धं तत्कारणं सन्निकर्षो न दिगादिकमिति भावः ॥ २३ ॥

नन्वात्ममनःसन्निकर्षस्तर्हि कारणमुपसंख्यायतां नेन्द्रियमनःसन्निकर्षः ? **तत्राह—**

**"तदयौगपद्यलिङ्गत्वाच्च मनसः" ॥ २४ ॥**

नानवरोध इत्यनुवर्तते । मनसः=अन्तःकरणस्य मनसस्तदयौगपद्यलिङ्गत्वाच्च=ज्ञानायौगपद्यलिङ्गकत्वाच्च नानवरोधः सम्भवतीत्यर्थः ।

**ज्ञानायौगपद्यं** मनसो लिङ्गमित्युक्तम् । **नच** तज्ज्ञानप्रयोजकमनःसन्निकर्षानभ्युपगमे कथञ्चिदुपपद्यते । **मनसो** मध्यमपरिमाणत्वेन प्रत्यगात्मना घ्राणादिभिरिन्द्रियैश्च सन्निकर्षसामान्यस्यावर्जनीयतया ज्ञानायौगपद्यसम्भवाभावात् । **ज्ञानायौगपद्यञ्च** दृष्टम् । **न च** दृष्टव्याघातो युक्तः । **अतो** मन्तव्यम् अस्ति तावन्मध्यमपरिमाणस्यापि मनसः प्रत्यगात्मकारितोऽदृष्टहेतुकः सन्निकर्षसामान्यव्यतिरिक्तः कश्चिदिन्द्रियमनःसन्निकर्षः प्रत्यक्षज्ञानकारणमिति भावः ॥ २४ ॥

**जातः** पूर्वः पक्षः, **सम्प्रति** सिद्धान्तयति—

**"प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः**
**सन्निकर्षस्य स्वशब्देन वचनम्" ॥ २५ ॥**

एवार्थश्चकारः सन्निकर्षस्य प्रत्यक्षप्रमाणातिरिक्तप्रमाणनिमित्ततां व्यवच्छिनत्ति। प्रत्यक्षनिमित्तत्वाच्च=प्रत्यक्षप्रमाणनिमित्तत्वादेवेन्द्रियार्थयोः सन्निकर्षस्य=इन्द्रियार्थसन्निकर्षस्य स्वशब्देन=स्ववाचिशब्देन वचनं=प्रत्यक्षप्रमाणकारणतया कथनं वेदितव्यमित्यर्थः ।

इन्द्रियार्थसन्निकर्षोहि प्रत्यक्षस्यासाधारणं निमित्तम्, आत्ममनः सन्निकर्षस्तु साधारणं, प्रमाणमात्रं प्रति निमित्तत्वात् । **किमुक्तं?** प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनःसन्निकर्षः, इन्द्रियार्थसन्निकर्षस्तु प्रत्यक्षस्यैवेत्यसाधारणं तत् । **यच्चासाधारणं तदेव** लक्षणत्वेन वक्तव्यं लक्ष्य-

मात्रव्यापकत्वात्। न साधारणम्। अव्यापकत्वादतिव्यापकत्वाच्चेति हि लक्षणविदां स्थितिः। **नच** तामुल्लङ्घ्य वर्तनं श्रेयः। **तस्मा**दिन्द्रियार्थसन्निकर्ष-एवेह प्रत्यक्षकारणत्वात् लक्षणत्वेनोपादीयते नात्ममनःसन्निकर्ष इति समग्रं प्रत्यक्षलक्षणं नासमग्रमितिभावः॥ २५॥

अत्रैव हेत्वन्तरमाह—

**"सुप्तव्यासक्तमनसां च सन्निकर्षनिमित्तत्वात्"** ॥ २६॥

इन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनमित्यनुवर्तते। पूर्वत्रैव हेत्वन्तरमेतदिति भिन्नक्रमेण चकारेण सूच्यते। सुप्तव्यासक्तमनसां=सुप्तिं गाढ़निद्रां गतं सुप्तं, विषयान्तरे लग्नं व्यासक्तम्, इत्थं भूतं मनो येषां, ते तथा, तेषां सुप्तमनसां व्यासक्तमनसां च पुरुषाणां सन्निकर्षनिमित्तत्वात्=तीव्राभ्यां ध्वनिस्पर्शाभ्यां जायमानस्य श्रावणस्पार्शनप्रत्यक्षस्येन्द्रियार्थसन्निकर्षनिमित्तकत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनमित्यर्थः।

**यदा** खल्वेष सुप्तमना न बाह्यं किञ्चन बुध्यते नाभ्यन्तरं, व्यासक्तमनाश्च न बाह्यं किञ्चन जानीते नाभ्यन्तरं, न वा तत्कर्हिचिज्जिज्ञासते, **तदा**ऽस्य सुप्तमनसो व्यासक्तमनसश्च यदाकास्मिकाभ्यां तीव्रध्वनिस्पर्शाभ्यां सहसा सुप्तिव्यासक्त्योर्विच्छेदे बाह्यविषयविषयं श्रावणं स्पार्शनं च प्रत्यक्षमुपजायते, न तत्रात्ममनःसन्निकर्षो निमित्तं भवितुमर्हति। तदानीं कञ्चनापि विषयमजिज्ञासमानस्यास्य तत्तदिन्द्रियप्रदेशे ज्ञानप्रयोजकसन्निकर्षसम्पत्त्यर्थं कृत्या मनःप्रेरकत्वाभावात्। **अपिच ?** इन्द्रियार्थसन्निकर्षः। **तस्य** तदानीं बलादुपस्थितत्वात्। **अतः** स एव लक्षणत्वेनोपादीयते नात्ममनःसन्निकर्षः साधारणत्वादिति भावः॥ २६॥

हेत्वन्तरं समुच्चिनोति—

**"तैश्चापदेशो ज्ञानविशेषाणाम्"** ॥ २७॥

इन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनमित्यनुवर्तते। हेतौ चः। यतो ज्ञानविशेषाणां=गन्धादिविषयाणां प्रत्यक्षज्ञानानां तैः=इन्द्रियैरर्थै-

श्चापदेशः=भवति व्यपदेशः, तस्मादिन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनमित्यर्थः ।

**गन्धादिविषयाणि** खलु प्रत्यक्षज्ञानानि "घ्राणेन जिघ्रति, रसनया रसयति, चक्षुषा पश्यति, स्पर्शनेन स्पृशति, श्रोत्रेण शृणोति, गन्धज्ञानं रसज्ञानं रूपज्ञानं स्पर्शज्ञानं शब्दज्ञानम्" इति तत्तदिन्द्रियैस्तत्तद्विषयैश्च व्यपदिश्यन्ते । व्यपदेशश्च सर्वत्रासाधारणकारणप्रयुक्तो दृष्टः, **यथा** शाल्यङ्कुरः गोधूमाङ्कुरः । न साधारणकारणप्रयुक्तः । **तेन** भवति प्रतिपत्तिर्नूनम् "इन्द्रियार्थसन्निकर्ष एव प्रत्यक्षस्यासाधारणं निमित्तं नात्ममनःसन्निकर्षः" इति । **तथाच** सिद्धं तस्य प्रत्यक्षज्ञानकारणत्वेन लक्षणत्वे नास्ति कश्चिदसामग्र्यलक्षणो दोष इति भावः ॥ २७ ॥

उक्तमर्थं सुस्थिरीकर्तुं पुनराशङ्कते—

**"व्याहतत्वादहेतुः" ॥ २८ ॥**

अहेतुः=इन्द्रियार्थसन्निकर्षः प्रत्यक्षज्ञानकारणं न भवति, **कुतः?** व्याहतत्वात्=आत्ममनसोः सन्निकर्षाभावे व्याहतशक्तिकत्वादित्यर्थः ।

**तावद्धी**न्द्रियार्थसन्निकर्षो ज्ञानमुपजनयितुं कल्पते यावदस्य ज्ञानजननानुकूला शक्तिर्न व्याहन्यते । तद्व्याघातश्चात्ममनसोः सन्निकर्षाभावे दृष्टः । असमवहितमनसां सत्यपि तस्मिन् ज्ञानानुदयात् । **अतो** भवति विज्ञानं न जातु केवलमिन्द्रियार्थसन्निकर्षः प्रत्यक्षज्ञानकारणम् । **अपिच?** आत्ममनसोः सन्निकर्षेण प्रत्यासन्नः । **किमुक्तम्?** आत्मनो मनसा, मनसश्चेन्द्रियैरिन्द्रियाणाञ्चार्थैः सन्निकर्षः प्रत्यक्षज्ञानकारणं नेन्द्रियार्थसन्निकर्षमात्रम् । अनेनेदं भवति विस्पष्टम्—आत्ममनःसन्निकर्षः, इन्द्रियमनःसन्निकर्षः, इन्द्रियार्थसन्निकर्षश्चेति त्रितयं प्रत्यक्षज्ञानकारणमिति । भवता चैक एवेन्द्रियार्थसन्निकर्षः प्रत्यक्षज्ञानकारणं लक्षणत्वेनाभिधीयते । तदयुक्तम् । **अतो**ऽसमग्रत्वादनुपपन्नं प्रत्यक्षलक्षणमिति भावः ॥ २८ ॥

**समाधत्ते**—

**"नार्थविशेषप्राबल्यात्" ॥ २९ ॥**

न=यदुक्तं तन्न, कुतः? यतोऽर्थविशेषप्राबल्यात्=अर्थविशेषस्य इन्द्रियार्थसन्निकर्षस्य प्राबल्यात् प्राधान्यात् कारणत्वमुक्तमित्यर्थः।

न खल्वस्माभिरात्ममनसोः सन्निकर्षः प्रत्यक्षज्ञानकारणं नाभ्युपगम्यते। केवलमिन्द्रियार्थसन्निकर्षः प्रधानम्, आत्ममनःसन्निकर्षस्त्वप्रधानं, प्रधानञ्च लक्षणत्वेनोपादेयं नाप्रधानमित्येतावन्मात्रेणेन्द्रियार्थसन्निकर्षः प्रत्यक्षज्ञानकारणमाख्यायते नात्ममनसोः सन्निकर्षस्य कारणत्वाभावाभिप्रायात्। अतो न कश्चिद्दोष इति भावः॥ २९॥

एकया विधया प्रत्यक्षं परीक्षितम्। अधुना विधान्तरेण परीक्षितुं पूर्वपक्षयति—

**"प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः"॥ ३०॥**

प्रत्यक्षं=प्रत्यक्षं प्रमाणमनुमानम्=अनुमानमेव भवितुमर्हति, कुतः? एकदेशग्रहणात्=इन्द्रियैः पदार्थैकदेशोपलम्भादुपलब्धेः=पदार्थोपलब्धेरित्यर्थः।

"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्" इत्युक्तम्। नचेन्द्रियसन्निकर्षेण पूर्वं पदार्थो गृह्यते। अपिच? पदार्थैकदेशः, ततश्च पदार्थः। सोऽयं प्रकारोऽनुमानेऽपि समानः। तत्रापि पूर्वमिन्द्रियसन्निकर्षेण वह्न्येकदेशो धूमो गृह्यते ततश्च वह्निः। किमुक्तं? यथा हि पूर्वमिन्द्रियसन्निकर्षेण धूम उपलभ्यते, पश्चाद् धूमोपलम्भेन च वह्निः, एवमिन्द्रियसन्निकर्षेण पूर्वं पदार्थैकदेश उपलभ्यते, पश्चात् पदार्थैकदेशोपलम्भेन च पदार्थः। किंबहुना यथा ह्ययमिन्द्रियेण धूमं गृहीत्वा वह्निं प्रतिपद्यते, तथेन्द्रियेण पदार्थैकदेशं गृहीत्वा पदार्थं प्रतिपद्यते। ययोश्चैवं समानः प्रतिपत्तिप्रकारः, न तयोः परस्परं भेदः शक्योऽभ्युपगन्तुं, तत्प्रयोजकानुपलब्धेः। अतो मन्तव्यमनुमानमेव प्रत्यक्षं न प्रमाणान्तरमिति भावः॥

इदमत्र बोध्यम्—यथाहि नैयायिकोऽवयवारभ्यमवयवानामवस्थाविशेषमवयविनं परमार्थसन्तं पदार्थं तावदातिष्ठते न तथा पूर्वपक्षी मन्यते। तस्य हि नावयवी नाम कश्चित् परमार्थभूतः पदार्थोऽवयवे-

भ्योऽस्त्यर्थान्तरम्, **अपिच ?** परमार्थसत्तामवयवानामेव समूहः । अवयवाश्च गन्धरसरूपस्पर्शपरमाणवः स्वरूपतोऽतीन्द्रियाः सन्तोऽपि परस्परं संहन्यमानाः प्रत्यक्षयोग्यतामुपसम्पद्यन्ते । तस्मादिन्द्रियसन्निकृष्टानर्वाग्भागवर्तिनः कतिपयावयवान् गृहीत्वा जायमानाऽस्य समूहगोचरा बुद्धिरनुमानमुपपद्यते । नास्ति किञ्चिदनुपपन्नमिति ॥ ३० ॥

**समाधत्ते**—

**"न प्रत्यक्षेण यावत्तावदप्युपलम्भात्"** ॥ ३१ ॥

न=यदुक्तं तन्न, **कुतः ?** प्रत्यक्षेण=प्रत्यक्षप्रमाणेन यावत्तावदपि=यावत्तावतोऽपि यस्य कस्यापि पदार्थदेशस्योपलम्भात्=उपलम्भाभ्युपगमादित्यर्थः ।

**"प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः"** इति ब्रुवता खलु वक्तव्यं यदिदमेकदेशग्रहणमाश्रीयते तत्किं प्रत्यक्षम्, आहोस्विदनुमानम् ? । **न** तावदनुमानमाश्रयितुं शक्यम् । अनवस्थापत्तेः । **प्रत्यक्षमिति चेत् तदा** "प्रत्यक्षमनुमानम्" इति प्रतिज्ञाव्याघातः । पदार्थैकदेशविषयस्य प्रत्यक्षस्याभ्युपगमात् । **किमुक्तम् ?** "एकदेशग्रहणादुपलब्धेः" इत्यत्र हेतौ यावदेकदेशभूतस्यार्थजातस्य ग्रहणमिष्यते तावदपि प्रत्यक्षेणैव वक्तव्यम् । अन्यथैकदेशग्रहणाभावेनानुमानानुदयात् । अनुमानान्तरेण च तद्ग्रहणेऽनवस्थापातात् । **तथाच** तावतोऽर्थजातस्य प्रत्यक्षेण ग्रहणात् **"प्रत्यक्षमनुमानम्"** इति प्रतिज्ञा स्वप्रयुक्तेन हेतुनैव व्याहता । **तद्ग्रहणस्य** प्रत्यक्षेणानभ्युपगमे तु प्रमाणान्तरस्य तत्रानुपपत्तेरसिद्धो हेतुः । **सेयमुभयथापाशा** रज्जुः । **किञ्च** प्रत्यक्षपूर्वकमनुमानं, प्रत्यक्षञ्च न प्रत्यक्षपूर्वकम् । **प्रकारवदनुमानं** "वह्निमान् पर्वतः" इति, **प्रत्यक्षं** च न प्रकारवत् "वह्निरयम्" इति । **त्रिकालविषयं** किलानुमानं, **प्रत्यक्षं** तु वर्तमानविषयमिति प्रमाणदृष्टः खलु प्रत्यक्षानुमानयोर्भेदो न शक्यः कथञ्चित्प्रत्याख्यातुम् । **अतो** मन्तव्यं न तावदनुमानमेव प्रत्यक्षम्, **अपिच** प्रमाणान्तरमिति भावः ॥ ३१ ॥

पूर्वपक्षिभाषया पूर्वपक्षः समाहितः, **सम्प्रति** स्वभाषया समाधास्यमानआह—

**"नचैकदेशोपलब्धिरवयविसद्भावात्" ॥ ३२ ॥**

अप्यर्थश्चो भिन्नक्रमः । एकदेशोपलब्धिश्च=इन्द्रियसन्निकर्षादेकदेशस्योपलब्धिरपि न=न घटते, **कुतः** ? अवयविसद्भावात्=तत्सहचरितस्यावयविनोऽपि सन्निकृष्यमाणस्य तदानीं सद्भावादित्यर्थः ।

यस्मिन्नेकदेशे हीन्द्रियसन्निकर्षो विद्यते **तत्र** चेदवयवी न स्यात् स्यात् **तदा** तेन तद्ग्रहणम्, एकदेशमात्रस्य च ग्रहणम्। **न चायं** तत्र न विद्यते। **नित्येनावयवावयविभावसम्बन्धेन** तत्सद्भावस्याभ्युपगमात्। **तथा चैकदेशवत्** तेनापीन्द्रियसन्निकर्षो वक्तव्यः । नह्येकस्मिन् देशे सन्निकृष्यमाणे तत्सहचरितोऽवयवी न सन्निकृष्यत इति युज्यते। तेन च यथैकदेश उपलभ्यते तथाऽवयव्यप्युपलभ्यत इति हसताऽऽस्थेयम् । **महदनेकद्रव्य**रूपाणामुपलब्धिकारणानां देशवत् देशिन्यपि तस्मिन् विद्यमानत्वात् । **अतो** यदुक्तम् "इन्द्रियसन्निकर्षेणैकदेश उपलभ्यते न चैकदेशी" इति, **तत्** साहसमात्रम् ॥

**किञ्च** कश्चायमेकदेशः ? एकश्चासौ देशश्चेत्येकदेशः, देशश्चाधार इति चेत्, **तदा** नूनं निगृहीतो भवान् । आधारस्याधेयसापेक्षत्वात्। नच तेऽस्ति कश्चिदवयवीति कस्यायमाधारः स्यात् । **देशो** भाग इति चेत् **तदा** वक्तव्यं कस्य भागः अवयवानामुतावयविनः ?। **न** तावदवयवानामिति चारुभाषणम् । **तेषां** निर्भागत्वाभ्युपगमात् । अवयविनश्चेत् **तदा**ऽवयवव्यतिरिक्तो नास्ति कश्चिदवयवीति व्याहतम्। **अङ्ग!** एतदपि समाधत्स्व कथमेकदेशेनासन्तं देशिनमनुमिमीषे । **नहि** भवान् समुदायिव्यतिरिक्तं समुदायं प्रतिपद्यते । नचासन् समुदायोऽनुमातुं शक्यः । **अर्वाग्भागेन चेत्** ? परभागानुमानम् **तदा** वक्तव्यं वह्निधूमयोरिव परभागावार्ग्भागयोः सम्बन्धः प्रत्यक्षेण गृहीतो न वा गृहीत इति। **गृहीतश्चेत्** ? **कथमनुमानम्**। उभयस्य प्रत्यक्षत्वात्। **न**

गृहीतश्चेत्? अयुक्तमनुमानम्। परस्परागृहीतसम्बन्धयोरेकस्य ग्रहणेनापरस्यानुमानासम्भवात्। **नापि** "अर्वाग्भागोऽयं परभागवान्" इति युक्तमनुमानम्। अर्वाग्भागस्य परभागवत्त्वाभावात्। अर्वाग्भागपरभागयोश्च धर्मधर्मिभावानुपपत्तेः सुतरामनुमानानुपपत्तिः। **अतो** मन्तव्यमस्ति कश्चिदवयवव्यतिरिक्तोऽवयवी यस्तावदेकदेशग्रहणवदिन्द्रियसन्निकर्षेणैव गृह्यते। **तथाच** तेनैकदेशोपलब्धिरनुपपन्ना, तदनुपपत्तौ च "प्रत्यक्षमनुमानं न प्रमाणान्तरम्" इति सुतरामनुपपन्नमिति भावः॥ ३२॥

**"अवयविसद्भावात्"** इत्युक्तं, तदसहमानः शङ्कते—

**"साध्यत्वादवयविनि सन्देहः"** ॥ ३३॥

अवयविनि=अवयवद्रव्यव्यतिरिक्तेऽवयविद्रव्ये सन्देहः=संशयो विद्यते, **कुतः?** साध्यत्वात्=परं प्रति साधनीयत्वात्, परं प्रत्यसिद्धत्वेन विप्रतिपत्तिविषयत्वादित्यर्थः।

अवयविनि सिद्धे हि "अवयविसद्भावात्" इति हेतुरुपन्यसितुं पार्य्यते। नचावयवेभ्यो व्यतिरिक्तोऽवयवी कश्चिदद्यापि सिध्यति। **भवानेवा**स्तिकोटिकः पृष्टो व्याचष्टां किमयमवयवेषु वर्तमानोऽवयवी प्रत्यवयवं कार्त्स्न्येन वर्तते, **अथ**वैकदेशेनेति। **न** तावत् कार्त्स्न्येनेति वक्तुं शक्यम्। अवयवान्तरवैयर्थ्यप्रसङ्गात्। **नहि** शेषैरवयवैः किञ्चनावयविनः क्रियन्ते। प्रत्यक्षश्चायमवयवी। नच तत्प्रयोजके महत्त्वानेकद्रव्यत्वे प्रत्यवयवं स्त इति तत्प्रत्यक्षं न स्यात्। विनाशी चावयवी। नच प्रत्यवयवमस्त्यवयवविभाग इति तद्धेतुकं विनाशं नेयात्। नच शृङ्गे स्तनकार्य्यं दृश्यते। नवा केनचिन्मन्यते। प्रत्यवयवं पर्य्याप्ते चावयविनि शृङ्गेऽपि स्तनकार्य्यं स्यात्। **अथै**कदेशेनेति चेत्? **न** युक्तं भाप्यते। असम्भवात्। **नह्य**स्य कारणव्यतिरेकेणान्ये केचनावयवा विद्यन्ते येनायमेकैकशः प्रत्यवयवं वर्तेत। नापि तत्कल्पनं श्रेयः। तत्राप्यवयवान्तरकल्पनायामनवस्थाप्रसङ्गात्। मूलक्षयकरी चानवस्था नाभ्युपगन्तुमर्हा। **तस्मात्** सिद्धं नास्ति कश्चिदवयवेभ्यो व्यतिरिक्तोऽवयवीति युक्ता परं प्रत्यसिद्धत्वाद् विप्रतिपत्तिस्ततश्च तत्र संशय इति भावः॥ ३३॥

समाधत्ते—

"सर्वाग्रहणमवयव्यसिद्धेः" ॥ ३४ ॥

अवयव्यसिद्धेः=अवयवेभ्यो व्यतिरिक्तस्यावयविनोऽसिद्धेः सर्वाग्रहणं= द्रव्यादीनां सर्वेषामप्रत्यक्षं प्रसज्येतेत्यर्थः ।

सर्वे खलु द्रव्यगुणकर्मादयः पदार्था इन्द्रियैर्गृह्यमाणा उपलभ्यन्ते, यथेयं भूरिदं तोयमिदं तेज इति द्रव्यग्रहणम्, नीलः शुक्लो लोहित-इति गुणग्रहणम्, पचति खादति चलतीति कर्मग्रहणम्, अस्ति भवति घटः पट इति परापरसामान्यग्रहणमिति । चेद्वयवेभ्योऽर्थान्तरं कश्चिदवयवी न स्यात्, अपि च तत्समुदायमेव तमभ्युपेयात् तदाऽवयवानामतीन्द्रियत्वात् तत्समुदायात्मकाः द्रव्यादयो न जातु गृह्येरन् । नह्यगृह्यमाणेषु समुदायिषु तत्समुदायः क्वचिद्गृह्यते । सोऽयमवयव्यसिद्धेः सर्वाग्रहणप्रसङ्गः । नच वृत्तिविकल्पोऽप्युपपद्यते । कार्त्स्न्यैकदेशाभिधानयोरेकस्मिन्नवयविन्यसम्भवात् । कार्त्स्न्यमिति ह्यनेकस्याशेषताभिधानम्, एकदेश इति चानेकत्वे सति कस्यचिदभिधानम् । नचैकस्मिन्नवयविनि ते सम्भवतः । कथं तर्ह्येकोऽवयव्यनेकेष्ववयवेषु वर्तते ? । आश्रयाश्रितभावेन समवायेन । कआश्रयः कश्चाश्रितः ? । यस्य यतोऽन्यत्रात्मलाभानुपपत्तिः स आश्रयोऽवयवाः, यस्य चानुपपत्तिः स आश्रितोऽवयवी । नह्यवयवेभ्योऽन्यत्रावयवी क्वचिदात्मानं लभते । सोऽयमाश्रयाश्रितभावः सम्बन्धः समवायः । तेन हि तत्र समुदितावयवेषु वर्तमानोऽवयवी न कञ्चिद्दोषमावहति । तस्मात् पश्यामोऽस्ति तावदवयवेभ्योऽर्थान्तरभूतोऽवयवी कश्चिदित्यनुपपन्ना विप्रतिपत्तिः, तदनुपपत्तौ च सुतरामनुपपन्नः संशय इति भावः ॥ ३४ ॥

ननु कथं पुनरवगम्यते "अस्तितावदवयवेभ्योऽर्थान्तरभूतोऽवयवी कश्चित्" इति ? तत्राह—

"धारणाकर्षणोपपत्तेश्च" ॥ ३५ ॥

अर्थान्तरभूतोऽवयवीति चार्थः । धारणाकर्षणोपपत्तेः=धारणं चाकर्षणं

च, ते धारणाकर्षणे, तयोरुपपत्तिः सङ्गतिस्ततोऽवगम्यतेऽस्तितावदवयवेभ्योऽर्थान्तरभूतोऽवयवीत्यर्थः ।

एकदेशग्रहणसाहचर्य्ये सति यदवयविनो देशान्तरप्राप्तिप्रतिषेधनं, **किमुक्तं?** यदाऽयमवयविन एकदेशं गृह्णाति, तदैकदेशग्रहणेन सहावयविनमपि गृह्णाति, तेन च ग्रहणेन यदवयविनो देशान्तरप्राप्तिनिवारणं तद् **धारणम्** । एकदेशग्रहणसाहचर्य्ये सति यदवयविनो देशान्तरप्रापणं, **किमुक्तं?** यदाऽयमवयविन एकदेशं गृह्णाति, तदैकदेशग्रहणेन सहावयविनमपि गृह्णाति, तेन च ग्रहणेन यदवयविनो देशान्तरप्राप्तिसम्पादनं तदा**कर्षणम्** । न चैते धारणाकर्षणे क्वचिदवयविनोऽन्यत्र निरवयवेऽवयवमात्रे वा कथञ्चित् सङ्गच्छेते । **विज्ञानाकाशयोः** परमाणौ चादर्शनात् । **नहि** यद् यत्र न दृश्यते तत् तत्रोपपद्यत इति सम्भवति । दृश्येते च ते गोघटादौ सर्वत्र सर्वैः । **अतो** भवत्यनुमानं "योऽयं परमाणुसमूहभावेन विवादाध्यासितो गोघटादिरवयवी दृश्यते नासावनवयवी भवितुमर्हति, धारणाकर्षणानुपपत्तिप्रसङ्गात्, **योयो**ऽनवयवी तत्र धारणाकर्षणे न भवतः यथा विज्ञानादौ, नचायं गोघटादिस्तथा, **तस्मान्नानवयवी**" इति । **तथा च** सिद्धमर्थान्तरं खल्ववयवेभ्योऽवयवीति भावः ॥ ३५ ॥

**आशङ्क्य** निराचष्टे—

**"सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम्"॥३६॥**

सेनावनवत्=यथा मनुष्येभ्योऽनर्थान्तरभूतायाः सेनायाः वृक्षेभ्योऽनर्थान्तरभूतस्य च वनस्य "सेनेयं, वनमिदम्" इति भवति ग्रहणं, तथा ग्रहणम्=अवयवेभ्योऽनर्थान्तरभूतस्यापि गोघटादेरवयविनो "गौरियं घटोऽयम्" इति ग्रहणं भवितुमर्हतीति चेत्=यदि शङ्कसे तर्हि न=न शङ्कस्व, **कुतः?** अणूनाम्=अवयवानां परमाणूनामतीन्द्रियत्वात्=इन्द्रियगोचरतामतीत्य वर्तमानत्वात् तादृग् बुद्ध्यनुत्पत्तेरित्यर्थः ।

**न** खलु मनुष्याः वृक्षाश्चातीन्द्रियाः, दूरादगृह्यमाणपृथक्त्वेषु तेषु सेनाबुद्धिः वनबुद्धिश्चोदेतुमर्हति । **परमाणवश्चातीन्द्रियाः**, कथं तत्समुदायेषु

गोघटादिबुद्धिरुदीयात् । नहि समुदायिनामतीन्द्रियत्वे समुदायः क्वचिदैन्द्रियिको दृश्यते येनात्रापि कल्प्येत । न चादृश्यपरमाणुसमुदायाद् दृश्यपरमाणुसमुदाय उत्पद्यते, तत्र चैषा भवति गोघटादिबुद्धिरैन्द्रियिकीति साध्वी कल्पना । अदृश्यस्य दृश्यानुपादानत्वात् । अन्यथा चक्षुरूष्मादिसन्ततेरपि दृश्यत्वप्रसङ्गात् । नचातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति युक्तं भाषणम् । तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरभ्युपगमात् । नचादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति सम्यगुद्भावनम् । यतो वयं न भवन्त इव दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे किन्तु महत्त्वानेकद्रव्यत्वादिकारणसमुदायवतो दृश्यत्वं तद्विपरीतस्य चादृश्यत्वं सङ्गिरामहे । तथाच त्रसरेणोर्महत्त्वादिकारणवत्त्वाद् दृश्यत्वं न द्व्यणुकस्य तदभावात् । नह्येतद् भावत्के मतेऽपि कथञ्चिदुपपद्यते । परमाणौ महत्त्वानभ्युपगमात् । अतो मन्तव्यमस्ति तावदवयवेभ्योऽर्थान्तरभूतोऽवयवी, यद्गोचरं प्रत्यक्षमिति भावः ॥ ३६ ॥

परीक्षितं प्रत्यक्षम् । इदानीं क्रमप्राप्तमनुमानं परीक्षितुं पूर्वपक्षयति—

**"रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम्" ॥ ३७ ॥**

अनुमानम्=अनुमानत्वेनाभिमतमप्रमाणं=प्रमाणं न भवति, कुतः ? रोधोपघातसादृश्येभ्यः=स्यन्दमानायाः नद्याः पूर्णताहेतुः प्रतिबन्धो **रोधः**, तेनात्र पाथसा पूर्णा नदी लक्ष्यते, पिपीलिकानीडोपद्रव **उपघातः**, तेनात्र पिपीलिकाण्डसञ्चारो लक्ष्यते, मयूरशब्दपुरुषशब्दयोः समानप्रत्ययकर्तृत्वं **सादृश्यं**, तेनात्र मयूरशब्दसदृशः पुरुषशब्दो लक्ष्यते, रोधश्चोपघातश्च सादृश्यं च, तेभ्यो गृह्यमाणेभ्यो जायमानेषु भूतभविष्यद्वर्तमानविषयेष्वनुमानज्ञानेषु व्यभिचारात्=प्रामाण्यव्यभिचारात् प्रामाण्याभावादित्यर्थः ।

"तत्पूर्वकं ज्ञानमनुमानम्" ( न्या० १।१।५ ) इत्युक्तम् ।

चेदेतत् प्रमाणं स्यात्, न जातु प्रामाण्यं व्यभिचरेत्। व्यभिचरति च तत् सर्वदा प्रामाण्यम्। **तद्यथा** वर्षादिव कुतश्चिद् रोधात् पूर्णां नदीं पश्यतो यद् **"अवार्षीदुपरिष्टाद् देवः"** इति भूतवृष्टिविषयमनुमानज्ञानमुत्पद्यते, तत्रानुमानत्वमस्ति प्रामाण्यं नास्ति, कस्माच्चिन्नीडोपद्रवाज्जायमानं पिपीलिकाण्डसञ्चारमवलोकयतो यद् **"वर्षिष्यति देवः"** इति भविष्यद्वृष्टिविषयमनुमानज्ञानमुपजायते, तत्रानुमानत्वमस्ति प्रामाण्यं नास्ति, मयूरशब्दमिव शब्दमाकर्णयतो यद् **"वर्षति देवः"** इति वर्तमानवृष्टिविषयमनुमानज्ञानं सञ्जायते, तत्रानुमानत्वमस्ति नास्तिच प्रामाण्यमिति। तद्व्यभिचारदर्शनाच्च भवति विज्ञानमप्रमाणं नूनमनुमानमिति भावः॥

**तत्र** भूतभविष्यद्वर्तमानविषयं किमप्यनुमानं न प्रमाणमिति प्रदर्शयितुं यथाक्रममुदाहरणत्रयम्। नदीपूरमयूरवाशिते **शेषवतः**, पिपीलिकाण्डसञ्चारः कार्य्यकारणभावबुद्ध्या वर्षानुमाने **पूर्ववतः**, तदबुद्ध्या चानुमाने **सामान्यतोदृष्टस्यो**दाहरणमिति **वाचस्पतिमिश्राः**। लक्षणसूत्रोक्तस्य पूर्ववदादेरनुमानत्रयस्य क्रमेणोदाहरणत्रयमिति **विश्वनाथ** इति विवेकः॥ ३७॥

**सिद्धान्तयति—**

**"नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात्"** ॥ ३८॥

न=यदुक्तं तन्न, **कुतः**? एकदेशत्राससादृश्येभ्यः=विशिष्टस्य नदीपूरस्यै**कदेशः** पूरमात्रम्, नीडोपद्रवः **त्रासः**, तेनात्र पिपीलिकाण्डसञ्चारो लक्ष्यते, **सादृश्यं** पूर्ववत्, एभ्यो गृह्यमाणेभ्यो जायमानानां ज्ञानानामर्थान्तरभावात्=अनुमानतो भिन्नपदार्थत्वात् अननुमानत्वादिति यावदित्यर्थः।

**न** खलु नदीपूरमात्रं भूतवृष्टिविषयस्यानुमानज्ञानस्य लिङ्गम्, **अपिच?** यत्र बहुतरफेनफलपर्णकाष्ठादिनाऽलङ्कृतं पूर्वोदकविशिष्टं वर्षोदकं तीव्रेण वेगेन प्रवहन्नुपलभ्यते स नद्याः पूरो लिङ्गम्। **एवं** पिपीलिकाण्डसञ्चर-

णमात्रमपि भविष्यद्वृष्टिविषयस्यानुमानज्ञानस्य न लिङ्गम्, **अपिच?** उपद्रवमन्तरेणावित्रस्तानां भूयसीनां पिपीलिकानां भूयस्सु स्थानेषु भूयस्त्वेन साण्डमूर्ध्वसञ्चरणम्। **तथा** मयूरशब्दसदृशः शब्दोऽपि वर्तमानवृष्टिविषयस्यानुमानज्ञानस्य न लिङ्गम्, **अपिच?** मयूरशब्दः। **तथाच** केवलनदीपूरादिभ्यो गृह्यमाणेभ्यो जायमानेषु ज्ञानेष्वलैङ्गिकत्वेनानुमानत्वाभावात् प्रामाण्यव्यभिचारो न दोषः। **इदं** तावद् वक्तव्यम्? व्यभिचारेण हेतुनाऽनुमानमात्रस्याप्रामाण्यं साध्यते **किंवा** भूतभविष्यद्वर्तमानवृष्टिविषयस्यानुमानविशेषस्येति। अनुमानमात्रस्य चेत्? **तर्हि** किमप्यनुमानमप्रमाणं न स्यात्। अप्रामाण्यसाधकस्यानुमानस्य सर्वान्तःपातित्वेन स्वयमप्रमाणत्वात्। अनुमानविशेषस्य चेत्? दत्तोत्तरमेतत्। तत्रालैङ्गिकत्वेनाननुमानतया प्रामाण्यव्यभिचारस्येष्टत्वात्। **अतः** सिद्धं भूतभविष्यद्वर्तमानविषयं सर्वमनुमानं प्रमाणं न जात्वप्रमाणमिति भावः॥ ३८॥

**ननु** भूतभविष्यद्वर्तमानविषयं सर्वमनुमानं प्रमाणमित्ययुक्तं, कालस्यैवासिद्धेरिति पूर्वपक्षयन् पूर्वं तावद् वर्तमानकालाभावं साधयति—

**"वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः"॥३९॥**

वर्तमानाभावः=वर्तमानः कालो नास्ति, **कुतः?** पततः=वृन्तात् प्रच्युतस्य फलस्य भूमिं प्रत्यासीदतः पतितपतितव्यकालोपपत्तेः=पतितकालपतितव्यकालयोरेवोपपन्नत्वादित्यर्थः।

**यदा** हि वृन्तात्प्रच्युतं फलं भूमिं प्रत्यासीदति **तदा** तस्य द्वावध्वानावुपलभ्येते **पतितोऽ**ध्वा **पतितव्योऽ**ध्वा च। **तत्र** यदूर्ध्वं **किमुक्तं?** फलमवधिं कृत्वा यावद्वृन्तं योऽध्वा स **पतितोऽध्वा,** तत्संयुक्तः कालः पतितकालः **"अतीतकालः"** इति यावद् व्यपदिश्यते। यश्चाधस्तात् **किमुक्तं?** फलमारभ्य भूमिपर्य्यन्तो यावानध्वा स **पतितव्योऽध्वा,** तत्संयुक्तः कालः पतितव्यकालः **"अनागतकालः"** इति यावद् व्यवह्रियते। **तौ** चैतौ कालौ स्वाभिव्यक्तिहेतुभूताध्वोपलम्भेन तत्संयोगादुपपद्येयातामपि, नच **"वर्तमानः"** कालस्तावत्कथञ्चिदुपपद्यते।

नह्येतदध्वद्वयव्यतिरिक्तस्तृतीयोऽध्वा कश्चिद् विद्यते यत्संयोगाद् वर्तमानः कालोऽप्युपपद्येत । उपपत्तिमन्तरा च न तदभ्युपगमो युक्तः । **तस्मा**-**द**वगम्यते नास्ति वर्तमानः काल इति भावः ॥ ३९ ॥

**समा**धत्ते—

**"तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्"** ॥ ४० ॥

वर्तमानाभावे=वर्तमानकालासत्त्वे तयोरपि=अतीतानागतकालयोरप्य-भावः=असत्त्वं प्रसज्येत, **कुतः**? तदपेक्षत्वात्=तत्सिद्ध्यधीनसिद्धिक-त्वादित्यर्थः ।

**चेत्** कश्चिद् वर्तमानः कालो न स्यात् **तदा**ऽतीतानागतौ कालावपि न स्याताम् । तत्सिद्ध्यधीनसिद्धिकौ हि तौ । **किमुक्तं**? यत्तावद् य-त्सिद्ध्यधीनसिद्धिकं, न तत् तदभावे भवतीति नियमः । अतीतानागतौ कालावपि वर्तमानध्वंसप्रागभावप्रतियोगितया वर्तमानसिद्ध्यधीनसिद्धिकौ, अतो न तदभावे भवितुमर्हतः । भवतश्चैतावित्यभ्युपेयते । **तेन** भवति प्रतिपत्तिरस्ति खलु तद्व्यतिरिक्तो वर्तमानः काल इति । **किं बहुना**—चेद् गन्तव्योऽध्वा क्वचिद् विशिष्टकालाभिव्यक्तिहेतुरभ्युपगम्येत **तदा** वर्तमानकालाभावोऽपि सङ्गच्छेत । न चैष तदभिव्यक्तिहेतुरभ्युपगन्तुं शक्यते । तस्य सर्वदाऽविशेषेण विशिष्टकालाभिव्यक्तिहेतुत्वासम्भवात् । **किं तर्हि**? क्रिया । साचापप्तत्, पतति, पतिष्यति चेति त्रिविधा प्र-सिद्धा । तत्सम्बन्धात् कालेनापि त्रिविधेनैव भवितव्यम् । निमित्तस्य त्रै-विध्ये नैमित्तिकत्रैविध्यस्याप्यौचित्यात् । **अतो** मन्तव्यमस्ति तावत् पतितकालपतितव्यकालतो व्यतिरिक्तस्तन्मध्यवर्ती तृतीयः कश्चित् पततीति द्रव्यक्रियासम्बन्धविशिष्टो वर्तमानः काल इति भावः ॥ ४० ॥

**ननु** तदा हि वर्तमानः कालः सिध्येत्, चेदतीतानागतौ कालौ "वर्तमानध्वंसप्रतियोगित्वमतीतत्वं, वर्तमानप्रागभावप्रतियोगित्वमनागत-त्वम्" इति वर्तमानकालापेक्षौ सिध्येताम् । **न च** तौ तदपेक्षौ सिध्यतः, **अपि च**? "अनागतनिष्ठध्वंसप्रतियोगित्वमतीतत्वम्, अतीतनिष्ठप्रा-

गभावप्रतियोगित्वमनागतत्वम्" इति परस्परापेक्षौ । **तस्मान्न** तत्सिद्धिः ? **तत्राह**—

**"नातीतानागतयोरितरेतरापेक्षा सिद्धिः" ॥ ४१ ॥**

अतीतानागतयोः=भूतकालत्वमतीतत्वं, भविष्यत्कालत्वमनागतत्वं, तयोरतीतानागतकालयोरितरेतरापेक्षा=अन्योऽन्यहेतुका सिद्धिः=निष्पत्तिर्न=न सम्भवतीत्यर्थः ।

**सिद्धं** वस्तु हि वस्त्वन्तरं साधयति । यच्च स्वयमेव न सिध्यति तत् कथमपरं साधयेत् । अनागतसिद्धितः पुरस्तादतीतः कालोऽतीतसिद्धितः प्राक् चानागतः कालोऽपि न जातु सिद्धो विद्यते । तयोः सिद्धत्वाभावेन च परस्परसिद्धौ हेतुत्वासम्भवात् परस्परापेक्षा सिद्धिर्न सम्भवति । तदसम्भवे च सुतरां वर्तमानाभावासिद्धिः । **किमुक्तं ?** परस्परापेक्षासिद्धौ हि वर्तमानाभवो वक्तव्यः। सा च न सम्भवति। परस्पराश्रयप्रसङ्गात्। **अतो** निश्चेतव्यं विद्यते तावत् तद्व्यतिरिक्तः कश्चिद् वर्तमानः कालो, यदपेक्षा तत्सिद्धिरितिभावः ॥ ४१ ॥

**ननु** मा भूदतीतानागतयोरितरेतरापेक्षा सिद्धिः, वर्तमानापेक्षाऽपि न युज्यते, तदभावात् ? **तत्राह**—

**"वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः" ॥ ४२ ॥**

वर्तमानाभावे=वर्तमानासत्त्वे सर्वाग्रहणं=सर्वेषां पदार्थानां केनापि प्रमाणेन ग्रहणं ज्ञानं न स्यात्, **कुतः ?** प्रत्यक्षानुपपत्तेः=सर्वप्रमाणमूलस्य प्रत्यक्षस्यैवानुपपत्तेरित्यर्थः ।

**यानि** खल्वनुमानादीनि प्रमाणान्यास्थीयन्ते । नच तान्यन्तरेण प्रत्यक्षमुपपद्यन्ते । तेषां प्रत्यक्षपूर्वकत्वेन तदुपपत्त्यनुपपत्तिभ्यामुपपन्नानुपपन्नत्वनियमात् । प्रत्यक्षञ्च वर्तमानाधारं, न च वर्तमानाभावे कथञ्चिदुपपत्तुमर्हति । तदनुपपत्तौ च सर्वप्रमाणानुपपत्तेर्ग्राहकान्तराभावात् कस्यापि ग्रहणं न स्यात् । **किमुक्तं ?** यत्तावत्कार्य्यं तत् सर्वं वर्तमानाधारं दृष्टं **यथा** क्षीरं, कार्य्यं च प्रत्यक्षम्, **अतस्तेनापि** वर्तमानाधारेण भवितव्यम् ।

नच वर्तमानः कालोऽभ्युपगम्यते । तदभ्युपगमाभावे च तदनाधारं प्राप्नोति । अनाधारं च तन्नास्तीति प्रत्यक्षानुपपत्तिः । तदनुपपत्तेश्च सर्वप्रमाणानुपपत्तिः । सर्वेषां प्रत्यक्षमूलकत्वात् । नहि मूलानुपपत्तौ तन्मूलकं किञ्चिदुपपद्यते । सर्वप्रमाणानुपपत्तौ च न किञ्चिदपि गृह्येत । **नहि** ग्राहकाभावे कस्यापि ग्रहणं युज्यते । भवति च भूतभविष्यद्वर्तमानानां सर्वेषां पदार्थानां ग्रहणम् । **अतः** पश्यामोऽस्ति तावदतीतानागताभ्यां व्यतिरिक्तः क्रियामात्रव्यङ्ग्यो वर्तमानः काल इति भावः ॥ ४२ ॥

**ननु** तदा हि वर्तमानः कालोऽतीतानागताभ्यां व्यतिरिक्तः सिध्येत् **चेत्** पूर्वं कालस्यातीतानागतत्वाभ्यां ग्रहणं स्यात्, **तच्च** न सम्भवति, तस्य नित्यत्वेन वर्तमानत्वसम्भवेऽप्यतीनानागतत्वासम्भवात्? **तत्राह—**

**"कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम्" ॥ ४३ ॥**

"तु" शब्देन स्वरूपतः कृतताकर्तव्यतोपपत्तिं वारयति । कालस्येति प्रकरणाल्लभ्यते । उभयथाग्रहणं=कालस्य नित्यत्वेऽप्यतीतानागतत्वाभ्यां ग्रहणं सम्भवति, **कुतः?** कृतताकर्तव्यतोपपत्तेः=व्यञ्जकेन कर्मणा तस्य कृतताकर्तव्यतयोरतीतानागतत्वयोरुपपत्तेरुपपद्यमानत्वादित्यर्थः ।

**यद्यपि** कालस्य नित्यत्वात् स्वरूपतोऽतीतानागतत्वे नोपपद्येते **तथाप्युपाधिभूतस्य** कर्मणः क्षणिकतया नच ते तत्सम्बन्धतोऽशक्योपपादे । **किमुक्तं?** क्रियाव्यङ्ग्यस्तावत्काल इति सर्वतन्त्रसिद्धान्तः । **क्रिया** च प्रतिक्षणमपवर्गवती कृता कर्तव्या क्रियमाणा चेति त्रेधा विभज्यते । तस्यास्त्रेधा विभागे च तद्व्यङ्ग्यः कालोऽपि त्रेधा विभक्तव्यः । **तत्र** कृतया क्रियया व्यङ्ग्यः कालो **"अतीतः"** कर्तव्यया क्रियया व्यङ्ग्यः कालो **"अनागतः"** क्रियमाणया क्रियया व्यङ्ग्यः कालो **"वर्तमानः"** इति । **तथाचोपाधिं** पुरस्कृत्य तस्यातीतानागतत्वाभ्यां ग्रहणसम्भवादतीतानागतव्यतिरिक्ततया वर्तमानस्यापि सिद्धेः सिद्धमस्ति खलु भूतो भविष्यन् वर्तमान इति [illegible] कालत्रयं, यद्विषयमनुमानं प्रमाणमिति भावः ॥ ४३ ॥

**अनुमानं** परीक्षितम्, **इदानीमुपमानं** परीक्षमाणः पूर्वपक्षयति—

**"अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः"** ॥ ४४ ॥

अत्यन्तप्रायैकदेशसाधर्म्यात्=द्वन्द्वान्ते श्रूयमाणतया साधर्म्यपदं प्रत्येकमभिसम्बध्यते, तद्गतयावद्धर्मवत्त्वमत्यन्तसाधर्म्यम्, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं प्रायसाधर्म्यम्, तद्भिन्नत्वे सति तद्गतयत्किञ्चिद्धर्मवत्त्वमेकदेशसाधर्म्यम्, तस्मादेतस्मात्साधर्म्यत्रयादुपमानासिद्धिः=उपमानप्रमाणस्योत्पत्तिर्न सम्भवतीत्यर्थः ।

यदुक्तं **"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्"** (न्या० १।१।६) इति । तदयुक्तम् । साधर्म्यपदेनात्यन्तसाधर्म्यप्रायसाधर्म्यैकदेशसाधर्म्यविवक्षायामुपमानासिद्धेः । नह्यत्यन्तसाधर्म्यात् प्रायसाधर्म्यादेकदेशसाधर्म्याद् वा क्वचिदुपमानं सिध्यति । सिध्येत् चेत् **तदा** गवा गौः अनुडुहा महिषः सर्षपेण च मेरुरप्युपमीयेत । न चैवमुपमीयते । **किमुक्तम्?** अर्थसाधकत्वादुपमानं तावत् प्रमाणम् । अर्थसाधकत्वं च साधर्म्यबलात् । तत्र वक्तव्यं कीदृशं तत्साधर्म्यं विवक्षितम् ? आत्यन्तिकं वा, प्रायिकं वा, ऐकदेशिकं वा, ? । **प्रथमे** यथा गौस्तथा गौः, **द्वितीये** यथाऽनड्वान् तथा महिषः, **अन्त्ये** यथा सर्षपस्तथा मेरुरित्युपमानमुत्पद्येत । गवि गोरत्यन्तसाधर्म्यस्य, महिषेऽनडुहः प्रायसाधर्म्यस्य, मेरौ च सर्षपैकदेशसाधर्म्यस्य विद्यमानत्वात् । **नच** तत् तथोत्पद्यते । **तस्मात्** भवति प्रतिपत्तिरर्थासाधकत्वादप्रमाणं नूनमुपमानमिति भावः ॥ ४४ ॥

**समाधत्ते—**

**"प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः"** ॥ ४५ ॥

प्रसिद्धसाधर्म्यात्=प्रसिद्धस्य पूर्वं प्रमितस्य गवादेर्यत्साधर्म्यं तन्मात्रादुपमानसिद्धेः=उपमानज्ञानोत्पत्तेर्यथोक्तदोषानुपपत्तिः=यथोक्तदोषो नोपपद्यत इत्यर्थः ।

**न** वयमत्यन्तादिसाधर्म्यादुपमानसिद्धिं निगदामो येनोक्तदोष उपप-

द्येत, **अपिच?** प्रसिद्धसाधर्म्यात्। **तच्च** क्वचिदात्यन्तिकं क्वचित्प्रायिकं क्वचिदैकदेशिकमिति प्रकरणादध्यवसीयते, न नियमेन विवक्ष्यते। **किमुक्तं?** प्रकरणाद्यपेक्षं हि वाक्यं स्वार्थं प्रतिपादयति न केवलम्। **अतो** यत्रातिदेशवाक्यात् प्रकरणाद्यपेक्षयाऽत्यन्तं साधर्म्यं प्रतीयते, तत्र **"अत्यन्तसाधर्म्यं"** यत्र प्रायः साधर्म्यं, तत्र **"प्रायसाधर्म्यं"** यत्र चैकदेशसाधर्म्यं तत्र **"एकदेशसाधर्म्यम्"** उपमानहेतुरभ्युपगम्यते। न सर्वत्र साधर्म्येऽत्यन्तत्वादिकं नियम्यते। **तस्मान्न** यथोक्तदोषोपपत्तिः। **किंबहुना**—साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्य न तावदुपमानं प्रवर्तते, **किन्तु** प्रसिद्धसाधर्म्यस्य साध्यसाधनभावमाश्रित्य। तच्च यत्र विद्यते न तत्रोपमानं प्रतिषेद्धुं शक्यम्। यत्र च न विद्यते किं तत्र तत्प्रतिषेधेन। अनवसरदुःस्थत्वात्। **अतः** सिद्धं प्रमाणं खलूपमानमितिभावः॥ ४५॥

**ननु** भवतु प्रमाणमुपमानं **तथापि** न तदनुमानतोऽतिरिच्यते, विशेषाभावादिति पुनः पूर्वपक्षयति—

**"प्रत्यक्षेणाप्रत्यक्षसिद्धेः"** ॥ ४६ ॥

उपमानासिद्धिरिति पूर्वसूत्राद् **"मण्डूकप्लुति"** न्यायेनानुवर्तते। प्रत्यक्षेण=प्रत्यक्षविषयीभूतेन गोसाधर्म्यविशेषेणाप्रत्यक्षसिद्धेः=अप्रत्यक्षस्य गवयसंज्ञाविशिष्टस्य गवयस्य प्रतिपत्तेरुपमानासिद्धिः=अनुमानतोऽर्थान्तरमुपमानं न सिध्यतीत्यर्थः।

**यथा हि** प्रत्यक्षेण धूमेनाप्रत्यक्षस्य वह्नेः प्रतिपत्तिरनुमानम्, **एवं** प्रत्यक्षेण गोसाधर्म्यविशेषेणाप्रत्यक्षस्य गवयसंज्ञाविशिष्टस्य गवयस्यापि प्रतिपत्तिरनुमानमेव भवितुमर्हति नोपमानं, विशेषाभावात्। **नह्य**प्रत्यक्षार्थप्रतिपादनेऽनुमानोपमानयोः कश्चिद् विशेषो विद्यते। **यथाह्य**नुमानं प्रत्यक्षेणार्थेनाप्रत्यक्षमर्थं प्रतिपादयति तथोपमानमपि प्रत्यक्षेणार्थेनाप्रत्यक्षमर्थं प्रतिपादयति। **तस्माद**वगम्यतेऽनुमानं नूनमुपमानं न प्रमाणान्तरमिति भावः॥ ४६॥

समाधत्ते—

**"नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः" ॥ ४७ ॥**

न=न वयमुपमानस्य=उपमानप्रमाणस्याप्रत्यक्षे=प्रत्यक्षाविषयीभूते गवये=गवयसंज्ञाविशिष्टे गवयपदार्थे प्रमाणार्थं=प्रमाणशब्दार्थं प्रमाणत्वं पश्यामः=स्वीकुर्मं इत्यर्थः ।

चेद् वयं प्रत्यक्षेण गोसाधर्म्यविशेषेणाप्रत्यक्षे गवयसंज्ञाविशिष्टे गवये प्रमाणार्थमुपमानस्य स्वीकुर्याम **तदा** स्यादनुमानतोऽनर्थान्तरमुपमानम् । **परं** न वयं तत्र तस्य प्रमाणभावमभ्युपगच्छामः **किन्तु** "गवयो गवयपदवाच्यः" इति संज्ञासंज्ञिसम्बन्धविशेषे । सच प्रत्यक्षेण गोसाधर्म्यविशेषेण सम्प्रतीयमानोऽपि न धूमेन वह्निरिव व्याप्तिस्मरणपूर्वकं सम्प्रतीयते । **अपि च ?** "यथा गौस्तथा गवयः" इत्यतिदेशवाक्यार्थस्मरणपूर्वकम् । **किमुक्तं ?** यथाहि पुरोवर्तिनि पर्वते **"यत्र धूमस्तत्राग्निः"** इति व्याप्तिस्मृतिसहकृतेन धूमदर्शनेन वह्निःपरिच्छिद्यते, न तथा पुरोवर्तिनि प्राणिपिण्डे व्याप्तिस्मृतिसहकृतेन गोसाधर्म्यविशेषदर्शनेन संज्ञासंज्ञिसम्बन्धः परिच्छिद्यते, **अपिच ?** "यथा गौस्तथा गवयः" इत्यतिदेशवाक्यार्थस्मृतिसहकृतेन प्रत्यक्षगोसादृश्यविशेषेण । **तथा च** परिच्छेदप्रकारस्य भिन्नतया परिच्छेदकभेदस्याप्यावश्यकत्वात् सिद्धमनुमानतो वैशिष्ट्यमुपमानस्येति भावः ॥ ४७ ॥

**ननु** व्यापारांशे विशेषे सत्यपि व्यापारिणि विशेषाभावादुपमानस्यानुमानतोऽविशेष एव सिध्यति न विशेषः ? **तत्राह**—

**"तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः" ॥ ४८ ॥**

उपमानस्येत्यनुवर्तते। तथेत्युपसंहारात्=उपसंहारो **वाक्यम्,** उपसंह्रियतेऽनेनेति तद्व्युत्पत्तेः, "यथा गौस्तथा गवयः" इत्याप्तवाक्यादुपमानसिद्धेः=सारूप्यज्ञानेनोपमानोत्पत्तेरविशेषः=उपमानस्यानुमानतोऽविशेषः विशेषो भेदस्तदभावो न=न सिध्यतीत्यर्थः ।

**न** वयं धूमदर्शनमिव सारूप्यदर्शनमात्रमुपमानसिद्धौ व्यापारिणं ब्रूमो

येन तत्र विशेषो न स्यात्, **अपि च?** "यथा गौस्तथा गवयः" इत्याप्तवाक्यसापेक्षम्। **किमुक्तं?** "यथा गौस्तथा गवयः" इत्येतदागममन्तरेण सारूप्यमात्रपरिज्ञानादुपमानं न सिध्यति, न वा सारूप्यज्ञानमन्तरेणोक्तादागममात्रात्, **अपि च?** मिलितादुभयस्मात्। न चैवमनुमाने कश्चन व्यापारी विद्यते। लिङ्गपरामर्शस्यातादृक्त्वात्। **यथा** चैष व्यापारव्यापारिणोरुभयोरुपमाने विशेषः **तथा**ऽस्त्यन्योऽपि विशेषः। अनुमानं ह्यात्मसिद्धै यथा व्याप्तिज्ञानं नियमेनापेक्षते न तथोपमानं तदपेक्षते। तस्य तदपेक्षां विनैव सिद्धेः। सति चैतावति विशेषे न जात्वविशेषः सेद्धुमर्हति। **तस्मादनुमानतः** प्रमाणान्तरमुपमानमिति भावः॥ ४८॥

**उपमानं** परीक्षितं, क्रमप्राप्तः **शब्दः** सम्प्रति परीक्षणीयः, तत्र पूर्वन्तावत् पूर्वपक्षयति—

**"शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्"** ॥ ४९॥

शब्दः=शब्दप्रमाणमनुमानम्=अनुमानतोऽर्थान्तरं न भवति, **कुतः?** अर्थस्य=शब्दविषयस्यार्थस्यानुपलब्धेः=प्रत्यक्षतोऽनुपलब्धेः उपलब्ध्यभावेनानुमेयत्वात्=अनुमातुं शक्यत्वादित्यर्थः।

द्विविधो ह्यर्थः परोक्षोऽपरोक्षश्च। तत्रापरोक्षः प्रत्यक्षेणोपलभ्यते, परोक्षश्च नोपलभ्यते। यश्चोपलभ्यते, स प्रत्यक्षप्रमाणस्य विषयः। यश्च नोपलभ्यते, सोऽनुमानप्रमाणस्य विषयः। परोक्षापरोक्षाभ्यां चान्यो नास्ति कश्चनार्थराशिः, यद्विषयः शब्दः प्रमाणं कल्प्येत। परोक्षार्थविषयो भवँश्च न जात्वनुमानतो विशिष्यते। **किमुक्तं?** विषयभेदतन्त्रः खल्वखिलः प्रमाणभेदः। विषयभेदश्च शब्दानुमानयोर्न विद्यते। यथा ह्यनुमानं प्रत्यक्षेणानुपलभ्यमानमर्थं विषयीकरोति तथा शब्दोऽपि प्रत्यक्षेणानुपलभ्यमानमर्थं गोचरयति। न च विषयभेदाभावे तद्भेदः कल्पयितुमुचितः। अतिप्रसङ्गात्। **अतो**ऽनुमानं शब्दो न प्रमाणान्तरमिति भावः॥ ४९॥

अत्रैव हेत्वन्तरमाह—

**"उपलब्धेरद्विप्रवृत्तित्वात्"** ॥ ५०॥

शब्दोऽनुमानमित्यनुवर्त्तते। उपलब्धेः=शब्दाधीनायाः अनुमानाधीनायाश्चोपलब्धेरद्विप्रवृत्तित्वात्=प्रकारद्वयेनाप्रवृत्तित्वात् प्रकारभेदाभावेन प्रवृत्तिमत्त्वादिति यावदवगम्यते शब्दोऽनुमानमित्यर्थः ।

च्चेदनुमानप्रमाणतः प्रमाणान्तरं शब्दो विद्येत तदाऽनुमानोपलब्धितत्तदुपलब्धिर्भिन्नप्रकारा प्रवर्त्तेत । प्रमाणान्तरभावे प्रकारभेदेनोपलब्धिप्रवृत्तेर्दृष्टत्वात्। नहि सा यथा प्रत्यक्षे प्रवर्त्तते तथैवानुमानेऽपि प्रवर्त्तते। अपरोक्षार्थावगाहिनी हि सा प्रत्यक्षे, परोक्षार्थावगाहिनी चानुमाने। अपरोक्षार्थावगाहित्वं परोक्षार्थावगाहित्वं च द्वयोः स्पष्टः प्रकारभेदः । नचैवमनुमानोपलब्धितः शब्दोपलब्धौ प्रकारभेदो विद्यते । सा हि यथा शब्दे परोक्षमर्थमवगाहते तथानुमानेऽपि परोक्षमर्थमवगाहते । नास्ति कश्चिद् विशेषः। तस्मात् प्रतिपद्यतेऽनुमानं शब्दो न प्रमाणान्तरमिति भावः॥५०॥

अन्यं हेतुं समुच्चिनोति—

"सम्बन्धाच्च" ॥ ५१ ॥

शब्दोऽनुमानमित्यनुवर्त्तते । चोऽप्यर्थः। यत इति शेषः । सम्बन्धाच्च=यतो नियताद् वाच्यवाचकभावलक्षणात् सम्बन्धादर्थं प्रतिपादयति तस्मादपि सम्बद्धार्थप्रतिपादकत्वादपि शब्दोऽनुमानमित्यर्थः ।

यथा हि दर्शनपदवीं प्राप्तं लिङ्गं स्वसम्बन्धिलिङ्गिनमर्थं प्रतिपादयति तथा शब्दोऽपि दर्शनपदवीं प्राप्तः स्वसम्बन्धिनमर्थं प्रतिपादयति । स्वसम्बद्धार्थप्रतिपादने च नास्ति शब्दानुमानयोर्विशेषः। तस्मादनुमानं शब्दो न प्रमाणान्तरमिति भावः ॥ ५१ ॥

जातः पूर्वः पक्षः, सम्प्रति तत्समाधिमाह—

"आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः" ॥ ५२ ॥

आप्तोपदेशसामर्थ्यात्=आप्तोपदेशकृतं यद् यथार्थप्रत्ययजनकत्वलक्षणं सामर्थ्यं तस्मात् शब्दात्=प्रतीतिविषयाच्छब्दादर्थसम्प्रत्ययः=शब्दार्थगोचरयथार्थप्रत्ययो भवतीत्यर्थः ।

चेल्लिङ्गमात्राल्लिङ्गिगोचरप्रत्यय इव शब्दमात्राच्छब्दार्थगोचरप्रत्ययो जायेत **तदा** स्यादनुमानं शब्दः। **नच** शब्दमात्राच्छब्दार्थगोचरसम्यक्प्रत्ययो जायते, **अपिच** ? "आप्तेनोपदिष्टोऽयं शब्दः" इत्याप्तोपदेशकृतसामर्थ्यविशेषवतः शब्दात्। न चैवमनुमानं विद्यते। तस्योक्तलक्षणसामर्थ्याभावात्। सोऽयं शब्दानुमानयोर्विशेषः। **किमुक्तं?** यद्यपि शब्दोऽप्यनुमानमिव परोक्षमेवार्थं विषयीकरोति, स्वार्थप्रत्यायनाय च सम्बन्धग्रहणमाकाङ्क्षति, **तथा**ऽप्यस्त्युभयोर्महान् भेदः। अनुमानं ह्यर्थप्रत्यायनसमये न जात्वाप्तोपदिष्टत्वेन प्रमाणत्वमुपसङ्क्रम्य स्वीयमर्थं प्रत्यापयति, शब्दस्त्वर्थप्रतिपत्तिवेलायामाप्तोपदिष्टत्वेन नियमतः प्रामाण्यमुपसम्पद्यात्मीयमर्थं प्रतिपादयति। **किंबहुना**ऽत्यन्तादृष्टपूर्वो हि शब्दप्रमाणस्य विषयः, यत्रासाकीनं प्रत्यक्षं वाऽनुमानं वा मात्रयाऽपि प्रवेशं न लभते। **को** नु नाम चिदचिदीश्वराणां याथातथ्यतस्तत्त्वमभ्युदयनिःश्रेयससाधनानां च कर्मणां यथार्थं स्वरूपं शब्दादृते प्रत्यक्षानुमानाभ्यां प्रतिपत्तुमीष्टे। शब्दस्यैवापूर्वोऽयं महिमा यतो हस्तामलकवत् सर्वः सर्वं प्रतिपद्यते। यथाशब्दमनुतिष्ठँश्च नियमेनैहिकामुष्मिकं "**स्वराज्यम्**" उपभुङ्क्ते। सति चैतावति विशेषे केनानुमानं शब्द इति कल्पयितुं शक्यते, केन वा तदुपलब्धेरद्विप्रवृत्तिरुद्भावयितुं पार्य्यते। विशिष्टे हेतौ हेतुमद्वैशिष्ट्यस्यावर्जनीयत्वात्। **सम्बन्धा**दर्थप्रतिपादकत्वं तु शब्दप्रमाणस्येष्टमेव। **न** चैतावता शब्दोऽनुमानतामापद्यते। सर्वेषां सर्वत्र यत्किञ्चित्सामान्यसम्भवात्। **अतो** नानुमानं शब्दोऽपि च प्रमाणान्तरमिति भावः॥ ५२॥

अनुमानतः प्रमाणान्तरं शब्द इति परीक्षितम्। **इदानीं** विप्रतिपन्नत्वाच्छब्दार्थयोः सम्बन्धः परीक्षणीयः। **सच** सामयिक इति **सिद्धान्तः**, अविनाभाव इति **पूर्वः पक्षः**। तमेव द्रढयितुकामः पूर्वन्तावत् तदभावमाशङ्कते—

**"पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः"** ॥ ५३॥

चकारेण स्थानप्रयत्नानुपलब्धिं समुच्चिनोति। पूरणप्रदाहपाटनानुपल-

ब्धेः=मोदकाग्निच्छुरिकाशब्दोच्चारणेन मुखपूर्त्तेर्मुखप्रदाहस्य मुखपाटनस्य चोपलम्भाभावादवगम्यते सम्बन्धाभावः=शब्दार्थयोर्मिथः सम्बन्धो नास्तीत्यर्थः।

शब्दार्थौ **चेत्** परस्परं सम्बद्धौ स्यातां **तदा**ऽर्थान्तिके शब्दः शब्दान्तिके वाऽर्थ इति स्यात्। **न** चार्थान्तिके शब्द इत्युपपद्यते। तस्य वदनैकदेशकण्ठादिस्थानाभ्यन्तरप्रयत्नाभ्यामुच्चार्य्यमाणत्वेन तदन्तिकत्वासम्भवात्। तन्निष्पादकयोः स्थानप्रयत्नयोश्च तत्रोपलम्भाभावात्। परिशेषाच्छब्दान्तिकेऽर्थ इति वक्तव्यम्। न चैतत् सम्भवति। तत्र तदुपलब्धिहेतूनां मुखपूरणप्रदाहपाटनानामनुपलब्धेः। **किमुक्तं ?** चेदर्थः शब्दान्तिके स्यात् **तदा** वदनैकदेशकण्ठादिस्थानाभ्यन्तरप्रयत्नाभ्यामुच्चारणीयः शब्द इति मोदकाग्निच्छुरिकाशब्दोच्चारणेन द्रागित्येव तत्पूरणप्रदाहपाटनानि गृह्येरन्। **नच** गृह्यन्ते। **तस्मात्** प्रतिपद्यते नास्ति शब्दार्थयोः सम्बन्ध इति भावः॥ ५३॥

उक्ताशङ्कां निराकुर्वन् पूर्वपक्षी पूर्वपक्षं दृढीकरोति—

**"शब्दार्थव्यवस्थानादप्रतिषेधः"** ॥ ५४॥

अप्रतिषेधः="सम्बन्धाभावः" इत्युक्तः शब्दार्थसम्बन्धप्रतिषेधो न सम्भवति, **कुतः ?** शब्दार्थव्यवस्थानात्=शब्दादर्थप्रत्ययस्य व्यवस्थादर्शनात्सम्बन्धावगतेरित्यर्थः।

**यदि** शब्दार्थौ परस्परमसम्बद्धौ स्यातां **तदा** शब्दादर्थप्रत्ययस्य व्यवस्था न दृश्येत। दृश्यते च व्यवस्था, कश्चिदेव शब्दः कञ्चिदेवार्थं प्रत्याययति न सर्वः सर्वमिति। न चेयं व्यवस्था शब्दार्थयोरसम्बन्धे कथञ्चित् सञ्जाघटीति। **नहि** नियमेनार्थप्रत्ययहेतुः कश्चिदसम्बद्धः सन्नर्थप्रत्यायकः क्वचिदुपलभ्यते। तथाभूतस्य प्रदीपस्य सर्वत्र सम्बद्धस्यैव सतोऽर्थप्रत्यायकत्वदर्शनात्। **अतो**ऽवगम्यतेऽस्ति कश्चिद् शब्दार्थयोः सम्बन्धः। **स च** कुण्डबदरयोरिव न संयोगः, तन्तुपटयोरिव न समवायः, रूपरसयोरिव नैकार्थ-

समवायो वाऽभ्युपगम्यते **येन** मोदकाग्निच्छुरिकाशब्दोच्चारणेन मुखं पूर्य्येत प्रदह्येत तथा पाट्येत **किन्तु** "अविनाभावलक्षणः" इति भावः ॥५४॥

**सिद्धान्तयति—**

**"न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य" ॥ ५५ ॥**

न=शब्दार्थयोरविनाभावलक्षणः सम्बन्धो न सम्भवति, **कुतः?** शब्दार्थसम्प्रत्ययस्य=शब्दाज्जायमानस्यार्थबोधस्य सामयिकत्वात्="अस्माच्छब्दादयमर्थो बोद्धव्यः" इतीश्वरनियोगात्मकः सङ्केतः **समयः**, तन्निर्वर्त्यत्वादित्यर्थः।

**"अस्य शब्दस्यायमर्थोऽभिधेयः, यथाऽश्वशब्दस्य केसरादिमानर्थः, गोशब्दस्य च सास्नादिमान्"** इति योऽयं सर्गादौ भगवतः परमेश्वरस्याभिधानाभिधेययोर्नियमे नियोगो जातः, स **"समयः"** इत्युच्यते। स एव च शब्दशब्दार्थयोः सम्बन्धस्य हेतुत्वाद् **"वाच्यवाचकभाव"**लक्षणः सम्बन्धो वृत्तिः शक्तिरिति च व्यपदिश्यते। तेन हि परम्परातो वृद्धव्यवहारादिना प्रज्ञातेन सर्वत्र प्रयुक्ताच्छब्दादर्थसम्प्रत्ययो भवति, न स्वाभाविकेनाविनाभावसम्बन्धेन। तस्य सर्वत्राविशिष्टतया नियमहेतोरभावाच्छब्दार्थाव्यवस्थापत्तेः। नह्यस्य शब्दस्यानेनार्थजातेन सम्बन्धो नानेनेत्यस्ति कश्चिन्नियमहेतुः, येनाव्यवस्था न स्यात्। सति च तस्मिन् स एव समयो भवताऽप्यभ्युपगतः स्यात्। अन्यस्य नियमहेतोरनिरुक्तेः। **किमुक्तं?** येन हि शब्दार्थयोरविनाभावलक्षणः स्वाभाविकः सम्बन्ध आस्थीयते, तेनापि नासौ सत्तामात्रेण गमक आस्थेयः **किन्तु** विज्ञातः। विज्ञाने च **"अयमस्य वाचकः"** इति वा **"अयमस्माद् बोद्धव्यः"** इति वा समय एवोपायः। वृद्धव्यवहारोऽपि गवादिशब्दानां देवदत्तादिशब्दवत् समयपूर्व एव विज्ञानहेतुर्नापूर्वः। **यदा** चैवमभ्युपगतेऽपि सम्बन्धे मध्ये समय आपतति **तदा** समय एवास्तु किं सम्बन्धान्तराभ्युपगमेन। तन्मात्रादेव शब्दार्थव्यवस्थोपपत्तेः। **अतो** न साम्बन्धिकः शब्दार्थसम्प्रत्ययोऽपि च सामयिक इति भावः ॥ ५५ ॥

अत्रैव हेत्वन्तरमाह—

"जातिविशेषे चानियमात्" ॥ ५६ ॥

सामयिकः शब्दार्थसम्प्रत्यय इति विपरिणम्यानुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति सूचयितुं चकारः । जातिविशेषे च=घटजातिभेदे चानियमात्=पटशब्दवाच्यत्वनियमादर्शनादवगम्यते सामयिकः शब्दार्थसम्प्रत्यय-इत्यर्थः ।

**घटे** हि घटशब्दवाच्यत्वनियमो दृश्यते न पटशब्दवाच्यत्वनियमः । अविनाभावे च सम्बन्धे घटेऽपि पटशब्दवाच्यत्वनियमो दृश्येत । तस्य सर्वत्राविशेषात् । समयस्येव कस्यचिद् नियमविशेषहेतोश्चाभावात् । **परं** नासौ दृश्यते । **ततो** भवत्यवगतिः सामायिकः खलु शब्दार्थसम्प्रत्ययो न साम्बन्धिक इति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि केषांचिच्छब्दानामर्थैरसति स्वाभाविकेऽविनाभावलक्षणे सम्बन्धे समयोऽयं न विधातुं शक्यते । निर्दिश्य ह्यर्थं ब्रूयात् "अयमस्माद् बोद्धव्यः" इति । नच निर्देशोऽसति स्वाभाविके सम्बन्धे केषांचिच्छब्दानां सिध्यति । समयाधीने तु वाचकत्वे सर्वेषामकृतसमयत्वात् किं केन निर्दिश्येत । **तस्मात्** समयकरणमेव स्वाभाविकं कञ्चित्सम्बन्धं प्रतिपादयति शब्दानामित्युद्भावयितुं शक्यम् । **तथापि** सृष्ट्यादौ भगवता परमेश्वरेण कृतसमयैरेव शब्दैः समयस्य कृतत्वात्, तस्य चासत्सविधे परम्परातो वृद्धव्यवहारादिना समागतत्वान्न कश्चिद्दोष इत्यसाध्वीयमुद्भावनेति मन्तव्यम् । **सो**ऽयं समयो द्विविध आधुनिकसमयः, ईश्वरसमयश्च । तत्राद्यः "**परिभाषा**" इति परिभाष्यते । द्वितीयस्तु "**शक्तिः, वृत्तिः**" इति च व्याख्यायते । **सच** जात्याश्रयतया व्यक्तेः स्वयं लभ्यत्वात् जाताविति "**मीमांसकाः**" जातौ व्यक्तौ चोभयत्रेति "**गौतमाः**" इति ॥ ५६ ॥

**सामान्यतः** शब्दः शब्दार्थयोः सम्बन्धश्च परीक्षितः । **सम्प्रति** विशेषतः शब्दः परीक्षणीयः । **सच** द्विविधो दृष्टार्थप्रवक्तृकः, अदृष्टार्थप्रवक्तृकश्चे

त्युक्तमधस्तात् । तत्र दृष्टार्थप्रवक्तृकः शब्दो "वेदः" ईश्वरोक्तत्वादनाशङ्कनीयदोषतया न परीक्षितुमर्हति । परिशेषाददृष्टार्थप्रवक्तृकः शब्दो "ब्राह्मण" प्रभृतिरेव परीक्षितव्यः । तस्य मनुष्यबुद्धिरचितत्वेनाशङ्कनीयदोषतया तदर्हत्वात् । तत्रापि पूर्वं ब्राह्मणशब्दः । तस्य वेदव्याख्यानत्वेनाभ्यर्हितत्वात् । तत्परीक्षयैव चेतरेषामदृष्टार्थप्रवक्तृशब्दानां परीक्षायाः सम्भवात् । अतस्तमेव परीक्षयिष्यन्नाचार्य्यः पूर्वन्तावत् पूर्वपक्षयति—

**"तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" ॥ ५७ ॥**

तदप्रामाण्यं=तदा शब्दविशेषं **"ब्राह्मणं"** परामृशति, तस्य शब्दविशेषस्य ब्राह्मणस्य प्रामाण्यं प्रमाणत्वं न सम्भवति, **कुतः** ? अनृतव्याघातपुनरुक्तदोषेभ्यः=अयथार्थाभिधानम**नृतम्**, असम्बद्धार्थाभिधानं **व्याघातः**, अभिहितार्थाभिधानं **पुनरुक्तम्**, तान्येतानि दोषास्तेभ्यः तद्वत्त्वादिति यावदित्यर्थः ।

ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति चतुर्धा विभिन्नः खलु दृष्टार्थप्रवक्तृकः शब्दो ब्रह्मप्रभवत्वाद्वा बृहदर्थकत्वाद्वा "ब्रह्म" इत्याम्नायते यत्रेदमुक्तं भवति—

**ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।**
**स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्य्यते** ॥ (मनु० २।७४ ) इति ।

ब्रह्म छन्दो वेदो मन्त्र इति चानर्थान्तरम् । अस्य चतुर्धा विभिन्नस्य दृष्टार्थप्रवक्तृशब्दस्य च भगवतो ब्रह्मणो यदितरापत्यप्रभृतिभिर्महीदासयाज्ञवल्क्यादिभिर्याज्ञिकसम्प्रदायिभिर्महर्षिभिः कृतं व्याख्यानं तद् "**ब्राह्मणम्**" इति निगद्यते । ब्रह्मणः=भगवतो वेदस्येदं व्याख्यानमिति तद्व्युत्पत्तेः । नच "**ब्राह्मोऽजातौ**" ( अष्टा० ६।४।१७१ ) इति सूत्रविरोधः । अनपत्येऽणि ब्राह्मेति निपात्यत इति प्रथमे योगे, जातिभिन्नापत्येऽणि ब्राह्मेति निपात्यत इति च द्वितीये योगेऽर्थाभ्युपगमात् । योगविभागं च "ब्राह्मो महूर्त्तः, ब्राह्मी तनुः, ब्राह्मं हविः, ब्राह्मो नारदः, चतुर्विधं ब्राह्मणं, वर्णतो ब्राह्मणः" इत्यादिप्रयोगसिद्धये महाभाष्यकृद्

भगवान् पतञ्जलिरप्यनुमन्यते। अतो न तेन विरोधः। तच्चैतद् व्याख्येयस्य भगवतो ब्रह्मणश्चतुर्विधत्वाच्चतुर्विधमेवाश्रीयते। तत्र ऋग्वेदस्य व्याख्यानम् "**ऐतरयब्राह्मणम्**" प्रथमं, यजुर्वेदस्य व्याख्यानं "**शतपथब्राह्मणम्**" द्वितीयं, सामवेदस्य व्याख्यानं "**ताण्ड्यब्राह्मणम्**" तृतीयम्, अथर्ववेदस्य व्याख्यानं "**गोपथब्राह्मणम्**" तुरीयम्। एतद्ब्राह्मणचतुष्टयानन्तरप्रभवं चान्यत्सर्वमङ्गोपाङ्गादि शास्त्रम्। अतो न तत् पृथक् परीक्षितुमर्हति। तस्यैतत्परीक्षयैव परीक्षितत्वोपपत्तेः। एतस्य च ब्राह्मणचतुष्टयस्य न तावत् प्रामाण्यमुपपद्यते। अनृतव्याघातादिभिर्दोषैः कलुषितत्वात्। स हि प्रयुक्तः शब्दः प्रामाण्यं प्रतिपद्यते, यो न जात्वनृतं ब्रूते, नासम्बद्धमाचष्टे, नाभिहितं चाभिधत्ते। चेदनृतं ब्रुवाणोऽसम्बद्धमाचक्षाणोऽभिहितं चाभिदधानोऽपि कश्चिच्छब्दः प्रामाण्यं प्रतिपद्येत **तदा** किं नु नाम शब्दान्तरमवशिष्यते, यन्न प्रामाण्यमश्नुवीत। तथाच को वा कं शब्दं लोके प्रत्याचक्षीत, कं चोपादेयं कं च हेयमभिदधीत। ब्राह्मणानामनृताद्यभिधायकत्वं तु स्पष्टमधिगम्यते नास्ति संशयतुषः। **तथाहि**-भवति दीक्षणीयेष्टौ स्विष्टकृद्रूपस्तावदेको यागः, तत्र फलविशेषाय छन्दोविशेषयुक्ते याज्यानुवाक्ये विधीयेते "**जगत्यौ पशुकामः कुर्वीत। जागता वै पशवः। पशुमान् भवति य एवं विद्वान् जगत्यौ कुरुते। विराजावन्नाद्यकामः कुर्वीत। अन्नं वै विराट्। तस्माद् यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति। तद्विराजो विराट्त्वम्। वि स्वेषु राजति श्रेष्ठःस्वानां भवति य एवं वेद**" (ऐ० १।१।५) इति। "**जनस्य गोपा अजनिष्ट**" ( ऋ० ४।१।३।१ ) "**यज्ञस्य केतुं प्रथमं पुरोहितम्**" ( ऋ० ४।१।३।२ ) इति द्वे ऋचौ हि **जगत्यौ**, "**प्रेद्धो अग्ने दीदिहि**" ( ऋ० ५।१।२४।३ ) "**इमो अग्ने वीततमानि**" ( ऋ० ५।१।२६।१८ ) इति द्वे ऋचौ च **विराजौ**। नच ते द्वे ऋचौ जगत्यौ वा विराजौ वा स्विष्टकृति यागे याज्यानुवाक्ये कुर्वतः पशुकामस्य संस्थिते तस्मिन् पशवः प्राप्यन्ते,

न वाऽन्नाद्यकामस्यान्नं योग्यमन्नमुपसम्पद्यते। चेदिदं ब्राह्मणं वचस्तथ्यं ब्रूयात् तदाऽवश्यं संस्थिते तस्मिन् पशुकामस्य पशवः प्राप्येरन्, अन्नाद्यकामस्य चान्नाद्यमुपसम्पद्येत। नह्यृतं ब्रुवाणः शब्दो यमर्थं प्रत्याययति, स न प्राप्यते, प्रामाण्यं चोपसम्पद्यते। अर्थवत्त्वं हि प्रामाण्यम्। तच्च प्रवृत्तिसामर्थ्यात् प्रमाणानामवगम्यते। नचास्य प्रमाणस्य सतो ब्राह्मणस्यास्ति प्रवृत्तिसामर्थ्यं, तदभावे च कुतोऽर्थवत्त्वम्। सोऽयमनृतदोषः।

"वृषशुष्मो ह वातावत उवाच जातूकर्ण्यो वक्ता स्मो-वा इदं देवेभ्यः "यदेतदग्निहोत्रमुभयेद्युरहूयत, अन्येद्युर्वाव तदेतर्हि हूयते" इति। एतद् वा अग्निहोत्रमन्येद्युर्हूयते यदस्तमिते सायं जुहोत्यनुदिते प्रातः। अथैतदग्निहोत्रमुभयेद्युर्हूयते यदस्तमिते सायं जुहोत्युदिते प्रातः। तस्मादुदिते होतव्यम्।

चतुर्विंशे ह वै संवत्सरेऽनुदितहोमी गायत्रीलोकमाप्नोति द्वादशे उदितहोमी। स यदा द्वौ संवत्सरावनुदिते जुहोत्यथास्यैको हुतो भवति, अथ य उदिते जुहोति संवत्सरेणैव संवत्सरमाप्नोति य एवं विद्वानुदिते जुहोति। तस्मादुदिते होतव्यम्।

एष ह वा अहोरात्रयोस्तेजसि जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातः। अग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसाऽहस्तेजस्वत्। अहोरात्रयोर्हास्य तेजसि हुतं भवति य एवं विद्वानुदिते जुहोति। तस्मादुदिते होतव्यम्॥ ४॥

एते ह वै संवत्सरस्य चक्रे यदहोरात्रे, ताभ्यामेव तत् संवत्सरमेति। स योऽनुदिते जुहोति यथैकतश्चक्रेण

यायात् तादृक् तत् । अथ य उदिते जुहोति यथोभयतश्चक्रेण यान् (१) क्षिप्रमध्वानं समश्नुवीत तादृक् तत् ॥ ८ ॥

उद्यन्तु खलु वा आदित्य आहवनीयेन रश्मीन् सन्दधाति । स योऽनुदिते जुहोति यथा कुमाराय वा वत्साय वाऽजाताय स्तनं प्रतिदध्यात् तादृक् तत् । अथ य उदिते जुहोति यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात् तादृक् तत् । तमस्मै प्रतिधीयमानमुभयोर्लोकयोरन्नाद्यमनुप्रतिधीयतेऽस्माच्च लोकादमुष्माच्चोभाभ्याम् । स योऽनुदिते जुहोति यथा पुरुषाय वा हस्तिने वाऽप्रयते (२) हस्त आदध्यात् तादृक् तत् । अथ य उदिते जुहोति यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात् तादृक् तत् । तमेष एतेनैव हस्तेनोर्ध्वं हृत्वा स्वर्गे लोकआदधाति य एवं विद्वानुदिते जुहोति । तस्मादुदिते होतव्यम् ।

उद्यन्तु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते । प्राणे ह्यस्य सम्प्रति हुतं भवति य एवं विद्वानुदिते जुहोति । तस्मादुदिते होतव्यम् ।

एष ह वै सत्यं वदन् सत्ये जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातः । भूर्भुवः स्वरोमग्निर्ज्योतिर्ज्योतिरग्निरिति सायं जुहोति । भूर्भुवः स्वरों सूर्य्यो ज्योतिर्ज्योतिः सूर्य्य इति प्रातः । सत्यं ह्यस्य वदतः सत्ये हुतं भवति य एवं विद्वानुदिते जुहोति । तस्मादुदिते होतव्यम् । तदेषा यज्ञगाथा गीयते "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवा कीर्त्यमदिवा कीर्तयन्तः सूर्य्यो-

(१) गच्छन् ।   (२) अप्रसारिते ।

ज्योतिर्न तदा ज्योतिरेषाम्" इति" (ऐत० ५।५।४–५–६) इत्यनुदितहोमे दोषमुक्त्वोदितहोमो विधीयते। तच्चैतत् "सूर्य्यो ह वा अग्निहोत्रं, तद्यदेतस्या अग्र आहुते रुदैत् तस्मात् सूर्य्योऽग्निहोत्रम्। १। स यत् सायमस्तमिते जुहोति य इदं तस्मिन्निह सति जुहवानीति, अथ यः प्रातरनुदिते जुहोति य इदं तस्मिन्निह सति जुहवानीति, तस्माद् वै सूर्य्योऽग्निहोत्रमित्याहुः। २। अथ यदस्तमेति तदग्नावेव योनौ गर्भो भूत्वा प्रविशति, तं गर्भं भवन्तमिमाः सर्वाः प्रजा अनुगर्भा भवन्ति, ईलिता हि शेरे सञ्जानानाः। अथ यद् रात्रिस्तिर एवैतत् करोति, तिर इव हि गर्भाः। ३। स यत् सायमस्तमिते जुहोति गर्भमेवैतत्सन्तमभिजुहोति, तस्मादिमे गर्भा अनश्नन्तो जीवन्ति। ४। अथ यत् प्रातरनुदिते जुहोति, प्रजनयत्येवैनमेतत्। सोऽयं तेजो भूत्वा विभ्राजमान उदेति। शश्वद्ध वै नोदियात् यदस्मिन्नेतामाहुतिं न जुहुयात्। तस्माद्वा एतामाहुतिं जुहोति। ५। स यत्सायमस्तमिते जुहोति, अग्नावेवैभ्य एतत् प्रविष्टेभ्यो जुहोति, अथ यत्प्रातरनुदिते जुहोत्यप्रेतेभ्य एवैभ्य एतज्जुहोति, तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामह इति ह स्माहासुरिर्यथा शून्यमावस्थमाहरेदेवं तदिति" (शत० २।२।३।१–२–३–४–५–९) इति ब्राह्मणान्तरेण व्याहन्यते। अत्रोदितहोमे दोषमुक्त्वाऽनुदितहोमविधानात्। सोऽयं व्याघातः।

यत्तु धर्मशास्त्रकृता भगवता **मनुना** व्याघातस्योदाहरणान्तरं द्वितीये प्रादर्शि—

> **उदितेऽनुदिते चैव समयाध्युषिते तथा।**
> **सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥१५॥** इति।

तद् शाखान्तराभिप्रायेण द्रष्टव्यम् । श्रूयते किल शाखान्तरे "उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति । श्यावोऽस्याहुतिमभ्यवहरति, य उदिते जुहोति । शबलोऽस्याहुतिमभ्यवहरति, योऽनुदिते जुहोति । श्यावशबलावस्याहुतिमभ्यवहरतः, यः समयाध्युषिते जुहोति" ( तै० सं० ६।६।११।६ ) इति । अत्र हि विधिः प्रतिषेधेन व्याहन्यते । सोऽयं व्याघातः ।

"स वै त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" (शत० १।३।२।६) इत्यत्र हि प्रथमाया उत्तमायाश्च "सामिधेन्याः" ऋचस्त्रिरनुवचनं विधीयते । नच तयोरभिहिताभिधानं विना त्रिरनुवचनमुपपद्यते । अभिहिताभिधानं च पुनरुक्तम् । तदेवमनृतादिदोषयुक्तत्वादप्रमाणं खलु "ऐतरेयादिब्राह्मणचतुष्टयम्" इति भावः ॥

इदमत्रबोध्यम्—ये ह्यत्र तच्छब्देन ब्राह्मणमपरामृश्य "वेदं" परामृशन्ति, यत्रेदं व्याख्यातं "तस्येति शब्दविशेषमेवाधिकुरुते" "तदित्यधिकारः" "शास्त्रे ह्यस्मिन्निःश्रेयसाधिगमपरे तन्नान्तरीयकतया वेदप्रामाण्यव्युत्पादनमधिकृतमित्यधिकृतःशब्दो वेदः" ( न्या० २।१।५७ भा० वा० ता० ) इति । ते नूनमनभिज्ञाः, न किञ्चिदवबुध्यन्ते । अप्रामाण्यसाधकत्वेनोपन्यस्तानां दोषाणां भगवति वेदे सम्भावयितुमप्यशक्यत्वात् । मनुष्यबुद्धिप्रभवा हि ते दोषा न सर्वज्ञसर्वशक्तिब्रह्मबुद्धिपूर्वके तस्मिन् कदाचित् कथञ्चित् सम्भवन्ति । तत्र तु यद्यदुच्यते तदृतमेवोच्यते, यद्यदाख्यायते तत्सम्बद्धमेवाख्यायते, यद्यदभिधीयते तदनभिहितमेवाभिधीयते । यत्र च येषां सम्भावनैव नास्ति, तत्र तदुपन्यासो न युज्यते । न वा बुद्धिमान्द्यात् प्रवृत्ता तदुपन्यासकल्पना तत्रभवतां वैदिकानां श्रद्धापथमवतरति । ब्राह्मणेषु च मनुष्यबुद्धिपूर्वकत्वादुपन्यस्ता दोषाः सुखेन सम्भाव्यन्ते । अत एव तत्र तदुपन्यासोऽप्युपपद्यते । युक्तं चैतद् । अन्यथा

दोषत्रयपरिहारानन्तरं विध्यादिभेदेन कृतो ब्राह्मणवाक्यानां त्रेधा विभागोऽनवसरदुःस्थतया पीड्येत। **नहि** तच्छब्देन वेदपरामर्शे ब्राह्मणवाक्यानां विभागः सङ्गच्छते। विभजमानो वा तत्परामृष्टं वेदमाधुनिका इव **"विधिमन्त्रार्थवादानुवादवचनविनियोगात्"** इति चतुर्धा कुतो न व्यभाक्षीत्। **किञ्च** वक्तव्यं चेदेष **भगवान्** सूत्रकृदत्र तच्छब्देन वेदपरामर्शमभिप्रैष्यत् **तदा** तत्प्रामाण्यसमाधिसूत्रे तत्प्रामाण्यवत् तत्प्रामाण्यं कथं समाधास्यत्। **नहि** यत्प्रामाण्यमाक्षिप्यते तद्वदेव पुनस्तत्प्रामाण्यं समाधीयते। समाधत्ते च **"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"** (२।१।६५) इति भगवान् गोतमः। ब्राह्मणपरामर्शे च नायं दोषः। तत्प्रामाण्यस्य मन्त्रायुर्वेदप्रामाण्यवत् समाधातुं शक्यत्वात्। **नचात्र** मन्त्रपदार्थो न वेदः, **अपिच?** अन्त्यजजातिप्रसिद्धाः विषभूताशनिप्रतिषेधार्था गारुड़मन्त्राः **"मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानाम्"** इति वात्स्यायनोक्तेरिति युक्तं **भाषणम्।** वैदिकानां तत्रावैदिकत्वेनास्थाभावादीश्वरीयवेदप्रामाण्याय तदुपन्यासानुपपत्तेः। **नहि** वैदिकैः क्व परमपूजनीयो भगवान् **वेदः,** क्व च दूरतः परित्यक्तव्याः किल विषभूताशनिप्रतिषेधका अन्त्यजजातिप्रसिद्धाः कल्पितमन्त्रा इति न प्रतिपद्यते। तत्प्रतिपत्तौ च "यथा गारुड़मन्त्राः प्रमाणं तथा भगवान् वेदः" इति तेषामुपन्यासो नोपपद्यते। **चेदिदं** मन्त्री **वात्स्यायनो** न प्रत्यपादि **तदा** तस्यैवैष दोषो नास्माकमिति कृतं तत्पाण्डित्यचिन्तया। नच **"मन्त्रब्राह्मणयोर्वेदनामधेयम्"** इति कात्यायनवचनाद् ब्राह्मणान्यपि वेद इति सुवचं **वचः।** कात्यायनस्य मिथ्यावादित्वेन तद्वचनस्य प्रामाण्यानर्हत्वात्। मिथ्यावादित्वं चास्य **"सद्वादित्वात् पाणिनेर्वचनं प्रमाणम्, असद्वादित्वान्न कात्यायनस्य"**(मी० १०।८।४)इति **"शबर"**स्वामिवचनाद् विस्पष्टम्। आपस्तम्बबौधायनप्रभृतयस्तु तदनुगामितया नावधेयवचसः सम्पद्यन्ते। अतः **किं** तद्वचनोदाहरणेन। **यथा** चैतद् छन्दविशेषस्य ब्राह्मणस्य वेदत्वं युक्त्याऽपि न सिध्यति **तथाऽस्माभिः "आर्य्यसिद्धान्ते"**

विस्तरेण व्युत्पादितम् । अतोनेह तद्व्युत्पादनाय पराक्रम्यते । अवेदस्य च वेदवदांशिकः प्रामाण्योपन्यासो न दुष्यति । तस्मादत्र तच्छब्देन ब्राह्मणस्यैव शब्दविशेषस्य परामर्शो ज्यायान् न स्वप्नेऽप्यनाशङ्कनीयदोषस्य भगवतो वेदस्येति युक्तमुत्पश्याम इति ॥ ५७ ॥

जातः पूर्वः पक्षः, सम्प्रति सिद्धान्तो वक्तव्यः । तत्र पूर्वं तावदनृतदोषं परिहरन्नाह—

**"न कर्मकर्तृसाधनवैगुण्यात्" ॥ ५८ ॥**

न=अनृतदोषो न विद्यते, कुतः ? कर्मकर्तृसाधनवैगुण्यात्=कर्म च कर्ता च साधनं च, तेषां वैगुण्यं वैकल्यं, तस्मात् फलाभावोपपत्तेरित्यर्थः ।

तत् खलु विहितं कर्म शास्त्रदेशितं फलं यथा समयमुपजनयति यस्य कर्ता सगुणः साधनानि सगुणानि स्वयं च सगुणं स्यात्, न जात्वात्मतः कर्तृतः साधनतश्च विगुणम् । फले जनयितव्ये कर्मणि कर्तरि तत्साधनेषु च गुणयोगस्य नियमेनापेक्षितत्वात् । नह्यात्मतः कर्तृतः साधनतश्च विगुणं लौकिकं वा वैदिकं वा किञ्चित् कर्म फलं प्रसोतुमर्हति । नच लोके त्रयाणां तेषामन्यतमेन विगुणं तावन्मातापित्रोः संयोगलक्षणं कर्म पुत्रं कृषिकर्म वा सस्यमुपजनयद् दृश्यते, येनान्यत्रापि कल्प्येत । यथोचितानुष्ठानाभावो हि कर्मवैगुण्यम्, अनभिज्ञत्वं कपूयाचरणत्वं च कर्तृवैगुण्यम्, सहकारिकारणानामसाकल्यं च साधनवैगुण्यम् । न चैतेषामन्यतमेन भवन् फलाभावः कर्मप्रतिपादकस्य शास्त्रस्याप्रामाण्ये कथञ्चिद्धेतुरुपपद्यते । वैगुण्यनिबन्धनो ह्यसौ फलाभावो न तदनृतत्वनिबन्धनः । तथा च संस्थिते स्विष्टकृति यागे जगत्यौ विराजौ वा याज्यानुवाक्ये कुर्वतश्चेत् पशवो न प्राप्यन्तेऽन्नाद्यं च नोपसम्पद्यते तदा न तद्विधायकं ब्राह्मणं दोषमृच्छति । कर्मकर्तृसाधनानामन्यतमस्य वैगुण्येन तदभावस्योपपादयितुं शक्यत्वात् । अतो न तत्रानृतदोष इति भावः ॥ ५८ ॥

अथ द्वितीयं व्याघातदोषं परिहरति—

"अभ्युपेत्य कालभेदे दोषवचनात्" ॥ ५९ ॥

"न" इत्यनुवर्तते । अभ्युपेत्य=यं कालमभ्युपगम्य होमे प्रवृत्तः, कालभेदे=तस्य कालस्य भेदनेऽतिक्रमे दोषवचनात्=दूषणाभिधानान्न व्याघातः इत्यर्थः ।

अस्ति तावद् वसन्तो ग्रीष्मो वर्षा चेत्यग्न्याधानस्य समयः **"ब्राह्मणो वसन्त आदधीत, क्षत्रियो ग्रीष्म आदधीत, वैश्यो वर्षास्वादधीत"** ( शत० २।१।३।५ ) इत्याम्नानात् । तस्मिँश्चैतस्मिन्नग्न्याधानसमये प्रत्येकमाश्रमिभिरधिकारिभिर्यथावकाशमग्निहोत्राय कालः कश्चिन्नियन्तव्यो भवति, यत्रेदमाम्नातम् **"अग्ने ! व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्, इदमहमनृतात् सत्यमुपैमि"** ( यजु० १।५ ) इति । कालश्चोदितानुदितभेदाद् द्विविधो व्यवस्थीयते । समयाध्युषितस्यानुदितेऽन्तर्भावसम्भवात् । प्रातः सन्धिकालो हि **समयाध्युषितः**, सायंसन्धिकालश्च **समयाविषत** इति भेदः । तत्र यः खल्वग्न्याधानसमये **"उदिते जुहवानि"** इत्यग्निहोत्रार्थमुदितकालमभ्युपगम्य प्रवृत्तः पश्चात् प्रमादादिना दोषेण तं कालं भिनत्ति अतिक्राम्यति परित्यज्य कालान्तरे जुहोति, तं प्रत्येष दोष उच्यते **"तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रम्"** ( शत० २।२।३।९ ) इति । न नियतकारिणं प्रति । तस्य नियतकारित्वेन होमविच्छेदानुपपत्तेः । नहि नियतकारिणः किञ्चित् कर्म कर्हिचिद् विच्छिद्यते । नचाविच्छिन्नहोमं कश्चिदेवमपवदितुमर्हति । प्रशंसनीयो ह्येष नियतकारी धीमान् न जात्वपवदनीयो, यो रक्षोभिर्विघ्नैः शतधा पीड्यमानोऽपि **"तिलक इव भारतजीवातुः"** नात्मनो व्रतं भिनत्ति, यदेव यथाशास्त्रमभ्युपगतं तदेवामरणं यथासामर्थ्यमनुतिष्ठति, न च स्वप्नेऽपि परित्यक्तुमिच्छति । यस्य च होमो विच्छिद्यते सोऽनियतकारी मूढधीः पुरुषापसदः । तद्धोमे चेद् ब्राह्मणान्तरेण दूषणमभि-

धीयते तदा न पूर्वब्राह्मणविहितःखलूदितहोमो दुष्टीभवति । भिन्नविषयत्वात् । अतो न व्याघातः । **किमुक्तं?** मनुष्याधिकारकं हि शास्त्रम् । तेन तथोपदिश्यते यथा मनुष्यास्तदुपदिष्टं यथाभिरुचि प्रत्यहं नियमेनानुतिष्ठेयुः, तत्फलं च द्रागित्येवावाप्नुयुः । मनुष्याश्च **तदेव** यथाभिरुचि प्रत्यहं नियमेनानुतिष्ठन्ति यत्र कश्चिद्दोषो न स्यात्, अनुष्ठीयमानं च वाँच्छितं फलं सद्यः प्रदद्यात्, अन्यच्च तदपेक्षया किञ्चिददुष्टमभीष्टफलप्रदं साधनं दृष्टिपथं नेयात् । एतदेवाभिप्रेत्य पूर्वस्मिन् **"ऐतरेयके"** तावदुदितहोमः स्तूयतेऽनुदितहोमश्च दोषवत्तया निन्द्यते । **"शतपथे"** च तद्विरुद्धमुदितहोमो निन्द्यतेऽनुदितहोमश्च स्तूयते । न चैतयोरुभयोर्ब्राह्मणयोरुदितहोमनिन्दायामनुदितहोमनिन्दायां वाऽस्ति तात्पर्य्यम्, **अपि च?** यस्य स्वव्यवहारवशादुदितकालोऽनुकूलः स्यात्, स उदिते जुहुयादित्युदितहोमे मनुष्याणां नियमेन प्रवृत्तौ प्रथमस्यैतरेयस्य, यस्य च स्वव्यवहारवशादनुदितकालोऽनुकूलः स्यात्, सोऽनुदितकाले जुहुयादित्यनुदितहोमे मनुष्याणां नियमेन प्रवृत्तौ द्वितीयस्य शतपथस्य तात्पर्य्यम् । नच कथमेतदिति संशयितव्यम् । ब्राह्मणेषु सर्वत्र विधिसन्निधौ पठितानामर्थवादानां साक्षात् परम्परया वा नियतप्रवृत्तिप्रयोजनायां विधेयार्थप्रशंसायामेव तात्पर्य्यस्य सर्वसम्मतत्वात् । **अत** एवाह द्वितीये भगवान् **मनुः**—

**श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ ।**
**उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ १४ ॥**

इति । नचैवं तयोः परस्परं विरोधः सम्पद्यते । **तस्मान्न** व्याघातः इति भावः ॥ ५९ ॥

अथ तृतीयं पुनरुक्तदोषं परिहरति—

**"अनुवादोपपत्तेश्च" ॥ ६० ॥**

"न" इत्यनुवर्तते । अप्रामाण्यहेतुदोषनिषेधे तृतीयोऽयं हेतुरिति सूचनाय चकारः । अभिहिताभिधानस्यानुवादत्वोपपत्तेर्न पुनरुक्तदोष इत्यर्थः ।

**तत्र** हि पुनरुक्तदोषः प्रसज्यते **यत्रा**न्तरेणार्थमभिहितमभिधीयते ।

**यत्र** तु भवत्यभिहिताभिधानस्य कश्चिदर्थः, **तत्र** नजात्वेतद्दूषणं प्रवेशं लभते । सार्थकस्य तस्यानुवादत्वोपपत्तेः । **द्विविधं** ह्यभिहिताभिधानं निरर्थकं सार्थकं च । तत्र निरर्थकं पुनरुक्तं भवति, सार्थकं चानुवादः । न चैष दोषः । अर्थवशेनोपपन्नस्य तस्य सर्वत्राभ्युपगमात् । **"स वै त्रिः प्रथमामन्वाह त्रिरुत्तमाम्"** ( शत० १।३।२।६ ) इत्यत्र प्रथमाया उत्तमायाश्च सामिधेन्योस्त्रिरभिधानमप्यनुवाद उपपद्यते । अर्थवत्त्वात् । **"प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयुः"** ( ऋ० ३।१।२७।१ ) इत्याद्याः एकादशसंख्याका ऋचो हि वह्निसमिन्धनवेलायां गीयमानत्वात् **"सामिधेन्यः"** इत्युच्यन्ते, यत्रेदमाम्नातं **"समिन्धे सामिधेनीभिर्होता तस्मात् सामिधेन्यो नाम"** ( शत० १।३।२।१ ) इति । ताश्च **पञ्चदश** विवक्षिताः । प्रकृतियागे पञ्चदशसंख्याकानां विकृतौ च सप्तदशसंख्याकानामेव तासामनुवचनस्य विधानात् । **तथा च** विधायकं ब्राह्मणं **"स वै त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ताः पञ्चदश सम्पद्यन्ते । पञ्चदशो वै वज्रो, वीर्य्यं वज्रो, वीर्य्यमेवैतत् सामिधेनीरभिसम्पादयति । तस्मादेतास्वनूच्यमानासु यं द्विष्यात् तमङ्गुष्ठाभ्यामवबाधेत "इदमहममुमवबाधे" इति । तदेनमेतेन वज्रेणावबाधते"** (शत० १।३।२।६–७) इति । **"सप्तदशसामिधेनीरनुब्रूयात्"** ( ऐ० १।१।१ ) इति च । **तैत्तिरीया** अप्यधीयते **"पञ्चदशसामिधेनीरन्वाह"** ( तै० सं० २।५।८।२ ) इति । **नच** तासां प्रथमायाः उत्तमायाश्चान्तरेण त्रिरभिधानं पञ्चदशत्वमुपपद्यते । नच विहितपरित्यागो युक्तः । वैगुण्यप्रसङ्गात् । **तथा च** सार्थकं त्रिरभिधानं न जातु निरर्थकम् । **अतो** न पुनरुक्तदोष इति भावः ॥ ६० ॥

**ननु** नायं परिहारो युज्यते, अनुवादस्यास्वीकारात् ? **तत्राह**—

**"वाक्यविभागस्य चार्थग्रहणात्"** ॥ ६१ ॥

वाक्यविभागस्य च=ब्राह्मणवाक्यानामनुवादादिभेदेन विभागस्य चार्थग्रहणात्=अर्थवशेन शिष्टैः स्वीकराद् युज्यते परिहार इत्यर्थः ।

**शिष्टाः** खल्वर्थवैचित्र्यमवलोक्य तद्वशाद् ब्राह्मणवाक्यानामनुवादादिभेदेन विभागं स्वीकुर्वन्ति **तद्यथा** यत्र कश्चिदर्थविशेषो विधीयते तद् विधिवाक्यं, यत्र विहितोऽर्थः स्तूयते प्रतिषिद्धो वा निन्द्यते तदर्थवादवाक्यं, यत्र च किञ्चिद्विशेषविधित्सयाऽभिहितार्थोऽनूद्यते तदनुवादवाक्यमिति । **तथा** चानुवादस्यापि स्वीकाराद् युज्यते परिहारः इति भावः ॥ ६१ ॥

**ननु** कतिविधो ब्राह्मणवाक्यानां विभागः शिष्टैरर्थवशात् स्वीक्रियते ? तत्राह—

**"विध्यर्थवादानुवादवचनविनियोगात्"** ॥ ६२ ॥

वचनशब्दो विध्यादिना प्रत्येकमभिसम्बध्यते । विनियोगोऽत्र भेदः । विधिवचनम्, अर्थवादवचनम्, अनुवादवचनमिति भेदात् त्रिविधो ब्राह्मणवाक्यानां विभाग इत्यर्थः ।

**त्रेधा** खलु ब्राह्मणवाक्यानि विनियुज्यन्ते विधिवाक्यम्, अर्थवादवाक्यम्, अनुवादवाक्यं चेति भावः ॥ ६२ ॥

**तत्र** विधिवाक्यं लक्षयति—

**"विधिर्विधायकः"** ॥ ६३ ॥

विधायकः=उपदेशकः चोदकः प्रवर्तक इति यावद् यो वाक्यविशेषः स विधिः=विधिवाक्यपदवाच्य इत्यर्थः ।

**येन** हि वाक्यविशेषेण विधिमुखेन वा निषेधमुखेन वा किञ्चिद् विधीयते, **किमुक्तं** ? "इदं कुरु, इदं मा कुरु" इत्युपदिश्यते यथा— **"स्वाध्यायोऽध्येतव्यः"** ( शत० ११।५।८।२ ) **"अग्निहोत्रं होतव्यम्"** ( शत० २।२।२।१८ ) **"सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः, प्रजातन्तुं मा व्यवच्छेत्सीः ।१। देवपितृकार्य्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो**

**भव। आचार्य्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि"** ( तै० उप० शि० १।११।१-२ ) इति। स **"विधिः"** इति भावः॥

तमिमं सावान्तरप्रभेदं विधिं **"मीमांसासूत्रवैदिकवृत्तौ"** विस्तरेण व्युदपीपदाम, तस्माद् न पुनरिह व्युत्पाद्यते॥ ६३॥

**अर्थवादं** विभज्य सामान्यतो लक्षयति—

**"स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः"** ॥ ६४॥

अर्थवादः=प्रवृत्त्यै वा निवृत्त्यै वा विधिनाऽपेक्षितः स्तुतिलक्षणो वा निन्दालक्षणो वाऽर्थो येनोद्यते स वाक्यविशेषः **"अर्थवादः"** इत्यर्थवादसामान्यलक्षणम्। सच स्तुतिः, निन्दा, परकृतिः, पुराकल्प इति भेदाच्चतुर्विध इत्यर्थः।

चतुर्विधस्तावदर्थवादः-स्तुतिलक्षणः, निन्दालक्षणः, परकृतिलक्षणः, पुराकल्पलक्षणश्च। तत्र येन पुरुषप्रवृत्त्यर्थमिष्टफलवादेन विहितं स्तूयते स **"स्तुतिलक्षणोऽर्थवादः"** प्रथमः, यथा **"प्रिये स्वाध्यायप्रवचने भवतः, युक्तमना भवत्यपराधीनोऽहरहरर्थान् साधयते सुखं स्वपिति परमचिकित्सक आत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञावृद्धिर्यशो लोकपक्तिः, प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति ब्राह्मण्यं प्रतिरूपचर्य्यां यशो लोकपक्तिं, पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्त्यर्चया च दानेन चाजेयतया चावध्यतया च।१। ये ह वै के च श्रमा इमे द्यावापृथिवी अन्तरेण, स्वाध्यायो ह वै तेषां परमा काष्ठा, य एवं विद्वान् स्वाध्यायमधीते, तस्मात् स्वाध्यायोऽध्येतव्यः"** ( शत० ११।५।१।१-२ ) **"स यथाऽहिस्त्वचो निर्मुच्येत, एवं रात्रेः पाप्मनो निर्मुच्यते, यथा ह वा अहिस्त्वचो निर्मुच्येत, एवं सर्वस्मात् पाप्मनो निर्मुच्यते य एवं विद्वानग्निहोत्रं जुहोति"** ( शत० २।२।३।६ )

"एतद्ध वै देवा व्रतं चरन्ति यत् सत्यं, तस्मात् ते यशः, यशो ह भवति य एवं विद्वान् सत्यं वदति" (शत० १।१।१।५) शिरो वै यज्ञस्यातिथ्यम्" (शत० ३।४।२।१) इत्यादिः।

येन विहिते प्रवृत्त्यर्थं निषिद्धाच्च निवृत्त्यर्थमनिष्टफलवादेन विहितविपरीतं निषिद्धं च निन्द्यते स "निन्दालक्षणोऽर्थवादः" यथा "सत्यं देवा अनृतं मनुष्याः" (शत० १।१।१।४) सत्यसंहिता वै देवाः, अनृतसंहिता मनुष्याः" (ऐत० १।१।६) "समूलो वा एष परिशुष्यति योऽनृतमभिवदति" (प्रश्नो० ६।१) "पापकारी पापो भवति" (शत० १४।७।२।६) इत्यादिः। येन कस्यचित् पुरुषविशेषस्य धर्मतया परस्परविरुद्धं सिद्धवत् किञ्चिदुच्यते स "परकृतिलक्षणोऽर्थवादः" यथा "हुत्वा वपामेवाग्रेऽभिघारयत्यथ पृषदाज्यं, तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति प्राणः पृषदाज्यमिति वदन्तः" (शत० ३।८।३।२४) इत्यादिः।

येन चेतिहासमुखेन किञ्चिदुच्यते स "पुराकल्पलक्षणोऽर्थवादः" यथा "एतेन हेन्द्रोतो दैवापः शौनको जनमेजयं पारिक्षितं याजयाञ्चकार। तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यामपजघान। सर्वां ह वै पापकृत्यां सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते" (शत० १३।५।६।१) इत्यादिः। सोऽयमर्थवादो विधिवाक्येनैकवाक्यतामापन्नोऽर्थवान् भवति न स्वतन्त्रः, तद्यथाह भगवान् जैमिनिः "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" (मी० १।२।७) इति। विध्यपेक्षितार्थवादित्वाच्चैषः "अर्थवादः" इति भावः॥ ६४॥

अनुवादं लक्षयति—

"विधिविहितस्यानुवचनमनुवादः"॥ ६५॥

विधिविहितस्य=विधेर्विहितस्य चानुवचनं=पुनर्वचनं पुनरभिधानम् अभ्यास इति यावदनुवादः=अनुवादपदार्थ इत्यर्थः ।

**येन** खलु विधिर्वा विहितोऽर्थो वा किञ्चित्प्रयोजनवशादनूद्यते स वाक्यविशेषो **"अनुवादः"** । सच विध्यनुवचनं विहितानुवचनं चेति भेदाद् द्विविधः । **तत्र** येन वाक्यविशेषेण किञ्चित् प्रयोजनमुद्दिश्य विधिरनूच्यते तद् **"विध्यनुवचनं"** शब्दानुवादः । सच पूर्वमुदाहृतः । **येन** च स्तोतुं वा निन्दितुं वा कञ्चिद्विधिविशेषमभिधातुं वा विहितानन्तर्य्यं विधातुं वा विहितोऽर्थोऽनूच्यते, **किमुक्तं ?** येन विहितमर्थमधिकृत्य स्तुतिर्वा निन्दा वा विधिशेषो वा विहितक्रमो वा बोध्यते, तद् **"विहितानुवचनम्"** अर्थानुवादः, यथा **"यावन्तं ह वा इमां पृथिवीं वित्तेन पूर्णां ददद् लोकं जयति त्रिस्तावन्तं जयति भूयांसं चाक्षय्यं, य एवं विद्वानहरहः स्वाध्यायमधीते"** ( शत० ११।५।८।३ ) **"एष ह वै स एकातिथिः, स एष जुह्वत्सु वसति, एतां वाव स देवतामपरुणद्धि योऽलमग्निहोत्राय सन् नाग्निहोत्रं जुहोति, तमेषा देवताऽपरुद्धाऽपरुणद्ध्यस्माच्च लोकादमुष्माच्चोभाभ्यां योऽलमग्निहोत्राय सन् नाग्निहोत्रं जुहोति, तस्माद् योऽलमग्निहोत्राय स्यात् जुहुयात्"** ( ऐत० ५।५।५ ) **"आज्येन जुहोति, तेजो वा आज्यं, तेजसैवास्मिन् तत्तेजो दधाति यदाज्येन जुहोति, एतद् वै देवानां प्रियं धाम यदाज्यं, प्रियेणैवैनान् धाम्ना समर्धयति"** ( शत० १३।१।१०।२ ) **त एनं समृद्धाः समर्धयन्ति सर्वैः कामैः"** ( शत० १३।६।२।११ ) **"सोमेनेष्ट्वा सौत्रामण्या यजेत"** ( शत० १२।८।१।२ ) इत्यादिरिति भावः ॥ ६५ ॥

अत्र शङ्कते—

**"नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः"** ॥ ६६ ॥

अनुवादपुनरुक्तयोः=अनुवादस्य पुनरुक्तस्य च विशेषो मिथोभेदो न=न भवति, **कुतः?** शब्दाभ्यासोपपत्तेः=अभिहितस्य शब्दस्य यः पुनरभिधानलक्षणोऽभ्यासस्तस्योभयत्रसिद्धेरित्यर्थः ।

**यथा** ह्यनुवादेऽभिहितः शब्दोऽभ्यस्यते **तथा** पुनरुक्तेऽप्यभ्यस्यते । **तथा च** समाना द्वयोः शब्दाभ्यासोपपत्तिः । **अतो**ऽवगम्यते नास्त्यनुवादपुनरुक्तयोः कश्चिद् विशेष इति भावः ॥ ६६ ॥

**समाधत्ते—**

**"शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः"** ॥ ६७ ॥

अविशेषः=अनुवादपुनरुक्तयोर्विशेषाभावो न=न भवति, **कुतः?** शीघ्रतरगमनोपदेशवदभ्यासात्=लोकसिद्धस्य शीघ्रतरगमनोपदेशस्येवानुवादस्यापि सार्थकाभ्यासत्वादित्यर्थः ।

यद्यप्यनुवादपुनरुक्तयोः शब्दाभ्यासो न विशिष्यते, तस्योभयत्रापि समानत्वात् । **तथापि** तत्रार्थकृतो विशेषो विद्यते । सार्थकः शब्दाभ्यासो ह्यनुवादः, निरर्थकश्च पुनरुक्तम् । **किमुक्तं?** यथा हि लोके **"गम्यताम्"** इत्यभिधाय शीघ्रतरगमनलाभाय **"गम्यतां गम्यताम्"** इत्यभिहितः शब्दः पुनरभ्यस्यते **तथा**ऽनुवादेऽप्यर्थविशेषलाभायाभिहितः शब्दः पुनरभ्यस्यते । नचैवं पुनरुक्ते । तत्र तदभ्यासस्य निरर्थकत्वात् । **तथा च** शब्दाभ्याससाम्येऽपि सार्थकत्वनिरर्थकत्वाभ्यां विशेषस्य सद्भावादस्त्यनुवादपुनरुक्तयोर्विशेष इति सिद्धमिति भावः ॥ ६७ ॥

नन्वनृतत्वादिदोषाभावाद् भवतु **"ब्राह्मणस्य"** प्रामाण्यं **तथापि** तत् कीदृशं विवक्षितमिति वक्तव्यं ? तत्राह—

**"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"**॥६८॥

भिन्नक्रमश्चः । तत्प्रामाण्यं च=तदा शब्दविशेषं ब्राह्मणचतुष्टयं परामृशति, ब्राह्मणप्रामाण्यं च मन्त्रायुर्वेदप्रामाण्यवत्=मन्त्रो भगवान् वेदः, **"मन्त्रो गुरुः"** ( ऋ० २।२।१६।४ ) **"सत्यो मन्त्रः"** ( ऋ०

२।२।२२।२ ) इत्यादिश्रुतेः, तदनुकूलत्वायुर्वेदस्य यादृशं प्रमाण्यं तादृशं वेदितव्यं, कुतः? आप्तप्रामाण्यात्=ब्रह्मवादिनः साम्प्रदायिका आप्ताः, तेषां प्रमाणभावः प्रामाण्यं, तस्मात् साम्प्रदायिकाभ्युपगमादित्यर्थः। आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थवेदश्चेति चत्वारः खलु ऋग्वेदादीनां यथाक्रममुपवेदाः। तत्र चरकसुश्रुतादिभिर्ऋषिभिर्ऋग्वेदाधारतः प्रणीताः ये तावच्चरकसुश्रुतप्रभृतयो ग्रन्थाः ते "आयुर्वेदः" इति व्यपदिश्यन्ते। सोऽयमायुर्वेदः प्रवृत्तिसामर्थ्यासामर्थ्यानुमितवेदमूलत्वामूलत्वाभ्यां कस्मिंश्चिदंशे प्रमाणं कस्मिंश्चिदंशे चाप्रमाणमिति सर्वसम्प्रतिपन्नं, नास्ति कस्यापि विप्रतिपत्तिः। अत एव स इह सिद्धवदुपादीयते। तस्य चैतस्यायुर्वेदस्य यथा वेदानुकूलत्वात् प्रामाण्यं प्रतिकूलत्वाच्चाप्रामाण्यं परतः प्रामाण्यमिति यावत् तथा ब्राह्मणचतुष्टयस्यापि प्रामाण्यं वेदितव्यम्। साम्प्रदायिकाभ्युपगमात्। एष हि तेषामभ्युपगमः—यद्यपि ब्राह्मणानां प्रणेतारः किलैतरेयप्रभृतय ऋषयः परमवैदिका अभूवन् तथापि मनुष्याः। मनुष्येषु च भ्रमप्रमादादयो विविधे दोषाः स्वभावादेव सम्भवन्ति। प्रकृतिवश्यत्वात्। अतस्तत्प्रणीता ब्राह्मणग्रन्था न वेदवत् प्रमाणं भवितुमर्हन्ति किन्तु वेदानुकूलत्वात् प्रमाणं प्रतिकूलत्वाच्चाप्रमाणं यथाऽऽयुर्वेदः। तद्यथाऽऽह सम्प्रदायविद् भगवान् जैमिनिः "विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्" (मी० १।३।३) इति। यथा चेदमित्थमेव नान्यथा तथा वयं "मीमांसासूत्रवैदिकवृत्तौ" व्युदपत्स्महि। तस्मात् सिद्धं ब्राह्मणानां तत्पश्चाद्भाविनां च सर्वेषामृषिमुनिग्रन्थानां वेदानुकूलत्वात्प्रामाण्यं, प्रतिकूलत्वाच्चाप्रामाण्यमिति भावः॥ ६८॥

संशयं च प्रमाणानि सम्परीक्ष्य यथाक्रमम्।
ब्राह्मणानां प्रमाभावो व्याख्याप्यत्र सविस्तरम्॥ १॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्याद्यमाह्निकम्।

---



# द्वितीयोऽध्यायः

## द्वितीयमाह्निकम्

**प्रमाणानि** परीक्षितानि, **सम्प्रति** तदियत्ता परीक्षणीया, **तदर्थं** द्वितीयमाह्निकं आरभमाणः पूर्वं तावत् पूर्वपक्षमाह—

**"न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्"** ॥ १ ॥

प्रमाणानामिति प्रकरणाल्लभ्यते। चतुष्ट्वं=प्रमाणानां चतुर्भावं चतुष्प्रकारत्वं चतुर्धात्वं न=न युज्यते, कुतः? ऐतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्=ऐतिह्यं चार्थापत्तिश्च सम्भवश्चाभावश्च ते तथा, तेषां प्रामाण्यात् तेषामपि प्रमाणत्वाभ्युपगमादित्यर्थः।

यदुक्तं **"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"** (न्या० १।१।३) इति। तन्न युज्यते। तद्व्यतिरिक्तानामैतिह्यार्थापत्तिसम्भवाभावानामपि प्रमाणत्वाङ्गीकारात्। **किमुक्तं?** प्रमाणत्वं प्रत्यक्षादिचतुष्टयमात्रवृत्ति प्रत्यक्षादिचतुष्टयान्यतमत्वव्याप्यमिति यावत् न सम्भवति, तद्व्यतिरिक्तेष्वैतिह्यादिष्वपि वर्तमानत्वादिति भावः॥

**तत्र** प्रवादपारम्पर्य्यम् ऐतिहासिकं ज्ञानमिति यावत् **"ऐतिह्यम्"** अभिधीयमानादर्थादन्यस्यार्थस्यापत्तिः प्राप्तिर्ज्ञानम् उपपाद्यान्यथानुपपत्तिज्ञानादुपपादकज्ञानमिति यावद् **"अर्थापत्तिः"** अविनाभाववर्तिनोऽर्थस्य सत्ताज्ञानादन्यस्य सत्ताज्ञानं **"सम्भवः"** विरोधिज्ञानाद् विरोधिनो ज्ञानम्, **अथवा** यस्या ग्रहणात् प्रतियोगी न गृह्यते सा गृह्यमाणा योग्यस्य प्रतियोगिनोऽनुपलब्धिः **"अभावः"** इति विवेकः॥१॥

सिद्धान्तयति—

**"शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः" ॥ २ ॥**

भिन्नक्रमश्चः। अप्रतिषेधः=न चतुष्ट्वमिति प्रतिषेधो न सम्भवति, **कुतः?** शब्दे=शब्दप्रमाणे ऐतिह्यानर्थान्तरभावात्=ऐतिह्यप्रमाणस्यार्थान्तरभावाभावाभ्युपगमात् अन्तर्भावाभ्युपगमादिति यावत्, अनुमाने च=अनुमानप्रमाणे चार्थापत्तिसम्भवाभावानर्थान्तरभावात्=अर्थापत्तिसम्भवाभावप्रमाणानामन्तर्भावाभ्युपगमादित्यर्थः।

**न** वयमैतिह्यादीनि प्रमाणानि न सन्तीति ब्रूमः **अपि च?** तानि प्रमाणान्तराणि न भवन्तीति वच्मः। ऐतिह्यं हि शब्देऽर्थापत्तिसम्भवाभावाश्चानुमानेऽन्तर्भवन्ति। यस्य च यत्रान्तर्भावः सम्भवति, तस्य ततोऽर्थान्तरभावेनाभ्युपगमो व्यर्थः। **किमुक्तं?** तदा हि प्रमाणत्वं प्रत्यक्षादिप्रमाणचतुष्टयमात्रवृत्ति न भवेत् **चेत्** ततः कानिचित् प्रमाणान्तराणि सिध्येयुः। नचैतिह्यादीनि प्रमाणानि सन्त्यपि प्रमाणान्तराणि सिध्यन्ति। तेषां शब्दानुमानयोर्यथायथमन्तर्भावसम्भवात्। अतोऽनुपपन्नः प्रतिषेधः इति भावः॥

**यथा** चैतिह्यादीनां चतुर्णां शब्दानुमानयोरन्तर्भावः, तथा **"वैशेषिकसूत्रवैदिकवृत्तौ"** नवमाध्याये द्वितीयाह्निके पञ्चमसूत्रे सोदाहरणो विस्पष्ट इति बोध्यम्॥ २ ॥

**नन्वर्थापत्तेरनुमानप्रमाणान्तर्भावो** नोपपद्यतेऽप्रमाणत्वादिति तटस्थः आशङ्कते—

**"अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्"** ॥ ३ ॥

अर्थापत्तिः=प्रमाणत्वेनाभिमताऽर्थापत्तिरप्रमाणं=प्रमाणं न भवति, **कुतः?** अनैकान्तिकत्वात्=सव्यभिचारोऽनैकान्तिकः, तस्य भावस्तत्त्वं तस्मात् व्यभिचारित्वादित्यर्थः।

अभिधीयमानेऽर्थे योऽन्योऽर्थोऽर्थादापद्यते **यथा** "असत्सु मेघेषु वृष्टिर्न

भवति" इत्युक्ते "सत्सु भवति" इति, यथा वा "स्थूलो देवदत्तो दिवा न भुङ्क्ते" इत्युक्ते "नक्तं भुङ्क्ते" इति, साऽर्थापत्तिरित्युक्तम्। नच तत्प्रमाणं भवितुमर्हति। क्वचित् सत्स्वपि मेघेषु वृष्टेः नक्तमभोजिन्यपि वातरुग्णे च स्थौल्यस्य दर्शनात्। चेदियं प्रमाणं भवेत् तदा न क्वचिदपि स्वकमर्थं व्यभिचरेत्। नह्यर्थं व्यभिचरदपि क्वचित् किञ्चित् प्रमाणमुपपद्यते। व्यभिचरति चेयम्। तस्मादप्रमाणमिति भावः॥ ३॥

निराकुरुते—

"अनर्थापत्तावर्थापत्त्यभिमानात्" ॥ ४॥

अर्थापत्तेरनैकान्तिकत्वमिति विपरिणम्यानुवर्तते। अनर्थापत्तौ=अर्थापत्त्याभासेऽर्थापत्त्यभिमानात्=अर्थापत्त्यभिमानकरणादर्थापत्तेरनैकान्तित्वं प्रतिभातीत्यर्थः।

यां हि भवानर्थापत्तिं मन्यते न साऽर्थापत्तिः अपि च? अर्थापत्त्याभासः। नह्यस्माभिः सत्सु मेघेषु वृष्टिर्भवत्येव, दिवाऽभुञ्जानः स्थूलो नक्तं भुङ्क्त एवेत्यर्थापत्तिराश्रीयते येनेयमनैकान्तिकी भवन्ती प्रमाणं न भवेत् अपि च? सत्सु मेघेषु वृष्टिः, असति रोगे दिवाऽभुञ्जानः स्थूलो नक्तं भोजीति। नचैवं "कारणभावात्कार्य्यभावः" (वै०४।१।३) इति नियमं विहायान्यो नियमः कश्चिदापद्यते। नच क्वचित् प्रतिबन्धकवशात् कार्य्यादर्शनेऽपि नियमोऽयं व्यभिचरितुमर्हति। प्रतिबन्धकाभावस्यापि कारणे प्रवेशात्। भवाँश्चैतदपश्यन् व्यभिचारमाशङ्कते, तेन च तस्याः प्रमाणाभावः इति नायं शीलो ज्यायान्। किञ्च "अर्थापत्तिरप्रमाणमनैकान्तिकत्वाद्" इत्यत्रार्थापत्तिमात्रं पक्षीक्रियते अथवाऽनैकान्तिकी काचित्? आद्येऽसिद्धो हेतुः। अर्थापत्तिमात्रस्यानैकान्तिकत्वाननुभवात्। द्वितीये सिद्धसाधनम्। अनैकान्तिक्या अप्रमाणत्वस्यास्माभिरप्यभ्युपगमात्। याऽनैकान्तिकी साऽर्थापत्तिरप्रमाणमिति प्रतिजानानस्य चैकान्तिकी या सा प्रमाणमित्यर्थादापद्यते। नच तदपलापः सुकरः। प्रतिज्ञाव्याघातात्। अतो नाप्रमाणमर्थापत्तिरिति भावः॥ ४॥

विधान्तरेण निराकुरुते—

"प्रतिषेधाप्रामाण्यञ्चानैकान्तिकत्वात्" ॥ ५ ॥

अप्यर्थश्चः । प्रतिषेधाप्रामाण्यञ्च=अर्थापत्तिरप्रमाणमित्युक्तस्यार्थापत्ति-प्रामाण्यप्रतिषेधस्य प्रामाण्यमपि न विद्यते, कुतः? अनैकान्तिकत्वात्=व्यभिचारित्वादित्यर्थः ।

प्रतिषेधस्य प्रामाण्ये ह्यर्थापत्तेरप्रामाण्यं सेद्धुमर्हति नाप्रामाण्ये । नच प्रतिषेधस्य प्रामाण्यमुपपद्यते । तस्य स्वविषयतोऽन्यत्र वर्तमानत्वेनानैकान्तिकत्वात् । अनैकान्तिक्यामर्थापत्तौ वर्तमानं प्रामाण्यं हि तस्य स्वविषयः । ऐकान्तिक्यां तस्यां वर्तमानं चास्वविषयः । नचैष प्रतिषेधोऽनैकान्तिक्यामेवार्थापत्तौ वर्तमाने प्रामाण्ये प्रवर्तते नैकान्तिक्यां वर्तमाने तस्मिन् अपि च? प्रामाण्यमात्रे । अर्थापत्तिशब्देनार्थापत्तिमात्रस्य ग्रहीतुं शक्यत्वात् । तस्मिंश्चोभयस्मिन् वर्तमानो भवति निःशङ्कमनैकान्तिकः । स्वविषयतोऽन्यत्रास्वविषयेऽपि वर्तमानत्वात् । यश्चानैकान्तिकः, स न प्रमाणमिति प्रतिषेधस्याप्रामाण्येऽर्थापत्तिरप्रमाणं न सिध्यति । तस्मादेषा प्रमाणमिति भावः ॥ ५ ॥

नन्वस्माभिरर्थापत्तिशब्देन नार्थापत्तिमात्रं विवक्ष्यते अपि च? अनैकान्तिक्यर्थापत्तिः, अतो न प्रतिषेधाप्रामाण्यं? तत्राह—

"तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम्" ॥ ६ ॥

चार्थो वाकारः पक्षान्तरमाह । तत्प्रामाण्ये वा=तदा प्रतिषेधं परामृशति, अनैक्यान्तिक्यामर्थापत्तौ वर्तमानं यत्प्रामाण्यं तन्मात्रविषयत्वेन तस्य प्रतिषेधस्य प्रामाण्ये चार्थापत्त्यप्रामाण्यम्=अर्थापत्तेः प्रामाण्याभावो न=न सिध्यतीत्यर्थः ।

अनैकान्तिक्यर्थापत्तिरप्रमाणमिति ब्रुवता खल्वैकान्तिकी सा प्रमाणमित्यभ्युपगन्तव्यम् । अन्यथाऽनैकान्तिकीति विशेषणवैयर्थ्यप्रसङ्गात् । एतच्चेष्टमस्माकम् । अस्माभिरप्यैकान्तिक्या एवार्थापत्तेः प्रामाण्यमभ्युपगम्यते नानैकान्तिक्याः । अतोऽनैकान्तिक्यां तस्यां भवतु प्रामाण्यप्रतिषेधः

प्रमाणं, नचैतावताऽर्थापत्तेः प्रामाण्यस्य प्रतिषेध उपपद्यते। तस्य तदविषयत्वात्। यत्प्रामाण्यं च न जातु प्रतिषेधगोचरः, सा न कर्हिचिदप्रमाणं सेद्धुमर्हति। तस्मादेषा प्रमाणमिति भावः॥ ६॥

इदानीमभावस्यानुमानान्तर्भावमसहमानस्तदप्रामाण्यं तावदाशङ्कते—

**"नाभावप्रामाण्यं प्रमेयासिद्धेः"॥ ७॥**

अभावप्रामाण्यम्=अभावस्य प्रामाण्यं न=न सिध्यति, कुतः? प्रमेयासिद्धेः=तत्प्रमेयासिद्धेरित्यर्थः।

यत् खलु प्रमाणं तस्यास्ति किञ्चित् प्रमेयम्। यस्य च प्रमेयमेव नास्ति न तत् क्वचित् प्रमाणमुपपद्यते। प्रमेयाभावे हि कस्येदं प्रमाणं स्यात्। अभावश्च तथा। किमुक्तं? यदविषयं तदप्रमाणं दृष्टं यथाऽश्वप्रतिपादने गोशब्दः, तथा चाभावः। तस्मादप्रमाणमिति भावः॥ ७॥

समाधत्ते—

**"लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः"॥ ८॥**

अभावप्रामाण्यमित्यनुवर्तते। लक्षितेषु=व्यावर्तकत्वाल्लक्षणं ब्रह्म=वेदः, तेन ये लक्ष्यन्ते व्यावर्त्यन्ते तेषु सम्माननीयेषु ब्रह्महस्तेषु गुरुकुलब्रह्मचारिषु मिलितानामलक्षितानाम्=अब्रह्महस्तानामलक्षणलक्षितत्वात्=उक्तलक्षणाभावेन प्रतिपद्यमानत्वात् तत्प्रमेयसिद्धेः=तत्प्रमेयत्वसिद्धेरभावप्रामाण्यं सिध्यतीत्यर्थः।

यत्र खलु भूयांसो गुरुकुलब्रह्मचारिणो लक्षिताश्चालक्षिताश्च संमिलिताः सन्तो देशात्मोन्नतिसाधनविषयानुपदेशानाकर्णयितुकामाः परमोत्साहेन पितृकल्पस्याधिष्ठातृवर्य्यस्याग्रे दूरतो बद्धाञ्जलयस्तूष्णीमवतिष्ठन्ते तत्र "अलक्षितान् ब्रह्मचारिणो मत्सविधे विशेषतो बोधनार्थं द्रुतमानय" इत्यधिष्ठातृवर्य्येण प्रयुक्तः कश्चित् संरक्षको मेधावी येषु ब्रह्मचारिषु लक्षणं न विद्यते तान् लक्षणाभावेन प्रतिपद्य शीघ्रमानयतीति दृष्टम्। चेदभावः प्रमाणं न भवेत् तदा लक्षणाभावेनालक्षितान् ब्रह्मचारिणः संरक्षको न प्रतिपद्येत। नहि प्रमाणतोऽन्येन किञ्चित् प्रतिपत्तुं

शक्यते। प्रमाणस्यैव प्रतिपत्तिहेतुत्वाङ्गीकारात्। प्रतिपद्यते च। ततो भवत्यनुमानम् "अस्ति तावदभावस्यालक्षिताः ब्रह्मचारिणः प्रमेयं, प्रतिपत्तिविषयत्वात्, लक्षणाभावश्च प्रमाणं यतोऽयं तत्प्रतिपत्तिहेतुः" इति। **किमुक्तं?** विरोधिज्ञानाद् विरोधिनो ज्ञानं ह्यभावः। तत्रालक्षणं लक्षणस्य, लक्षणं चालक्षणस्य विरोधीति यत्र लक्षणं न विद्यते तत्रालक्षणेन, यत्र चालक्षणं, तत्र लक्षणेनावश्यं भवितव्य, नोभयेनोभयत्र। विरोधाभावप्रसङ्गात्। लक्षितेषु चालक्षितेषु च ब्रह्मचारिषु येषु लक्षणं न विद्यते तेऽलक्षिता इति सुखेन प्रमातुं शक्यन्ते। लक्षणविरोधिनोऽलक्षणस्य तत्र विद्यमानत्वात्। नचेयं प्रमा प्रमाणादृते सम्भवति। प्रमाणं च तत्र न लक्षणाभावतोऽन्यत् किञ्चिदुपलभ्यते। नच तस्य विषयाभावादप्रामाण्यमिति युक्तं भाषणम्। अलक्षितानां ब्रह्मचारिणामेव तद्विषयत्वसम्भवात्। **अतो** नाप्रमाणमभाव इति भावः॥ ८॥

आशङ्क्य निराचष्टे—

**"असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः"॥ ९॥**

अर्थे=प्रतियोगिभूतार्थे लक्षणेऽसति=अलक्षितेषु ब्रह्मचारिष्वविद्यमाने सत्यभावः=तदभावो न=न सम्भवतीतिचेन्नान्यलक्षणोपपत्तेः=अन्यत्र लक्षितेषु ब्रह्मचारिषु विद्यमानस्य लक्षणस्यात्राभावोपपत्तेरित्यर्थः।

**यत्र** हि यद् विद्यते तत्र तदभावः सम्भवति नान्यत्र। अप्रसक्तप्रतिषेधापत्तेः। नचालक्षितेषु ब्रह्मचारिषु लक्षणं विद्यते। अविद्यमाने च तस्मिन् न तदभावस्तत्र सम्भवति। सम्भवाभावे च नतरां तस्य तत्प्रतिपत्तिहेतुत्वमिति। नैतद् युक्तमभिधीयते। अन्यत्र विद्यमानस्याप्यन्यत्राभावसम्भवात्। नहि यत्र यद् विद्यते तत्रैव तदभावः सम्भवतीत्यस्ति कश्चिन्नियमः **अपि च?** यद् विद्यते तस्याभावः। अन्यथा वायौ रूपाभावो न गृह्येत। विद्यते च लक्षितेषु ब्रह्मचारिषु लक्षणम्। अतस्तदभावोऽलक्षितेषु सम्भवति। नचैवमप्रसक्तप्रतिषेधः। प्रसक्तस्यैव प्रतिषेधात्। **तथा च** न तस्य तत्प्रतिपत्तिहेतुत्वासम्भव इति भावः॥ ९॥

उक्तमर्थं विस्पष्टयितुं पुनश्छलेनाशङ्कते—

"तत्सिद्धेरलक्षितेष्वहेतुः" ॥ १० ॥

अभाव इत्यनुवर्तते। तत्सिद्धेः=तेषु लक्षितेषु सिद्धिर्विद्यमानता यस्य लक्षणस्य तस्याभावः=अभ्युपगतोऽभावोऽलक्षितेषु=अलक्षितेषु ब्रह्मचारिष्वहेतुः=प्रतिपत्तिहेतुर्न सम्भवतीत्यर्थः।

**सिद्धो** हि लक्षणाभावोऽलक्षितेषु ब्रह्मचारिषु प्रतिपत्तिहेतुरुपपद्यते नासिद्धः। नचैष लक्षणे विद्यमाने कथञ्चित्सेद्धुमर्हति। विद्यते च न विद्यते चेति व्याघातप्रसङ्गात्। विद्यते च लक्षितेषु ब्रह्मचारिषु लक्षणम्। अतः कथं तदभावः सिध्येत्। असिध्यँश्च कथमलक्षितेषु तेषु प्रतिपत्तिहेतुः सम्भवेत्। **किमुक्तं?** यद् विद्यते न तदभावोऽभ्युपगन्तुं शक्यते। विरोधात्। यच्च न विद्यते सुतरां न तदभावः। अप्रसक्तप्रतिषेधात्। विद्यते च लक्षितेषु तेषु लक्षणम्। **अतो** न तदभावोऽलक्षितानां प्रतिपत्तिहेतुः सम्भवतीति भावः॥ १० ॥

**स**माधत्ते—

"न लक्षणावस्थितापेक्षसिद्धेः" ॥ ११ ॥

अलक्षितेष्वित्यनुवर्तते। न=यदुक्तं तन्न, **कुतः?** लक्षणावस्थितापेक्षसिद्धेः=लक्षणस्य यदवस्थितं लक्षितेष्ववस्थानं तदपेक्षस्य तदभावस्य सिद्धेरलक्षितेषु सिद्धेरित्यर्थः।

**यदि** वयं यत्र लक्षणं विद्यते तत्र तदभावं ब्रूयाम **तदा** तदभावासिद्धिः स्यात्। नच वयं यत्र लक्षणं तत्र तदभावं ब्रूमः, किन्तु लक्षितेषु लक्षणम्, अलक्षितेषु तदभावः। नचेदं व्याहन्यते। अवस्थानतदभावयोर्भिन्नदेशत्वात्। **तथा च** सिद्धो लक्षणाभावः। सिद्धस्य च प्रतिपत्तिहेतुत्वमपि सिद्धमेव। **तस्मा**न्नास्त्यभावप्रामाण्ये कश्चिद्दोष इति भावः॥ ११॥

**ननु** तथापि विद्यमानस्यैवाभावोऽभ्युपगतः, सच व्याहन्यते? तत्राह—

"प्रागुत्पत्तेरभावोपपत्तेश्च" ॥ १२ ॥

नालक्षितेष्वित्येतद्द्वयमनुवर्तते। तुष्यतुदुर्जनन्यायेन समाधानान्तर-

मेतदिति सूचनाय चकारः। प्रागुत्पत्तेः=लक्षणोत्पत्तितः पुरस्तादभावो-पपत्तेः=लक्षणाभावसिद्धेर्न=अलक्षितेषु तदसिद्धिर्नेत्यर्थः।

व्याहतिप्रसङ्गाच्चेद् विद्यमानस्याभावं न मन्यसे तदा लक्षणोत्पत्तितः प्राग् विद्यमानं लक्षणाभावमेवालक्षितानां ब्रह्मचारिणां प्रतिपत्ति-साधनं मन्यस्व। स हि तत्र सम्भवति। नहि कश्चिद् भूत्वा न भवतीति-वद्भूत्वा भवतीति न मन्यते। गुरुकुले प्रविष्टानां चार्य्यतनयानां ब्रह्म-संस्कारतः पश्चाद् ब्रह्महस्तत्वं नूनं सम्भाव्यते, ततः पूर्वं च तेषु तदभावः सुतराम्। अतोऽधिष्ठात्रा प्रयुक्तः संरक्षको यदा लक्षितेष्विवालक्षितेषु न लक्षणं साक्षात्कुरुते तदा तत्र तदभावं प्रतिपद्यते। प्रतिपन्नेन तेन चालक्षितान् ब्रह्मचारिणः प्रतिपद्यानयति। नचैषा प्रतिपत्तिरन्तरेण लक्षणाभावमुपपद्यते। न च. लक्षणाभावस्य प्रतिपत्तिहेतुत्वं चान्तरेण प्रामाण्यम्। अतःसिद्धमस्ति तावत् प्रमाणमभावः। सचानुमानविधया प्रति-पादकत्वादनुमानमेव न जातु प्रमाणान्तरमिति चत्वार्य्येव प्रमाणानि ना-धिकानि नापि न्यूनानीति भावः॥ १२॥

"आप्तोपदेशः शब्दः" (न्या० १।१।७) इत्युक्तम्। तत्र शब्दः शब्दार्थयोः सम्बन्धश्च परीक्षितः। सम्प्रति तस्यानित्यत्वं परीचि-क्षिषुः पूर्वन्तावत् सिद्धान्तेनोपक्रमते—

**"आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च"॥ १३॥**

अनित्यः शब्द इति प्रतिज्ञाशेषः। एकत्रहेतुत्रयसमुच्चय इति चकारार्थः। आदिमत्त्वात्=आदि कारणं विद्यते यस्य स आदिमान् तस्य भावस्तत्त्वं तस्मात् कारणवत्त्वात्, ऐन्द्रियकत्वात्=इन्द्रियेण ग्राह्यः प्रकाश्यः ऐन्द्रियकः, तस्य भावस्तत्त्वं तस्मात् इन्द्रियग्राह्यत्वात्, कृतक-वदुपचाराच्च=कृतकं कार्य्यं तस्येवोपचारः व्यवहारस्तद्विषयत्वाच्चानित्यः शब्द इत्यर्थः।

यत् खलु कारणतो निष्पद्यते तत् कारणवदिति व्यपदिश्यते। यच्च कारणवत् तदनित्यं, यथा घटादि। शब्दोऽपि कारणवान्। स हि संयो-

गादितो निष्पद्यते, तद्यथोक्तं दर्शनान्तरे **"संयोगाद् विभागाच्छब्दाच्च शब्दनिष्पत्तिः"** ( वै० २।२।३१ ) इति । तस्मादनित्यः । यदिन्द्रियेण गृह्यते तदनित्यं दृष्टं यथा संयोगादि, शब्दोऽपि श्रोत्रेन्द्रियेण गृह्यते, तद्यथोक्तं दर्शनान्तरे **"श्रोत्रग्रहणो योऽर्थः स शब्दः"** ( वै० २।२।२१ ) इति । तस्मादनित्यः । यत् तावत्कृतकं भवति तदेव कृतकवदुपचर्य्यते. नाकृतकम् । नहि सामान्याभावे भवति क्वचिदुपचारः । न च कृतकाकृतकयोरस्ति किञ्चित् सामान्यम् । कृतकस्य तु कृतकेन सामान्यं सिद्धमेव न जात्वसिद्धम् । अतो युक्तस्तस्य तद्वदुपचारः । कृतको घटादिरुत्पत्तिविनाशगोचरो दृष्टः, शब्दोऽपि तद्वदुपचर्य्यते "जातः शब्दो विनष्टः शब्दः" इति । कृतकं सुखं दुःखं तीव्रं मन्दं दृष्टं, शब्दोऽपि तद्वदुपचर्य्यते "तीव्रः शब्दो मन्दः शब्दः" इति । तस्माद् भवत्यनुमानं **यथा**दिमत्त्वादैन्द्रियकत्वादनित्यः शब्दः **तथा** कृतकवदुपचारादप्यनित्यः इति भावः ॥ १३ ॥

उक्तहेतुत्रयव्यभिचारमाशङ्कते—

**"न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च" ॥ १४ ॥**

न=आदिमत्त्वादितः शब्दस्यानित्यत्वं न सम्भवति, **कुतः**? घटाभावसामान्यनित्यत्वात्=घटध्वंसो घटाभावः, गोत्वादिजातिः सामान्यं, घटाभावश्च सामान्यं च ते तथा, तयोर्नित्यत्वं, तस्मात्—आदिमत्त्वेऽपि घटाभावस्यैन्द्रियकत्वेऽपि सामान्यस्य नित्यत्वात् , नित्येष्वपि=आकाशादिनित्यपदार्थेष्वप्यनित्यवदुपचाराच्च=कृतकवदुपचारदर्शनाच्चेत्यर्थः ।

**यत्** खलु शब्दोऽनित्य आदिमत्त्वादित्युक्तं, तदयुक्तम् । व्यभिचारात् । अस्ति घटध्वंसे व्यभिचारः, तस्यादिमत्त्वेऽपि नित्यत्वात् । आदिमत्त्वं च कारणविभागजन्यत्वम् । न च सति कारणविभागे पुनर्घटो भवति । नित्यत्वं च ध्वंसाप्रतियोगित्वम् । नहि घटध्वंसः पुनर्ध्वस्यते यथा घटः । व्यभिचाराच्चादिमत्त्वादित्यहेतुः । ऐन्द्रियकत्वादनित्यः शब्द इत्यप्ययुक्तम् । गोत्वा-

दिसामान्ये व्यभिचारात्। अस्ति गोत्वादिसामान्यमैन्द्रियकम्। तदाश्रयगवादिव्यक्तीनामैन्द्रियकत्वात्। नित्यं चाप्रलयं स्थायित्वात्। न च कृतकवदुपचारादप्यनित्यः शब्दः सेद्धुमर्हति। नित्येष्वपि कृतकवदुपचारदर्शनात्। दृश्यते ह्याकाशादिनित्येष्वपि कृतकवदुपचारः, आकाशैकदेशे भूमिर्विद्यते ब्रह्मैकदेशे च सकार्य्या प्रकृतिः, यत्रेदमाम्नातं **"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"** (ऋ० ८।४।१७।३) इति। न च व्यापकस्याकाशस्य जगत्पितुः पुरुषस्य च परमार्थतः प्रदेशाः सम्भवन्ति। निरवयवत्वात्। कृतकस्य तु सम्भवन्ति। सावयवत्वात्। सोऽयं कृतकवदुपचारस्य नित्येषु व्यभिचारः। ततश्चैषोऽहेतुरिति भावः॥ १४॥

तत्राद्ये व्यभिचारमुद्धरति—

**"तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः"** ॥ १५॥

अव्यभिचारः=आदिमत्त्वस्य हेतोर्घटाभावे व्यभिचारो नास्ति, **कुतः?** तत्त्वभाक्तयोः=मुख्यनित्यत्वगौणनित्यत्वयोर्नानात्वविभागात्=भिन्नत्वेन विभागाभ्युपगमादित्यर्थः।

द्विविधं हि नित्यत्वं मुख्यनित्यत्वं गौणनित्यत्वं च। तत्रोत्पत्तिविनाशशून्यत्वं **"मुख्यनित्यत्वम्"** उत्पत्तिशून्यत्वं वा विनाशशून्यत्वं वा **"गौणनित्यत्वम्"**। न च प्रकृत्यादिवद् ध्वंसे मुख्यनित्यत्वमस्ति। तस्य विनाशशून्यत्वेऽप्युत्पत्तिशून्यत्वाभावात्। न च गौणनित्यो भवन् ध्वंसो व्यभिचारभूमिरुपपद्यते। व्यभिचारे साध्याश्रयस्येव साध्याभावाश्रयस्यापि मुख्यत्वापेक्षणात्। अनित्यप्रायश्च गौणनित्यो ध्वंसः। अतो न तत्रादिमत्त्वस्य हेतोर्व्यभिचार इति भावः॥ १५॥

द्वितीये हेतौ व्यभिचारमुद्धरति—

**"सन्तानानुमानविशेषणात्"** ॥ १६॥

अव्यभिचार इत्यनुवर्तते। सन्तानानुमानविशेषणात्=सामान्यविशेषः सन्तानः, बहुष्वेकाकारा बुद्धिः सन्तन्यतेऽनेनेति तद्व्युत्पत्तेः, अनुमानं हेतुः, अनुमीयतेऽनेनेति तद्व्युत्पत्तेः, विशिष्टीकरणं विशेषणं, विशि-

प्यतेऽनेनेति तद्व्युत्पत्तेः, सन्तानेन सामन्यविशेषेणानुमानस्य हेतोर्विशेषणाद् विशिष्टीकरणादव्यभिचारः—गोत्वादौ न व्यभिचार इत्यर्थः ।

**न** वयं केवलादैन्द्रियकत्वाद्धेतोरनित्यः शब्द इत्यभिदध्महे, **अपि च ?** सामान्यवत्त्वे सत्यैन्द्रियकत्वात् । अस्ति च सामान्यवान् सन्नैन्द्रियकः शब्दः । गोत्वादिसामान्यं चैन्द्रियकत्वेऽपि न सामान्यवत् । सामान्ये सामान्यानङ्गीकारात् । तद्यथोक्तं दर्शनान्तरे **"सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम्"** ( वै० १।८।५ ) इति । विशेषणाभावे च विशिष्टस्याप्यभावान्न गोत्वादिसामान्ये तद्व्यभिचार इति भावः ॥ १६ ॥

तृतीये हेतौ व्यभिचारमुद्धरति—

**"कारणद्रव्यस्य प्रदेशशब्देनाभिधानात्" ॥ १७ ॥**

अव्यभिचार इत्यनुवर्तते । प्रदेशशब्देन=देशपदेन कारणद्रव्यस्य=कारणवतो द्रव्यस्य सावयवद्रव्यस्येतियावदभिधानात्=अभिधानसम्भवादव्यभिचारः=कृतकवदुपचारस्य हेतोर्नित्येषु व्यभिचारो नेत्यर्थः ।

**तदा** हि कृतकवदुपचारस्य हेतोर्नित्येषु व्यभिचारो भवेत् **चेत्** तत्र प्रदेशशब्दप्रयोगो मुख्यतः सम्भवेत् । **नच** नित्येषु तत्प्रयोगो मुख्यतः सम्भवति । तस्य द्रव्यैकभागवाचित्वेन सावयवद्रव्यैकविषयत्वनिश्चयात् । नहि निरवयवद्रव्यस्याकाशस्य जगत्पितुः पुरुषस्य च द्रव्यान्तरसम्बन्धमन्तरा तत्त्वतो भागाः सम्भवन्ति । यत्र च यस्य सम्भव एव नास्ति तत्र कथं प्रदेशशब्दो मुख्यतः प्रयुज्येत । नच द्रव्यान्तरसम्बन्धं पुरस्कृत्य प्रवृत्ते प्रदेशशब्दप्रयोगे हेतोर्व्यभिचारस्तत्र शङ्कितुमपि शक्यते। तस्य मुख्यप्रयोगभूमौ वर्तमानत्वेनैव व्यभिचारावधारणात् । **किमुक्तं ?** यथा हि कृतकस्य द्रव्यस्य परमार्थभूताः प्रदेशा भवन्ति न तथाऽऽकाशस्य जगत्पितुः पुरुषस्य वा सम्भवन्ति, किन्त्वौपाधिकाः । ते चाकाशाद्यनात्मकत्वेनाप्रदेशाः सन्तो न प्रदेशाः सम्पद्यन्ते । अतस्तत्र कृतकवदुपचर्य्यमाणोऽपि प्रदेशशब्दो न हेतोर्व्यभिचारदोषाय कल्पते ।

**किं बहुना**—यादृशं हि कृतकं द्रव्यं न तादृशमाकाशादि नित्यं द्रव्यमस्ति। सावयवत्वात् प्रदेशवत् तावत्कृतकं द्रव्यम्। निरवयवत्वात् प्रदेशाभाववच्चैतत्। अतः साध्यस्येव हेतोरप्यभावान्न तत्र तद्व्यभिचार इति भावः॥ १७॥

नन्वप्रयोजकत्वादसाधका अमी हेतवो न साध्यसाधकाः? तत्राह—

**"प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च" ॥ १८ ॥**

अनित्यः शब्द इति प्रतिज्ञाशेषः। उच्चारणात्=विवक्षाजनितेन प्रयत्नेन प्रेरितस्य प्राणस्य कण्ठताल्वादिभिः स्थानविशेषैरभिघातः **"उच्चारणं"** तस्मात् प्राक्=पूर्वमनुपलब्धेः=उपलम्भाभावात्, आवरणाद्यनुपलब्धेश्च=उपलम्भप्रतिबन्धकानामावरणेन्द्रियदोषादीनामनुपलम्भाच्चावगम्यतेऽनित्यः शब्द इत्यर्थः।

**यदि** शब्दोऽयं नित्यो भवेत् **तदा**ऽवश्यमुच्चारणात् प्रागप्युपलभ्येत। नहि नित्यस्य सतो योग्यस्य कथञ्चिदनुपलम्भ उपपद्यते। न च तदानीमावरणादि प्रतिबन्धकं किञ्चिदुपलभ्यते, येन तत्कृतोऽनुपलम्भः कल्प्येत। **यदा** च प्रतिबन्धकाभावे सत्यप्युच्चारणात्प्राग् नोपलभ्यते **तदा** भवति प्रतिपत्तिर्न खलु नित्यः शब्दः, **अपि च?** अनित्य इति नाप्रयोजकाः हेतव इति भावः॥ १८॥

**अत्र** जात्या प्रत्यवतिष्ठते—

**"तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः" ॥ १९ ॥**

तदनुपलब्धेः=आवरणाद्यनुपलब्धेरनुपलम्भात्=उपलम्भाभावादावरणोपपत्तिः=आवरणादिकमुपपद्यत इत्यर्थः।

**योऽयं** तावत्प्रागुच्चारणादनुपलम्भः शब्दस्याभिहितः स नानित्यत्वप्रयुक्तः **अपिच?** आवरणादिप्रतिबन्धकप्रयुक्तः। आवरणादि प्रतिबन्धकं चानुपलब्धेरनुपलम्भादुपपद्यते। नहि यस्यानुपलब्धिर्नोपलभ्यते तन्नास्तीति वक्तुं पार्य्यते। अनुपलम्भानुपलम्भे वस्तुसत्त्वापातस्यावश्यम्भावात्। **किं बहुना**—यथा हि भवान् आवरणाद्यनुपलब्ध्याऽऽवरणादी-

नामभावो मन्यते तथैव मया तदनुपलब्धेरनुपलब्ध्या तद्भावोऽभ्युपगम्यते। भवति च तस्मिन् तत्प्रयुक्त एव शब्दस्य प्रागुच्चारणादनुपलम्भः कल्पयितुमुचितो नानित्यत्वप्रयुक्त इति भावः ॥ १९ ॥

युक्त्यन्तरमाह—

"अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात्" ॥ २० ॥

तदनुपलब्धेरित्यनुवर्तते। अनुपलम्भादपि=आवरणाद्यनुपलब्धेरुपलम्भाभावादप्यनुपलब्धिसद्भाववत्=यथाऽऽवरणाद्यनुपलब्धेः सत्त्वमुपपद्यते तथाऽनुपलम्भात्=आवरणाद्युपलम्भाभावादप्यावरणानुपपत्तिः=आवरणादिसद्भावानुपपत्तिर्न=न सम्भवतीत्यर्थः।

**यथा** ह्यावरणाद्यनुपलब्धेरुपलम्भाभावेऽपि सत्त्वमुपपद्यते **तथाऽऽ**वरणादेरुपलम्भाभावेऽपि सत्त्वमुपपत्तुमर्हति। नह्येकत्रोपलम्भाभावः सत्त्वप्रतिपादको भूत्वाऽन्यत्रासत्त्वप्रतिपादकः सम्पद्यते। स्वभावहानप्रसङ्गात्। **किमुक्तं?** यथा तेऽनुपलभ्यमानाऽप्यावरणाद्यनुपलब्धिरस्ति तथाऽनुपलभ्यमानमप्यावरणादिकमस्तीति मन्तव्यम्। आवरणाद्यनुपलब्धेरनुपलम्भेऽपि चेन्नावरणाद्यनुपलब्ध्यभावस्तदाऽऽवरणाद्यनुपलम्भेऽपि नावरणाद्यभाव इत्यस्यापि सुवचत्वात्। **किं बहुना** यथाऽऽवरणाद्यनुपलब्धेरनुपलम्भादपि सद्भाव उपपद्यते तथाऽऽवरणादेरनुपलम्भादपि सद्भाव उपपद्यते। अनुपलम्भस्य हेतोरुभयत्र समानत्वात्। **अतो** नित्यस्य सतः शब्दस्यावरणादिप्रयुक्त एव प्रागुच्चारणादनुपलम्भो नानित्यत्वप्रयुक्तः इति भावः ॥ २० ॥

समाधत्ते—

"अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः" ॥ २१ ॥

अहेतुः="तदनुपलब्धेरनुपलम्भात्". (न्या० २।२।१९). इत्ययमावरणाद्युपपत्तौ हेतुर्न भवति, **कुतः?** अनुपलब्धेः=आवरणाद्यनु-

पलब्धेरनुपलम्भात्मकत्वात्=आवरणाद्युपलब्ध्यभावात्मकत्वान्निषेधविषयेण प्रमाणेनोपलम्भसिद्धेरित्यर्थः ।

यत्तावद् भावात्मकं वस्तु तत् सत्त्वाद् विधिविषयेण प्रमाणेनोपलभ्यते, यच्चाभावात्मकं तदसत्त्वान्निषेधविषयेण प्रमाणेनेति नियमः । आवरणाद्यनुपलब्धिश्चोपलब्ध्यभावात्मिका । तस्याः विधिविषयेण प्रमाणेनोपलम्भाभावेऽपि निषेधविषयेण प्रमाणेनोपलम्भः सम्भवति । नहि विधिविषयप्रमाणगोचरतावदनुपलब्धौ निषेधविषयप्रमाणगोचरताऽपि विरुध्यते । न चावरणाद्युपलब्धिं निषेधता प्रमाणेन मनसा तदनुपलब्धिग्रहणं कथञ्चिद् विरोधमावहति **"येनेन्द्रियेण यद्गृह्यते तेनैव तद्गता जातिस्तदभावश्च गृह्यते"** इति नियमाभ्युपगमात् । वक्ष्यति च तेन तद्ग्रहणं **"ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्मम्"** ( न्या० ५।१।३१ ) इति । तथा च "तदनुपलब्धेरनुपलम्भात्" इत्यसिद्धो हेतुर्नाऽऽवारणाद्युपपादनाय क्षमते । तस्य तदुपपादनाक्षमत्वे चानित्यत्वप्रयुक्तः खलु प्रागुच्चारणादनुपलम्भः शब्दस्य नावरणादिप्रयुक्त इति सिद्धमिति भावः ॥

**तत्र** "शब्दोऽनित्यः गुणत्वे सत्यसदादीन्द्रियविषयत्वाद् घटादिगतरूपादिवत्" **इति** प्रयोगोऽनुसन्धेयः ॥ २१ ॥

**सम्प्रति** तत्र सत्प्रतिपक्षमाशङ्कते—

**"अस्पर्शत्वात्" ॥ २२ ॥**

शब्दो नित्य इति प्रतिज्ञाशेषः । अस्पर्शत्वात्=स्पर्शरहितत्वान्नित्यः शब्द इत्यर्थः ।

**यत्** स्पर्शवन्न भवति तन्नित्यं दृष्टं, यथाकाशम् । **शब्दोऽपि** स्पर्शवान् न भवति । तस्मादाकाशवन्नित्य इति भावः ॥ २२ ॥

**समाधत्ते**—

**"न कर्मानित्यत्वात्" ॥ २३ ॥**

न=यदस्पर्शं तन्नित्यमिति न, कुतः कर्मानित्यत्वात्=अस्पर्शत्वेऽपि कर्मणो नित्यत्वाभावादित्यर्थः ।

यदस्पर्शं तन्नित्यमिति नायं नियमः । कर्मणि व्यभिचारात् । नह्यस्पर्शं कर्म नित्यमस्ति । तस्मादस्पर्शत्वादित्यहेतुरिति भावः ॥ २३ ॥

पुनराशङ्कते—

(१) "सम्प्रदानात्" ॥ २४ ॥

नित्यः शब्द इति प्रतिज्ञाशेषः । सम्प्रदानात्=सम्प्रदीयमानत्वान्नित्यः शब्द इत्यर्थः ।

शब्दस्तावदाचार्य्येण शिष्याय सम्प्रदीयते । न चैतदवस्थानादृते कथञ्चिदुपपद्यते । लोके सम्प्रदीयमानानां गवादीनामवस्थानदर्शनात् । किमुक्तं ? यत् सम्प्रदीयते तदवस्थितं दृष्टम् । शब्दोऽपि गुरुणा शिष्याय सम्प्रदीयते । तस्मादवस्थितः । यदा चावस्थितस्तदा नित्य इति भावः ॥ २४ ॥

समाधत्ते—

"तदन्तरालानुपलब्धेरहेतुः" ॥ २५ ॥

अहेतुः=शब्दावस्थानसाधकत्वेनोपन्यस्तः "सम्प्रदानात्" इत्ययमहेतुः, कुतः ? तदन्तरालानुपलब्धेः=येन सम्प्रदीयते यस्मै च तयोर्दातृप्रतिग्रहीत्रोराचार्य्यान्तेवासिनोरन्तराले तदवस्थानानुपलब्धेरित्यर्थः ।

सम्प्रदीयमानो हि सर्वोऽवस्थितोऽर्थः सम्प्रदातुरपयन् सम्प्रदानं च प्राप्नुवन्नन्तराले तावदुपलभ्यते, यथा गवादिः । चेच्छब्दोऽप्यवस्थितः स्यात्, तदा दातृप्रतिग्रहीत्रोराचार्य्यान्तेवासिनोरन्तरालेऽवश्यमुपलभ्येत । नचोपलभ्यते । तस्माद् भवति प्रतिपत्तिरनवस्थितः खलु तदानीं शब्दः । यदा चानवस्थितस्तदा बाधितत्वादहेतुः सम्प्रदानमिति भावः ॥ २५ ॥

---

(१) अस्मात् पूर्वं "नाणुर्नित्यत्वात्" इति सूत्रं मुद्रितपुस्तकेषु सर्वत्रोपलभ्यते । परन्तु तस्य सूत्रत्वे न किञ्चित्प्रमाणं मिलति । वार्तिके न्यायतत्त्वालोके चेदं सूत्रत्वेन न धृतं नूनमेतद्भाष्यवाक्यम् । अत उपेक्षितं न व्याख्यातम् ॥

अत्र शङ्कते—

"अध्यापनादप्रतिषेधः" ॥ २६ ॥

अप्रतिषेधः=अन्तरालेऽवस्थानानुपलब्धेः "सम्प्रदानात्" इत्ययमहेतुरिति हेतुप्रतिषेधो न सम्भवति, कुतः ? अध्यापनात्=दीयमानस्य सम्प्रदानप्राप्तिरध्यापनं, तस्मादन्तरालेऽवस्थानसिद्धेरित्यर्थः ।

यद्यपि प्रत्यक्षतोऽन्तराले शब्दावस्थानं नोपलभ्यते तथाऽप्यनुमानतस्तदुपलब्धिः सम्भवति । नहि प्रत्यक्षतोऽनुपलब्धस्यानुमानेनोपलब्धिः सत्तां न साधयते । अध्यापनं हि गुरुणा दीयमानस्य शब्दस्यान्तेवासिनि सम्प्रदाने सम्प्राप्तिः । न च सा मध्यावस्थानमन्तरेण युज्यते । अनवस्थितस्य तददर्शनात् । प्रत्यक्षतोऽनुपलब्धिस्तु कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावेनाप्युपपद्यते । अतो न "सम्प्रदानात्" इति बाधितो हेतुरिति भावः ॥ २६ ॥

समाधत्ते—

(१)"उभयोःपक्षयोरन्यतरस्याध्यापनादविप्रतिषेधः"॥२७॥

उभयोः=द्वयोः पक्षयोः=नित्यानित्यपक्षयोरन्यतरस्य=एकस्य नित्यस्य वाऽनित्यस्य वा स्वीकारेऽध्यापनात्=अध्यापनसम्भवादविप्रतिषेधः=उक्तस्य हेतुप्रतिषेधस्य प्रतिषेधः परिहारो न जायत इत्यर्थः ।

अध्यापनं हि गुरुणा दीयमानस्य शब्दस्यान्तेवासिनि सम्प्रदाने सम्प्राप्तिरित्युक्तम् । तच्च नित्यपक्षवदनित्यपक्षेऽप्युपपद्यते । शब्दनित्यत्ववादिनो भवन्तः सङ्गिरन्ते शब्दोऽवस्थित्या सम्प्रदानं प्राप्नोति । शब्दानित्यत्ववादिनो वयञ्चाचक्ष्महे शब्दः सन्तानवृत्त्या सम्प्रदानमभ्येति । नचोभयोः पक्षयोः समानत्वेनोपपद्यमानस्याध्यापनस्यास्ति कुत्रचिद् विशेषतः पक्षपातः, येनेदं शब्दावस्थानमेव साधयेत् न शब्दसन्तानम् ।

(१) इदं भाष्यं न सूत्रमिति केचित् । तदतिमन्दम् । पूर्वपक्षे वक्तव्ये सिद्धान्तस्यावश्यं वक्तव्यत्वात् । "सिद्धान्तसूत्रम्—उभयो० षेधः" इति न्यायतत्त्वालोके वाचस्पतिमिश्रोल्लेखदर्शनाच्च ॥

अवस्थानं तु शब्दस्य "तदन्तरालानुपलब्धेः" इति प्रतिषिद्धं नाध्यापनस्य गोचरतामापद्यते। परिशेषात् तद्गोचरतया सन्तानसिद्धौ च सिध्यति बाधितत्वादहेतुः सम्प्रदानमिति तदवस्थः प्रतिषेधो न जातु परिहृत इति भावः ॥ २७ ॥

पुनः शङ्कते—

**"अभ्यासात्" ॥ २८ ॥**

नित्यः शब्द इति प्रतिज्ञाशेषः । अभ्यासात्=अभ्यस्यमानत्वान्नित्यः शब्द इत्यर्थः ।

एकविषयोऽनेकक्रियोत्पादो ह्यभ्यासः, यथा रूपस्य पुनः पुनर्दर्शनं, शब्दस्य च पुनः पुनरुच्चारणम् । नचायं क्षणद्वयादूर्ध्वमनवस्थितस्य शब्दस्य कथञ्चिद् घटते। तदानीं तदभावेन तद्गोचरताहक्क्रियोत्पादासम्भवात् । नहि यदा यत्र विद्यते तदा तद्गोचरा काचित् क्रियोत्पत्तुमुत्सहते। भवति च "पञ्चकृत्वः पश्यति रूपम्" इति रूपगोचराभ्यासवत् शब्दगोचरोऽप्यभ्यासः "दशकृत्वोऽनुवाकमधीते, विंशतिकृत्वोऽनुवाकमधीते" इति। तस्मात् प्रतिपद्यते यावदभ्यासं रूपवदेकोऽवस्थितः खलु शब्दो न त्वनेकोऽनवस्थितः। **किमुक्तं?** यत्तावदभ्यस्यते तदवस्थितं दृष्टं यथा रूपम्। शब्दोऽप्यभ्यस्यते । तस्मादवस्थितेन तेन भवितव्यम्। **यदा** चावस्थितः, **तदा** नित्य इति भावः ॥ २८ ॥

समाधत्ते—

**"नान्यत्वेऽप्यभ्यासस्योपचारात्" ॥ २९ ॥**

न=यदुक्तं तन्न, **कुतः?** अन्यत्वेऽपि=शब्दानेकत्वेऽप्यभ्यासस्य=उक्तलक्षणस्याभ्यासस्योपचारात्=उपचारसम्भवादित्यर्थः ।

**योऽयं** शब्दगोचरोऽभ्यासः प्रादर्शि, न तेन यावदभ्यासमेकोऽवस्थितः शब्दः सेद्धुमर्हति। तस्य शब्दानेकत्वेऽप्युपचरितुं शक्यत्वात् । नहि यद् यावदभ्यासमेकमवतिष्ठते तदेवाभ्यस्यते नानेकमनवस्थितमिति नियमः सम्भवति। तस्याग्निहोत्रादिकर्मणि व्यभिचारात्। अस्त्यग्निहोत्रादिकं कर्म

यावदभ्यासमनेकमनवस्थितम् । भवति च तद्गोचरोऽप्यभ्यासः "द्विर्जुहोति, त्रिर्भुङ्क्ते, द्विरनृत्यत्, त्रिरनृत्यत्" इति । **किमुक्तम्?** अभ्यासस्य खल्वेकोऽपि विषयो दृष्टः, यथा रूपम् । एकाकारोऽनेकोऽपि विषयो दृष्टः, यथा कर्म । यस्य चोभयविधो विषयो विद्यते न तेन प्रयुक्तेन किञ्चित् साधयितुं पार्य्यते । अनैकान्तिकत्वात् । नह्यनैकान्तिको हेतुः क्वचित् प्रयुक्तः स्वसाध्यसाधनायालं सम्पद्यते । अनैकान्तिकश्च हेतुरभ्यासः । तस्माद् भवति प्रतिपत्तिर्न तावदभ्यस्यमानः शब्दो रूपवदवस्थितः **अपि च?** कर्मवदनवस्थितः । यदा चानवस्थितस्तदा न नित्यः किन्त्वनित्य इति भावः ॥ २९ ॥

अत्र शङ्कते—

**"अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः" ॥ ३० ॥**

अन्यस्मात्=अन्यसकाशादन्यत्=यदन्यदिति मन्यसे तदनन्यत्वात्=स्वात्मनोऽनन्यत्वादनन्यत्=अन्यन्न भवति, इति=अतोऽन्यताभावः=नास्त्यन्यत्वमित्यर्थः ।

चेदन्यन्नाम किञ्चिद् जगति भवेत् तदा **"अन्यत्वेऽप्यभ्यासस्योपचारात्"** इत्यनैकान्तिकत्वमुद्भाव्येत । तदेव नास्ति । वस्तुमात्रस्य वस्त्वन्तरादन्यत्वेऽपि स्वात्मनोऽन्यत्वाभावात् । नहि किञ्चिद् वस्तु स्वात्मनोऽन्यद्भवितुमर्हति । स्वस्मिन् स्वप्रतियोगिकभेदासम्भवात् । **यदा** च वस्तुमात्रं स्वात्मनः सकाशादनन्यदेव **तदा** किन्नु नाम वस्त्वन्तरमवशिष्यते यदन्यत् स्यात् । अतो यदुक्तम् "अन्यत्वेऽप्यभ्यासस्योपचारात्" इति, तदयुक्तमिति भावः ॥ ३० ॥

समाधत्ते—

**"तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः" ॥ ३१ ॥**

तदभावे=तस्याः अन्यताया असत्त्वेऽनन्यता=अनन्यताऽपि नास्ति=न स्यात्, **कुतः?** तयोः=अन्यताऽनन्यतयोरितरेतरापेक्षसिद्धेः=परस्परापेक्षसिद्धेरित्यर्थः ।

चेदन्यन्नाम किञ्चिद् जगति न स्यात् तदाऽनन्यदपि न स्यात् । नहि यद् यदपेक्ष्य सिध्यति तत् तदभावे भवति । अन्यदपेक्ष्य चानन्यत् सिध्यति । प्रतिषेधात्मकत्वात् । अन्यथा समासानुपपत्तेः । नचेयं कल्पनाऽपि साध्वी प्रतिभाति स्वात्मनोऽनन्यद् भवद् वस्तु वस्त्वन्तरादप्यन्यद् न भवतीति । स्वानुभवविरोधात् । नहि नीलं स्वात्मनोऽनन्यद् भवत् पीतादपि केन चिदनन्यदनुभूयते । अन्यदेव हि पीतान्नीलमिति सर्वजनीनम् । अतो नान्यताभावो युक्तः । तस्यायुक्तत्वे च "अन्यत्वेऽप्यभ्यासस्योपचारात्" इत्यनैकान्तिकत्वोद्भावनं नायुक्तमिति भावः ॥ ३१ ॥

पुनः शब्दनित्यत्वं शङ्कते—

"विनाशकारणानुपलब्धेः" ॥ ३२ ॥

नित्यः शब्द इति प्रतिज्ञाशेषः । विनाशकारणानुपलब्धेः=विनाशकारणोपलम्भाभावान्नित्यः शब्द इत्यर्थः ।

यदनित्यं तस्य विनाशकारणमुपलभ्यते, यथा लोष्टस्य करणद्रव्यविभागः । शब्दोऽपि चेदनित्यः स्यात् तदा तस्यापि किञ्चिद् विनाशकारणमुपलभ्येत । नचोपलभ्यते । तस्मान्नित्य इति भावः ॥ ३२ ॥

प्रतिबन्ध्युत्तरमाह—

"अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः" ॥ ३३ ॥

अश्रवणकारणानुपलब्धेः=अश्रवणकारणोपलम्भाभावात् सततश्रवणप्रसङ्गः=शब्दस्य नित्यत्वे सततं श्रवणं प्रसज्येत स्यादित्यर्थः ।

चेच्छब्दो नित्यः स्यात्, सततं श्रूयेत । नहि नित्यस्य सततस्तस्य कथञ्चिदश्रवणं युज्यते । न च तदश्रवणकारणं किञ्चिदुपलभ्यते येन तत्कृतमश्रवणं कल्प्येत । न च विद्यमानस्य निर्निमित्तमश्रवणमिति कर्हिचित् कल्प्यम् । विद्यमानस्य निर्निमित्तो विनाश इत्यस्यापि कल्पयितुं शक्यत्वात् । समानश्चावयोर्निमित्तमन्तरेण विनाशाश्रवणकल्पनायां दृष्टविरोधः । व्यञ्जकाभावादश्रवणमिति तु व्यञ्जकप्रतिषेधेनैव प्रतिषिद्धम् । अतोऽश्रवणकारणाभावेऽपि चेच्छब्दो न श्रूयते तदा भवत्येषा प्रतिपत्तिर्विनाशका-

रणाभावेऽपि शब्दो विनश्यति । विनाशाच्चानित्यो न जातु नित्य इति भावः ॥ ३३ ॥

मुख्यमुत्तरमाह—

**"उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः" ॥ ३४ ॥**

उत्तरान्तरमेतदिति सूचनाय चकारः । उपलभ्यमाने=अनुमानेनोपलभ्यमाने शब्दविनाशकारणेऽनुपलब्धेः=तदनुपलब्धेरसत्त्वात्=असिद्धत्वादनपदेशः="विनाशकारणानुपलब्धेः" इत्ययमहेतुः हेत्वाभास इत्यर्थः ।

यन्निष्पद्यते तद्विनश्यति यथा घटः । शब्दोऽपि निष्पद्यते **"संयोगाद् विभागाच्च शब्दाच्च शब्दनिष्पत्तेः"** (वै० २।२।३१) इति तन्निष्पत्त्यभिधानात् । अतस्तद्विनाशेनाप्यवश्यं भवितव्यम् । नचायं भवन्नकारणकः सम्पद्यते । तेन भवत्यनुमानम् "अस्ति किञ्चित् तद्विनाशकारणम्" इति । तदेवं विनाशकारणोपलब्धौ विनाशकारणानुपलब्धेरसत्त्वान्न साध्यसाधकत्वं घटते । सिद्धस्य साधकत्वदर्शनात् । अतो न विनाशकारणानुपलब्धेर्नित्यः शब्दः **अपि च ?** अनित्य इति भावः ॥

**तत्र** पूर्वस्य शब्दस्य विनाशकारणमुत्तरः शब्दः, अन्त्यस्य चोपान्त्यः इति विवेकः ॥ ३४ ॥

**ननु** न वयमनुमानतः परितुष्यामो यावत् प्रत्यक्षतो न तदुपलभामहे ? तत्राह—

**"पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः" ॥ ३५ ॥**

पाणिनिमित्तप्रश्लेषात्=शब्दायमाने कांस्यादौ पाणिरूपनिमित्तकारणस्य प्रश्लेषात् संयोगविशेषाच्छब्दाभावे=शब्दविनाशे प्रत्यक्षेणोपलभ्यमानेऽनुपलब्धिः=तद्विनाशकारणानुपलब्धिर्न=न सिध्यतीत्यर्थः ।

उत्पन्नस्य खलु शब्दस्य यत्सम्बन्धाद् विनाश उपलभ्यते, तदेव तद्विनाशकारणमध्यवसातव्यम् । प्रत्यक्षेण तु शब्दायमाने कांस्यादौ हस्तसंयोगविशेषात् तद्विनाश उपलभ्यते । तस्मादत्र हस्त एव तद्विनाशकारणं निश्चेयम् । **तथा च** विनाशकारणस्य प्रत्यक्षेणोपलम्भादसिद्धा सती तदनुपलब्धिर्न शब्दस्य नित्यत्वं साधयितुं पारयतीति सिद्धमिति भावः ॥ ३५ ॥

उपसंहरन् सिंहावलोकितन्यायेनाह—

(१) "अस्पर्शत्वादप्रतिषेधः" ॥ ३६ ॥

नानुपलब्धिरित्यनुवर्तते । यत इति शेषः । यतो न विनाशकारणानुपलब्धिरतोऽस्पर्शत्वात्=अस्पर्शत्वहेतोरप्रतिषेधः=शब्दानित्यत्वप्रतिषेधो न सम्भवतीत्यर्थः ॥

**यदा** शब्दस्य विनाशकारणमुपलभ्यते **तदा** भवदुपन्यस्तोऽस्पर्शत्वादिति हेतुरकिञ्चित्करो न तदनित्यत्वं प्रतिषेद्धुं कल्पते । प्रतिरुद्धत्वादिति भावः ॥ ३६ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

"विभक्त्यन्तरोपपत्तेश्च समासे" ॥ ३७ ॥

अस्पर्शत्वादप्रतिषेध इत्यनुवर्तते । समासे=व्याकरणप्रसिद्धे समासनाम्नि शब्दसंस्कारविशेषे विभक्त्यन्तरोपपत्तेश्च=पूर्वविभक्तितो विभक्त्यन्तरस्योत्पत्तेरपि शब्दानित्यत्वसिद्धावस्पर्शत्वात् तत्प्रतिषेधो न सम्भवतीत्यर्थः ।

**येन** हि द्वे वा पदे बहूनि वा पदानि समानपदतामुपयन्ति, **स** एव पदसाधुत्वप्रयोजनः संस्कारविशेषः "समास" इत्याख्यायते । **किमुक्तं?** यदनेकेषां पदानामेकीभवनं तत् "**समासः**" इति व्यपदिश्यते। तत्र च "**सुपो धातुप्रातिपदिकयोः**" ( अष्टा० २।४।७१ ) इति पूर्वविभक्तेर्लुकि "**कृत्तद्धितसमासाश्च**" ( अष्टा० १।२।४६ ) इति प्रातिपदिकसंज्ञायां "**ङ्याप्प्रातिपदिकात्**" ( अष्टा० ४।१।१ ) "**स्वौजसमौट्० ङ्योस्सुप्**" ( अष्टा ०४।१।२ ) इति विभक्त्यन्तरमुत्पद्यते । **चेच्छब्दो** नित्यः स्यात् **तदा** सर्वदा संस्कृतात्मतया न जातु संस्क्रियेत **नवा** तस्मादतिशयं कञ्चिदादधती सुब्विभक्तिरुत्पद्येत । नहि नित्यः कश्चित् क्वचित् कदाचित् संस्क्रियते । विकृतिमादधतीं विभक्ति-

---

(१) अस्मात्पूर्वं "**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः**" इति सूत्रं क्वचिन्मुद्रितपुस्तके दृश्यते। परन्तु न तत् सूत्रं किन्तु भाष्यम्। तात्पर्यटीकायां भाष्यप्रतीकधारणरीतिदर्शनात् । न्यायतत्त्वालोके च सूत्रत्वेनाव्याख्यानात् ॥

प्रमदां च यथाविधानमास्वजते । स्वरूपहानप्रसङ्गात् । संस्क्रियते च शब्दः । ततः प्रजायते च विकारजननी सुब्विभक्तिः । तस्मात् प्रतिपद्यते न खलु नित्यः शब्दः, अपि च ? अनित्य इति भावः ॥

**इदमत्र बोध्यम्**—यद्यपीह वर्णविषयो नित्यानित्यत्वविचारः प्रक्रान्तो न पदविषयः **"ते विभक्त्यन्ताः पदम्"** ( न्या० २।२।५४ ) इति तद्विचारस्याग्रे वक्ष्यमाणत्वात् । **"विकारादेशोपदेशात् संशयः"** ( न्या० २।२।३८ ) इति वर्णगोचरपरीक्षान्तरस्य च प्रारप्स्यमानत्वात् । **तथापि** वर्णातिरिक्तं नास्ति पदं नामान्यत् किञ्चित्, अतस्तद्विचारोऽपि वर्णविचार एवेति सूचयितुं मध्ये समासनिर्देशः । ईश्वराद्यर्थाभिधायिनः सन्तोऽकारादयो वर्णा अपि क्वचित् समस्यन्ते, तदभिप्रायेण वा तन्निर्देश इति नाप्रकृतानुसरणप्रसङ्ग इति ॥ ३७ ॥

शब्दगोचराऽनित्यत्वपरीक्षा पर्य्यवसिता, **सम्प्रति** तद्गोचरं परीक्षान्तरं प्रारिप्सुः पूर्वन्तावत् तदङ्गभूतं संशयमाह—

**"विकारादेशोपदेशात् संशयः"** ॥ ३८ ॥

विकारादेशोपदेशात्=विकारश्चादेशश्च तौ विकारादेशौ तयोरुभयोरुपदेशात् उपदेशसम्भवात् संशयः=किमिकारस्य यकारो विकारः उपदिश्यते आहोस्विदादेश इति भवति संशय इत्यर्थः ।

**"दध्यत्र"** इत्यादौ **"इको यणचि"** ( अष्टा० ६।१।७७ ) इत्यादिभिरिगादीनां स्थाने यदिदं यणादिकमुपदिश्यते । तत्र केचिदाहुः विकारोपदेशोऽयम्, अपरे त्वादेशोपदेशोऽयमिति । **संहितायां** विषये यद् इकार इत्वं हित्वा यत्वमापद्यते स **"विकारः"** इति विकारवादिनो मन्यन्ते । **यत्तु** तत्रेकारमप्रयुज्य तत्स्थाने यकारः प्रयुज्यते स **"आदेशः"** इत्यादेशवादिनः सङ्गिरन्ते । द्वेधाऽप्युपदेशसम्भवाद् भवति संशयः किमिहेगादीनामुपदिश्यमानो यणादिर्विकार उतादेश इति भावः ॥

**तत्र** विकार इति पूर्वः पक्षः, आदेश इति सिद्धान्त इति विवेकः ॥ ३८ ॥

तत्र विकारपक्षं निराकर्तुमुपक्रमते—

**"प्रकृतिविवृद्धौ विकारविवृद्धेः"** ॥ ३९ ॥

यणादिर्न विकार इति शेषः। प्रकृतिविवृद्धौ=अन्वयिकारणं प्रकृतिः, तस्या उपचयो विवृद्धिः, तस्यां सत्यां विकारविवृद्धेः=विकारः कार्य्यं, तस्यापि विवृद्धेरित्यर्थः।

**लोके** खलु प्रकृतिविवृद्ध्या विकारविवृद्धिर्दृश्यते, यथा सुवर्णविवृद्ध्या तद्विकारस्य रुचकादेः, क्षीरविवृद्ध्या च तद्विकारस्य दध्नः। चेदिकारस्य यकारोऽपि विकारः स्यात्, **तदा** तद्विवृद्ध्या तत्रापि विवृद्धिर्दृश्येत। नच "सुद्ध्युपास्यः" इत्यत्र यकारे काचिद् विवृद्धिर्दृश्यते। अस्ति चात्र तत्प्रकृतेरिकारस्य दैर्घ्यं नाम विवृद्धिः। **किमुक्तं?** विकारेषु तावत् सर्वत्र प्रकृतेरन्वय ईक्ष्यते, यथा रुचकादिषु सुवर्णजातीयानामवयवानां, दध्नि च क्षीरजातीयानाम्। तेह्यन्यतमव्यूहपरित्यागेनान्यतमं व्यूहमापद्यमानाः **"रुचकः"** इति वा **"वर्द्धमानः"** इति वा विक्रियन्ते। "दधि" इति च परिणमन्ते। **चेद्** यकारोऽपीकारस्य विकारः स्यात् **तदा** तत्रापि तदन्वय ईक्ष्येत। नच वयमिकारस्य वा तदारम्भकावयवस्य वा यकारेऽन्वयमीक्षामहे। **किं बहुना** यकारश्चेदिकारस्य विकारः स्यात् तदा तत्प्रयोगार्थमिकारमुपाददानास्तत्कारणं विवृतकरणं पूर्वमुपाददीरन्। तन्निरपेक्षास्तु यकारं प्रयोक्ष्यमाणा ईषत्स्पृष्टकरणमुपाददते। न वा यथा कालविपाकापेक्षं क्षीरं दधि भवदुपलभ्यते तथेकारो यकारो भवन्। तस्माद् भवति प्रतिपत्तिर्न यकार इकारस्य विकारः किन्त्वादेशः इति भावः ॥ ३९ ॥

शङ्कते—

**"न्यूनसमधिकोपलब्धेर्विकाराणामहेतुः"** ॥ ४० ॥

अहेतुः="प्रकृतिविवृद्धौ विकारविवृद्धेः" इति विकारप्रतिषेधे हेतुर्न भवति, **कुतः?** विकाराणां=लोके विकाराणां न्यूनसमधिकोपलब्धेः= प्रकृतितो न्यूनसमाधिकतयोपलम्भादित्यर्थः।

यस्तावत् प्रकृतिविवृद्धौ विवर्द्धते स एव तद्विकारो नापर इति नायं नियमः सम्भवति। लोके विकाराणां प्रकृत्यपेक्षया न्यूनत्वसमत्वाधिकत्वस्यापि दर्शनात्। दृश्यते हि नारिकेलबीजापेक्षया नारिकेलबीजारब्धो नारिकेलतरुर्न्यूनः, न्यग्रोधबीजापेक्षया न्यग्रोधबीजारब्धो न्यग्रोधतरुरधिकः, कनकाद्यपेक्षया कनकाद्यारब्धो रुचकादिस्तु सम इति। यकारोऽपि चेत् क्वचिद्विकारापेक्षया न्यूनस्तिष्ठति न तद्विवृद्ध्या विवृद्धिमाप्नोति तदा न तद्विकारतां हातुमर्हति। न्यूनत्वस्य तत्राप्रयोजकत्वात्। अतो विकार एवेकारस्य यकारो नादेश इति भावः॥ ४०॥

समाधत्ते—

**"नातुल्यप्रकृतीनां विकारविकल्पात्"॥ ४१॥**

न=यदुक्तं तन्न, कुतः? अतुल्यप्रकृतीनां=न तुल्या अतुल्याः परस्परविलक्षणाः याः प्रकृतयस्तासां विकारविकल्पात्=विकारनिष्ठो विविधः कल्पो विकल्पः वैलक्षण्यं, तस्मात् विकारवैलक्षण्यावश्यकत्वादित्यर्थः।

न वयं "प्रकृतिविवृद्धौ विकारविवृद्धेः" इति प्रकृतिवृद्धिह्रासाभ्यां विकाराणां वृद्धिह्रासौ ब्रूमः, किमुक्तं? न वयं प्रकृत्यपेक्षया विकाराणां न्यूनसमाधिकभावं प्रतिषेधामः, येन व्यभिचारोद्भावनं सङ्गच्छेत। किन्तु यावन्तो विकारास्तान् सर्वान् यथाप्रकृति निगदामः, किमुक्तं? सर्वेषु विकारेषु प्रकृतीनामन्वयं प्रकृतिवैलक्षण्याद् विकारवैलक्षण्यमिति यावत् प्रतिजानीमः। न चास्यास्ति क्वचिद् व्यभिचारः। सर्वत्र विकाराणां यथाप्रकृति दर्शनात्। नहि नारिकेलबीजाद् न्यग्रोधपादपो न्यग्रोधबीजाद्वा नारिकेलपादपो भवति। नचैतत् प्रकृत्यनुविधानं यकारे विद्यते। यथा हि "दध्यत्र" इत्यादौ यकारो दृश्यते, तथैव "सुद्ध्युपास्यः" इत्यादावपि दृश्यते। चेदिवर्णविकारो यकारो भवेद् तदाऽवश्यमिवर्णभेदमनुविधीयेत। विकाराणां प्रकृत्यनुविधानस्यावश्यकत्वात्। नचेवर्णभेदमनुविधीयते यकारः। तस्मात् प्रतिपद्यते न खल्विकारस्य विकारो यकारः, अपि च? आदेश इति भावः॥ ४१॥

पुनः शङ्कते—

**"द्रव्यविकारे वैषम्यवद् वर्णविकारविकल्पः" ॥ ४२ ॥**

द्रव्यविकारे=द्रव्यत्वेन तुल्ये न्यग्रोधनारिकेलपादपादौ द्रव्यविकारे वैषम्यवत्=प्रकृतिवैलक्षण्यकृतवैलक्षण्यवद् वर्णविकारविकल्पः=यवर्णत्वेन तुल्येऽपि वर्णविकारे यकारे प्रकृतिवैलक्षण्यकृतं वैलक्षण्यं भविष्यतीत्यर्थः।

**यथा** हि न्यग्रोधनारिकेलप्रभृतयस्तरवो द्रव्यत्वेन समानाः सन्तोऽपि प्रकृतिभूतानां बीजानां वैलक्षण्याद् विलक्षणाः सिध्यन्ति **तथैव** "दध्यत्र, सुद्ध्युपास्यः" इत्यादौ यवर्णत्वेन समानः सन्नपि यकारः प्रकृतिभूतस्येवर्णस्य वैलक्षण्याद् विलक्षणः सेत्स्यति। प्रकृतिवैलक्षण्याद् विकारवैलक्षण्यमेव च प्रकृत्यनुविधानम्। नचात्रास्ति काचिदनुपपत्तिः। तस्माद् विकारः एवेकारस्य यकारो नादेश इति भावः॥ ४२ ॥

समाधत्ते—

**"न विकारधर्मानुपपत्तेः" ॥ ४३ ॥**

न=यदुक्तं तन्न, **कुतः?** विकारधर्मानुपपत्तेः=यकारे विकारधर्मानुपपत्तेरित्यर्थः।

**न** खलु प्रकृतिवैलक्षण्यमात्राद् विकारवैलक्षण्यं सम्भवति, यावद् विकारेषु प्रकृतिधर्मा नानुवर्तेरन्। **नहि** न्यग्रोधनारिकेलप्रभृतयस्तरवः प्रकृतिवैलक्षण्यमात्राद् विलक्षणा विद्यन्ते, **अपि च?** प्रकृतिधर्मानुवृत्त्या। नच यकारे ह्रस्वत्वदीर्घत्वलक्षणः प्रकृतिधर्मोऽनुवर्तते। प्रकृतिधर्मानुवृत्तिरेव च विकारधर्मोपपत्तिः। **किमुक्तं?** यद्धर्मकं हि प्रकृतिद्रव्यं, तस्य धर्मस्यान्वये सति **यः** पूर्वो व्यूहो निवर्तते व्यूहान्तरं चोपजायते **तं** विकारविदो विकारमाचक्षते। अस्ति क्षीरविकारे दध्नि क्षीरधर्मान्वयपूर्वकः पूर्वव्यूहनिवृत्त्या व्यूहान्तरस्योपजननः। न चैवं यकारे प्रकृतिधर्मान्वयः उपलभ्यते। उपपद्यते वा। **तस्माद्** भवति प्रतिपत्तिः **यथा**ऽनडुहः स्थाने समागतोऽश्वो न तद्विकारः। विकारधर्मानुपपत्तेः। **एवमि**वर्णस्य स्थाने समागतो यकारोऽपि न तद्विकारो विकारधर्मानुपपत्तेरिति भावः॥४३॥

**ननु** यथा विकारप्रतिषेधे "प्रकृतिविवृद्धौ विकारविवृद्धेः" इति हेतुस्तथाऽस्ति कश्चिदन्योऽपि हेतुः ? तत्राह—

**"विकारप्राप्तानामपुनरापत्तेः" ॥ ४४ ॥**

यणादिर्न विकार इति प्रतिज्ञाशेषः । विकारप्राप्तानां=विकारं प्राप्तानां प्रकृतीनां विकाराणामिति यावदपुनरापत्तेः=पुनः प्रकृतिभावाप्राप्तेरवगम्यते न विकारो यणादिरित्यर्थः ।

**यस्तावद्** विकारः स न पुनः प्रकृतिभावमापद्यते । न खलु क्षीरविकारो दधि पुनः क्षीरभावमापन्नं दृष्टम् । यकारस्तु पुनरसंहितायामिवर्णभावमापद्यते । **तस्माद्** भवति प्रतिपत्तिर्न तावदिवर्णस्य यकारो विकारः किन्त्वादेश इति भावः ॥ ४४ ॥

**अत्र** व्यभिचारमाशङ्कते—

**"सुवर्णादीनां पुनरापत्तेरहेतुः" ॥ ४५ ॥**

अहेतुः=विकारप्रतिषेधे "विकारप्राप्तानामपुनरापत्तेः" इति हेतुर्न भवति, **कुतः ?** सुवर्णादीनां=सुवर्णादिविकाराणां रुचकादीनां पुनरापत्तेः=पुनः प्रकृतिभावप्राप्तेरित्यर्थः ।

**यदुक्तं** "विकाराः पुनः प्रकृतिभावं नापद्यन्ते" इति । **तदयुक्तम्** । सुवर्णादिविकारेषु व्यभिचारात् । सुवर्णादीनां विकारा हि रुचकादयः पुनः सुवर्णादिभावमापद्यमाना दृश्यन्ते । **चेद्** विकारेष्वपुनरापत्तिर्नियमतोऽभविष्यत्, **तदा** न जातु सुवर्णादीनां विकाराः पुनः सुवर्णादिभावमापत्स्यन्त । तेषां पुनः प्रकृतिभावापत्तेश्च भवति प्रतिपत्तिर्न खल्वपुनरापत्त्या व्याप्तोऽयं विकारभाव इति । तथाचेकारभावमापद्यमानोऽपि यकारो न तद्विकारभावं जहातीति भावः ॥ ४५ ॥

**समाधत्ते—**

**"न तद्विकाराणां सुवर्णभावाव्यतिरेकात् (१) ॥ ४६ ॥**

(१) इदं भाष्यं न सूत्रमिति केचित् । तत्फल्गु । न्यायतत्त्वालोके **"समाधिसूत्रम्"** इति वाचस्पतिमिश्रोल्लेखदर्शनात् ॥

न="विकारप्राप्तानामपुनरापत्तेः" इत्ययमहेतुर्न, **कुतः?** तद्विकाराणां=सुवर्णादिविकाराणां सुवर्णभावाव्यतिरेकात्=सुवर्णादिभावव्यतिरेकाभावात् सुवर्णादिवैजात्याभावादित्यर्थः ।

**न** वयं विकारमात्रमपुनरापत्त्या व्याप्तमाचक्ष्महे येनापुनरापत्तेरभावात् सुवर्णादिविकारेषु व्यभिचार आशङ्क्येत । **अपि च?** प्रकृतिधर्मान्वये सत्यपि यस्य स्वरूपं प्रकृतिस्वरूपतोऽत्यन्तं व्यतिरिच्यते, **किमुक्तं?** प्रकृतिधर्मानुगमेऽपि **यं** प्रकृतिसाजात्यं नाधिशेते तद्वैजात्यं च सुखमध्यास्ते **तं** विकारभेदमपुनरापत्त्या व्याप्तं ब्रूमहे । नचैवं सन्ति सुवर्णादिविकाराः खलु रुचकादयः । तेषां कदापि सुवर्णादिभावव्यतिरेकादर्शनात् । दधि च क्षीरविकारस्तथा । नचेहापुनरापत्तेरस्ति कदाचिदभावः । यकारे तु वैजात्ये सत्यपि पुनरापत्तिरनुभूयते । तदेतन्नियमविरुद्धम् । अतो भवत्यनुमानं न तावदिवर्णविकारो यकारः किन्त्वादेश इति भावः ॥ ४६॥

विकारप्रतिषेधे हेत्वन्तरमाह—

**"नित्यत्वेऽविकारादनित्यत्वेचानवस्थानात्" ॥ ४७ ॥**

यणादिर्न विकार इति प्रतिज्ञाशेषः । नित्यत्वे=वर्णानां नित्यत्वेऽविकारात्=विकारासम्भवात्, अनित्यत्वे च=नित्यत्वाभावे चानवस्थानात्=अवस्थानाभावान्न यणादिर्विकारः सम्भवतीत्यर्थः ।

**वर्णाः** नित्याः स्युरनित्याः वा स्युः, **उभयथा**ऽपि यकार इकारविकारो नोपपद्यते । नित्यत्वे हि द्वयोरविकारित्वात् अनित्यत्वे चाचिरावस्थायित्वात् कः कस्य विकारः स्यात् । नहि नित्यो यकारो नित्यस्येकारस्य विकारः सम्भवति । परमाण्वाकाशादिषु नित्येषु तददर्शनात् । नवाऽनित्यः इकार उत्पादनिरोधान्तरे क्षणमात्रावस्थायी यभावेन परिणन्तुमर्हति । सर्वत्र प्रकृतिविकारभावस्थले विकारोत्पत्तिवेलायां प्रकृत्यवस्थानदर्शनात् । **किं बहुना**—नित्याश्चेद् वर्णास्तदा व्याघातात्, अनित्याश्चेत् तदाऽनवस्थानादिकारस्य विकारो यकारोऽनुपपन्न इति भावः ॥ ४७ ॥

अत्र विकारवादी वर्णनित्यत्वपक्षे स्वपक्षं साधयितुं पूर्वन्तावद् विकल्पसमजात्या प्रत्यवतिष्ठते—

**"नित्यानामतीन्द्रियत्वात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः" ॥ ४८ ॥**

चकारेणैन्द्रियकत्वं समुच्चिनोति । वर्णविकाराणां=वर्णानां नित्यत्वेऽपि तद्विकाराणामप्रतिषेधः=प्रतिषेधो न सम्भवति, **कुतः?** नित्यानां=नित्यपदार्थानामतीन्द्रियत्वात्=केषाञ्चिदैन्द्रियकत्वेऽपि केषाञ्चिदतीन्द्रियत्वात् इन्द्रियगोचरतामतिक्रम्य वर्तमानत्वात् तद्धर्मविकल्पात्=तद्धर्मविकल्पापादनसम्भवादित्यर्थः ।

**ये** खलु नित्याः पदार्थास्ते सर्वे सधर्माणो भवन्ति न जातु विधर्माणः इति चेन्नियमः सम्भवेत् **तदा** स्यान्नित्यत्वाविशेषात् परमाण्वाकाशादिवद् वर्णानां विकारप्रतिषेधः । नचायं नियमः सम्भवति । नित्यत्वे सत्यपि परमाण्वाकाशादीनामतीन्द्रियत्वाद् गोत्वादीनां चैन्द्रियकत्वात् । **यदा** चैवमेकत्र नियमासम्भवः **तदा**ऽन्यत्रापि न तदसम्भवोऽशक्यसम्भवः । यथादृष्टमनुमातुं शक्यत्वात् । नह्यतीन्द्रियत्वानतीन्द्रीयत्वधर्मयोर्विकल्पेऽनुभूयमाने विकारित्वाविकारित्वधर्मयोर्विकल्पो दुरनुमानः सम्पद्यते । तद्धर्मविकल्पवत् तद्धर्मविकल्पस्याप्यापादनसम्भवात् । अतो भवत्येषा प्रतिपत्तिः **यथा हि** सत्यपि नित्यत्वे केचिदतीन्द्रियाः यथा परमाण्वाकाशादयः, केचिदैन्द्रियकाः यथा गोत्वादयः, **एवं** सत्यपि नित्यत्वे परमाण्वाकाशादयो न मिथः प्रकृतिविकारभावमापद्यन्ते, वर्णास्त्वापद्यन्त इति । **तथा**चेवर्णस्य विकार एव यकारो नादेश इति सिद्धमिति भावः ॥ ४८ ॥

**सम्प्रति** वर्णानित्यत्वपक्षे स्वपक्षं साधयितुं साधर्म्यसमजात्या प्रत्यवतिष्ठते—

**"अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपपत्तिः" ॥ ४९ ॥**

अनवस्थायित्वे च=अनित्यत्वपक्षे वर्णानामनवस्थायित्वेऽपि वर्णोपल-

ऽधवत्=तच्छ्रावणप्रत्यक्षवत् तद्विकारोपपत्तिः=तद्विकारस्यापि भवत्युपपत्तिरित्यर्थः ।

**यथा हि** वर्णानामनवस्थायित्वेऽपि श्रावणं प्रत्यक्षमुपपद्यते **तथा** विकारोऽप्युपपत्तुमर्हति । नास्त्यत्र काचिदनुपपत्तिरिति भावः ॥ ४९ ॥

**उभयत्र** समाधानमाह—

**"विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः"** ॥ ५० ॥

विकारधर्मित्वे=वर्णानां विकारधर्मित्वे नित्यत्वाभावात्=नित्यत्वासम्भवात् कालान्तरे=स्थितिकालतो भिन्नकाले विकारोपपत्तेश्च=विकारसम्भवाच्चाप्रतिषेधः="नित्याः स्युरनित्याः वा स्युरुभयथापि न विक्रियन्ते वर्णाः" इत्यस्माभिरुक्तस्य यस्त्वया सूत्राभ्यां प्रतिषेध उक्तः स न सम्भवतीत्यर्थः ।

**यत्तावन्नित्यं तन्न** कर्हिचित्स्वरूपतो विक्रियते । विक्रियेत चेद् नित्यं न स्यात् । नहि स्वरूपतोविक्रियमाणं किञ्चिन्नित्यं सम्भवति । नित्यत्वविकारयोर्मिथोविरोधेनैकत्रावस्थानानुपपत्तेः । वर्णा अपि नित्या इत्ययुक्तस्तेषां विकारः । अनित्यानां चानवस्थायित्वेन विकारवेलायामसत्त्वात् सुतरां विकारानुपपत्तिः । नहि यस्यां वेलायामिकारस्तिष्ठति तस्यामस्ति यकारः, यस्यां च यकारस्तस्यामस्तीकारः । प्रकृतिविकारयोश्चैकस्यां वेलायामवस्थानमावश्यकम् । लोके तथोपलब्धेः । **किमुक्तं ?** नित्याश्च विक्रियन्ते च वर्णा इति व्याघातादनुपपन्नम् । अनित्याश्च क्षणद्वयमात्रावस्थायिनः । पूर्वस्मिन्नुत्पद्यन्ते द्वितीयस्मिन्नुपलभ्यन्ते तृतीयस्मिँश्च प्रध्वस्यन्ते । न चैवंभूतानां प्रकृतिविकारभाव उपपद्यते । **नहि** यदेकार उपलभ्यते **तदा** तस्य यभावः सम्भवति । संहितायां सत्यां तद्भावप्रवृत्तेरभ्युपगमात् । संहितायां चोत्तरवर्णस्य पूर्ववर्णविनाशकत्वेनेकारस्यैव विनाशात् कथं यभावः सम्भवेत् । नहि प्रकृतेस्तदवयवस्य वाऽसत्त्वे विकारः सम्भवति । तस्मान्नित्यानित्यपक्षयोरुभयत्रापि भवदुपन्यस्तोऽसदुक्तस्य प्रतिषेधोऽनुपपन्न इति भावः ॥ ५० ॥

अत्रैव हेत्वन्तरमाह—

**"प्रकृत्यनियमात्" ॥ ५१ ॥**

अप्रतिषेध इत्यनुवर्तते । प्रकृत्यनियमात्=वर्णविकाराणां प्रकृतिनियमाभावादप्रतिषेधः=असदुक्तस्य प्रतिषेधो न सम्भवतीत्यर्थः ।

**या** हि यस्य प्रकृतिः **सा** तस्य प्रकृतिरेव भवति न जातु विकृतिः, **या** च विकृतिः **सा** तस्य विकृतिरेव न प्रकृतिरित्यस्ति सर्वत्र विकाराणां प्रकृतिनियमः । न खलु क्षीरजातीयस्य यथा दधिजातीयो विकारस्तथा दधिजातीयस्य क्षीरजातीयो विकारः क्वचित् कदाचित् कथञ्चिदुपलभ्यते । नचैष वर्णविकाराणामस्ति प्रकृतिनियमः । इह तु यथेकारजातीयस्य यकारजातीयो विकारः **"दध्यत्र"** इति दृश्यते, तथा यकारजातीयस्यापि विकार इकारजातीयो **"विध्यति"** इति दृश्यते । न चैवमुपलभ्यमानेऽनियमे प्रकृतिविकारभावो वर्णेषु कल्पयितुं शक्यते । तस्मादनुपपन्नोऽसदुक्तस्य भवदुपन्यस्तः प्रतिषेध इति भावः ॥ ५१ ॥

**अत्र** छलेन प्रत्यवतिष्ठते—

**"अनियमे नियमान्नानियमः" ॥ ५२ ॥**

अनियमे=प्रकृत्यनियमे नियमात्=नियमसद्भावादनियमः=अनियमो न=नास्तीत्यर्थः ।

**यो**ऽयं वर्णविकाराणां प्रकृतेरनियम उच्यते, तत्रास्ति नियमः । तस्य यथाविषयं व्यवस्थितत्वात् । **यदा** चैष स्वविषये व्यवस्थितः नियत इति यावत् **तदा** भवति नियतत्वान्नियमः । **तथाच** क्वानियमः । **तस्माद्** यदुक्तं "प्रकृत्यनियमात्" इति, तदयुक्तमिति भावः ॥ ५२ ॥

**समाधत्ते**—

**"नियमानियमविरोधादनियमे नियमादप्रतिषेधः" ॥ ५३ ॥**

अनियमे=प्रकृत्यनियमे नियमात्=नियमसत्त्वादप्रतिषेधः=यस्त्वया प्रकृत्यनियमप्रतिषेधः कृतः स न सम्भवति, **कुतः ?** नियमानियमविरोधात्=नियमानियमयोः सामानाधिकरण्यविरोधादित्यर्थः ।

**भवतु** प्रकृत्यनियमे नियमः। न चैतावता प्रकृतिनियमः समागच्छति। नियमो ह्यर्थाभ्यनुज्ञा, अनियमश्च तत्प्रतिषेधः। नच तयोर्विरोधात् सामानाधिकरण्यमुपपद्यते। नह्यभ्यनुज्ञातोऽर्थः प्रतिषिद्धोऽर्थश्चैकीभवति। **किमुक्तं?** नियमानियमयोराधाराधेयभाव उपपद्यते न सामानाधिकरण्यम्। भवाँश्चाधाराधेयभावमुदाहृत्य सामानाधिकरण्यं समर्थयते। तदेतद् वाक्छलम्। अतोऽनियमे नियमे भवत्यपि तदवस्थः प्रकृत्यनियमो न तत्प्रतिषेधः सम्भवतीति भावः॥ ५३॥

**तदेवं** विकारपक्षो निराकृतः। **इदानीमादेशपक्षे** विकारव्यपदेशमुपपादयन्नाह—

**"गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः"॥ ५४॥**

"तु" शब्देन विधान्तरं व्यवच्छिनत्ति। गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यः=गुणान्तरापत्तिश्चोपमर्दश्च ह्रासश्च वृद्धिश्च लेशश्च श्लेषश्च ते तथा, तेभ्यो विकारोपपत्तेः=एकस्य प्रयोगेऽन्यस्य प्रयोगोऽत्र विकारः, तदुपपत्तेर्वर्णविकाराः=आदेशेषु वर्णविकारव्यपदेशा उपपद्यन्त इत्यर्थः।

**न** खल्वत्र प्रकृत्यन्वयपूर्वकः पूर्वव्यूहनिवृत्त्या व्यूहान्तरोपजनो विकारशब्दार्थो विवक्षितः, **अपि च?** स्थान्यादेशभावादेकस्याप्रयोगेऽन्यस्य प्रयोगः। सचादेशपक्षेऽपि गुणान्तरापत्त्यादितः सम्यगुपपद्यते न त्विहास्ति काचनानुपपत्तिः। तस्मादुपपन्नास्तावदादेशेष्वेव वर्णविकारव्यपदेशा इति भावः॥

**तत्र** धर्मिणि सत्येव धर्मान्तरापत्तिः **"गुणान्तरापत्तिः"** यथा दध्ना, दध्न इत्यत्रानुदात्तस्योदात्तः, अत्र ह्यनुदात्तः सुबुदात्तस्यानङो लोपस्य हेतुत्वादुदात्तः। धर्मिनिवृत्तौ धर्म्यन्तरप्रयोगः **"उपमर्दः"** यथाऽस्तेर्भूः। दीर्घस्य ह्रस्वः **"ह्रासः"** यथा श्रीपम्, निरियात्। ह्रस्वस्य दीर्घो **"वृद्धिः"** यथाऽचीकमत। लाघवं **"लेशः"** यथा "स्तः" इत्यत्रास्तेरकारस्य लोपे सकारमात्रस्य लेशस्य=एकदेशस्य व्यवस्थापनम्। प्रकृते वा

प्रत्ययस्य वाऽऽगमः "श्लेषः" यथा संस्कर्त्ता, सखीनाम् । अत्र च केवलस्याप्रयोगे विशिष्टस्य प्रयोगाद् विकारसामान्यलक्षणोपपत्तिरिति विवेकः ॥ ५४ ॥

अनित्याः वर्णा इति निरूपितम्। **सम्प्रति** शब्दप्रामाण्योपयोगि **पदं** निरूपयति—

**"ते विभक्त्यन्ताः पदम्" ॥ ५५ ॥**

ते=गुणान्तरापत्त्यादिभिरादेशरूपेण विकारव्यपदेशभाजो वर्णाः विभक्त्यन्ताः=सुप्तिङ्लक्षणविभक्त्यन्ताः सन्तः पदं=पदसंज्ञकाः भवन्तीत्यर्थः।

**विभक्तिस्तावद्** द्वयी नामिक्याख्यातिकी च । नामिकी सुबिति नाम्ना, आख्यातिकी च तिङिति नाम्ना व्यपदिश्यते। सेयमन्ते येषां वर्णानां विद्यते ते पदमिति संज्ञां भजन्ते। तद्यथोक्तं भगवता पाणिनिनाऽपि **"सुप्तिङन्तं पदम्"** (अष्टा० १।४।१४) इति। **तथा च** द्वेधा पदं नामचाख्यातं च। सुबन्तं नाम, तिङन्तं चाख्यातम्। उपसर्गनिपातास्तु नाम्ना सङ्गृहीताः **"अव्ययादाप्सुपः"** (अष्टा० २।४।८२) इति तेषामपि सुबन्तत्वाभ्युपगमात्। **"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश"** ( ऋ० ३।९।१०।३ ) **"चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः, गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति"** ( ऋ० २।३।२२।४५ ) इति मन्त्रद्वयमुदाहृत्य **"चत्वारि शृङ्गाणि, चत्वारि वाक्परिमिता पदानि=चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च"** इति महाभाष्यकृद्व्याख्यानं **"शास्त्रान्तरे चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च"** इति यास्कानुवादश्चावान्तरभेदाभिप्रायात्। अतो न कश्चिद्दोष इति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि वर्णानां क्षणिकतयोत्तरोत्तरवर्णेन पूर्वपूर्ववर्णविनाशादेकदाऽनेकवर्णानुभवासम्भवान्न तत्समूहगोचरः पदप्रत्यय उत्प-

तुमर्हति तथापि पूर्वपूर्ववर्णाननुगृह्यान्तिमवर्णश्रवणवेलायां पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतेनान्तिमवर्णसम्बद्धेन पदव्युत्पादनसमयग्रहणानुगृहीतेन श्रोत्रेण वर्णसमूहगोचरः पदप्रत्ययो जनयितुं पार्य्यते, पूर्वानुभवजनितसंस्कारसहकृतेन चक्षुषा तद्देशकालविशिष्टदेवदत्तगोचरप्रत्यभिज्ञाप्रत्ययवदिति ॥ ५५ ॥

पदं निरूपितं, पदार्थं निरूपयिष्यन् पूर्वं तावत् संशयमाह—

"व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः" ॥ ५६ ॥

संशयः=किं व्यक्तिः पदार्थ आहोस्विदाकृतिरुत जातिरथवा त्रितयमिति संशयः, कुतः? व्यक्त्याकृतिजातिसन्निधौ=व्यक्तिश्चाकृतिश्च जातिश्च तास्तथा तासां सन्निधौ समीपतायाम् अविनाभवेन वृत्तौ सत्यामुपचारात्=गौणप्रयोग उपचारः, अत्र प्रयोगमात्रं लक्ष्यते, तस्मात्—गौरिति पदप्रयोगादित्यर्थः।

का व्यक्तिः केयमाकृतिः काच जातिरिति स्वयमग्रे वक्ष्यति। चेदिमास्तिस्रः पदार्थो न भवेयुः तदा न जात्वासु पदं प्रयुज्येत। नहि यस्य पदस्य योऽर्थो न भवति तत् तत्र प्रयोक्तुं शक्यते। लोके सर्वत्र पदपदार्थसम्बन्धाधिगमे सत्येव पदप्रयुक्तिदर्शनात्। प्रयुज्यते चाविनाभावेन वर्तमानासु तिसृष्वपि व्यक्त्याकृतिजातिषु गौरिति पदम्। अतो भवति संशयः किं त्रितयं पदार्थ आहोस्विदन्यतम इति। किमुक्तं? व्यक्तिरेव पदार्थ इति केचित्। आकृतिरित्यपरे। जातिरित्यन्ये। व्यक्त्याकृतिविशिष्टा जातिरिति वैदिकाः। तदेवं वादिनां विप्रतिपत्तेः पदानां च व्यक्त्याकृतिजातिषु तिसृषु प्रयुक्तेर्भवति संशयः किं व्यक्तिः पदार्थः आहोस्विदाकृतिरुत जातिरथवा त्रितयमिति भावः॥

तत्र गवादिद्रव्यं "व्यक्तिः" तदवयवसन्निवेशविशेष "आकृतिः" गोत्वादिकं च तद्भावो "जातिः" इति विवेकः॥ ५६ ॥

अत्र व्यक्तिपदार्थवादी प्रत्यवतिष्ठते—

**"याशब्द-समूह-त्याग-परिग्रह-संख्या-वृद्ध्यपचय-वर्ण-समासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः" ॥ ५७ ॥**

व्यक्तिः=व्यक्तिः पदार्थः, **कुतः ?** याशब्दसमूहत्यागपरिग्रहसंख्या-वृद्ध्यपचयवर्णसमासानुबन्धानां=याशब्दश्च समूहश्च त्यागश्च परिग्रहश्च संख्या च वृद्धिश्चापचयश्च वर्णश्च समासश्चानुबन्धश्च ते तथा, तेषां याशब्दप्रभृतीनां व्यक्तौ=व्यक्तावेवोपचारात्=विशिष्टेन सामान्यं लक्षयति, प्रयोगादित्यर्थः ।

**पदार्थो** हि प्रयोगसामर्थ्यादवधार्य्यते । **यस्य** पदस्य यत्रार्थे प्रयोगः **तस्य** स एवार्थ इति निर्णयात् । न च याशब्दप्रभृतीनामाकृतौ वा जातौ वाऽस्ति प्रयोगसामर्थ्यम् । तयोर्निष्क्रियत्वेन तदसमर्थत्वात् । नहि निष्क्रिये तावदाकृतिजाती स्थातुं वा निषत्तुं वा कथञ्चिदर्हतः । व्यक्तिस्तु नैतादृशी । सा हि सक्रियत्वादर्हति स्थातुं निषत्तुं च । तस्मात् ते तत्र प्रयोक्तुं शक्यन्ते । तेषां तत्र प्रयोगाच्च भवत्यनुमानं व्यक्तिरेव पदार्थो नाकृतिर्न वा जातिरिति भावः ॥

**तत्र** "यापदघटितं वाक्यं **याशब्दः** "या गौस्तिष्ठति या गौर्निषण्णा" इति तदुदाहरणम् । **अनेन** हि गोपदाभिधेयस्य तिष्ठत्यादिना योगोऽभिधीयते । नचाक्रिययोर्जात्याकृत्योस्तद्योगः सम्भवति । यस्य चानेन योगस्तमेव गोशब्दोऽभिधातुमर्हति । विशेषणविशेष्यभावस्यैकविषयत्वनियमात् । **यदि** गोशब्दस्य तिष्ठत्यादिशब्दस्य चैकमभिधेयं न स्यात् **तदा** गोशब्देन धर्म्यन्तराणि तिष्ठत्यादिशब्देन च क्रियान्तराणि न निराक्रियेरन् **नचा** विशेषणविशेष्यभावापन्नयोस्तयोः सामानाधिकरण्यं युज्येत । विद्यते च तिष्ठत्यादिशब्देन विशेषणेन गोशब्दस्य विशेष्यस्य सामानाधिकरण्यम् । अतोऽवगम्यते गोशब्देन द्रव्यभेदो व्यक्तिरभिधीयते नाकृतिर्न वा जातिः । १ । **समूहः** समुदायः "गवां समूहः" इति तदुदाहरणम् । जात्याकृत्योः समूहस्य बाधाद् गोशब्दस्य व्यक्तिरर्थः । २ ।

**त्याग** उत्सर्गः स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनमिति यावत्, "विप्राय गां ददाति" इति तदुदाहरणम्। नचाकृतेर्वा जातेर्वा त्यागो युज्यते। **अपि च**? द्रव्यस्य। तेन द्रव्यमर्थः। एवमग्रेऽप्यूह्यम्। ३। उत्सृष्टस्य सादरं स्वीकारः स्वत्वेनाभिसम्बन्ध इति यावत् **परिग्रहः**, "गां प्रतिगृह्णाति" इति तदुदाहरणम्। ४। एकत्वादिव्यवहारहेतुगणना **संख्या** "दश गावः, विंशतिर्गावः" इति तदुदाहरणम्। ५। कारणवतो द्रव्यस्यावयवोपचयो **वृद्धिः** "अवर्द्धत गौः" इति तदुदाहरणम्। ६। वृद्धिविपर्य्ययः कार्श्य-मिति यावद् **अपचयः** "गौरकृश्यत्" इति तदुदाहरणम्। ७। शुक्लादि-रूपं **वर्णः** "शुक्ला गौः, कपिला गौः" इति तदुदाहरणम्। ८। सम्य-गुपवेशनं **समासः** "समास्ते गौः" इति तदुदाहरणम्। ९। प्रकृता-नुवर्तनं सरूपप्रजननसन्तान इति यावद् **अनुबन्धः** "गौर्गां जनयतीति तदुदाहरणम्। १०। इति विवेकः॥ ५७॥

निराचष्टे—

**"न तदनवस्थानात्" ॥ ५८ ॥**

याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानामित्यनु-वर्तते। न=यदुक्तं तन्न, **कुतः**? तदनवस्थानात्=तच्छब्देन व्यक्तिं परामृशति। याशब्दादीनां तत्र व्यक्तावनवस्थानं व्यवस्थितिस्तदभावा-दित्यर्थः।

**चेत्** प्रयुज्यमानाः याशब्दप्रभृतयो व्यक्तिमात्रे व्यवतिष्ठेरन् **तदा** स्याद् गवादिपदानां व्यक्तिरर्थः। नच ते तन्मात्रे व्यवस्थातुमर्हन्ति। तस्य तिष्ठत्यादिना सम्बन्धासम्भवात्। नहि "या गौस्तिष्ठति या गौर्नि-षण्णा" इत्यादिशब्दप्रयोगाद् "या काचिद् व्यक्तिस्तिष्ठति, या काचिद् व्यक्तिर्निषण्णा" इत्यादिबुद्धिरुदयमासादयति। "गोत्वविशिष्टा व्यक्तिस्तिष्ठति गोत्वविशिष्टा व्यक्तिर्निषण्णा" इत्यादिबुद्धावुदयमासादयन्त्यां तु कथं तेन तत्सम्बन्धः सम्भवेत्। कथं वा तेषां तन्मात्रे व्यवस्थानं कल्प्येत। प्रत्ययधवपृष्टभावेन चलति खलु कल्पनावधूः। विशिष्टगोचरश्चेह प्रत्ययो

न व्यक्तिमात्रगोचरः । **किमुक्तं ?** चेद् गवादिशब्दानां केवलं व्यक्तिरर्थोऽभविष्यत् **तदा** प्रयोगनियमः प्रतिपत्तिनियमश्च नोपालप्स्यत । तदुभयनियमश्चोपलभ्यते । नहि प्रयोक्तारो यस्यां कस्यां चिद् व्यक्तौ गोशब्दं प्रयुञ्जते । प्रतिपत्तारो वा प्रयुक्तात्तस्माद् यां काञ्चिद् व्यक्तिं प्रतिपद्यन्ते । गोत्वविशिष्टव्यक्तौ नियमेन प्रयोगे प्रतिपत्तौ च न तेषां केवलं व्यक्तिरर्थः कल्पयितुं शक्यते । **अपि तु ?** गोत्वविशिष्टा व्यक्तिः । न च जात्याकृत्योर्निष्क्रियत्वेन तिष्ठत्यादियोगासम्भवः । तयोः साक्षात् तद्योगासम्भवेऽपि व्यक्त्या तद्योगसम्भवात् । "**श्येनचितं चिन्वीत**" इत्यादौ जातेरपि क्रियायोगदर्शनाच्च । नह्यत्रेष्टकाचयनेन श्येनव्यक्तिरभिनिर्वर्तयितुं विधीयते । **अपि तु ?** तत्सदृशोऽग्निः । "**कर्मण्यग्न्याख्यायाम्**" ( अष्टा० ३।२।९२ ) इति पाणिनिस्मरणात् । नच जातिं विना व्यक्त्या सादृश्यं सम्पादयितुं शक्यते । व्यक्त्यन्तरवैसादृश्यस्यापि सम्भवात् । यो ह्येकया व्यक्त्या सदृशः सोऽन्यया विसदृशो भवत्येव । जात्या सादृश्यसम्पत्तौ च सम्भवति तस्याः क्रियायोगः । "**अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति**" "**अभिक्रामं जुहोति**" इत्यादावमूर्त्तानामपि गुणकर्मणां क्रियायोगाभ्युपगमात् । उक्तं च पूर्वमीमांसायामपि "**अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्**" ( अ० ३।१।१२ ) इति । **तथा च** गवादिपदानां न व्यक्तिमात्रमर्थ इति सिद्धमिति भावः ॥ ५८ ॥

**ननु** व्यक्तिमात्रार्थत्वाभावे तत्र तेषां प्रयोगो न स्यात्, दृश्यते च क्वचिद् गौर्गच्छतीत्यादौ तन्मात्रेऽपि तत्प्रयोगः ? तत्राह—

**"सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः" ॥५९॥**

यथा तथेति शेषः । ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेषु=वैदिकधर्मोपदेशकोऽत्र **ब्राह्मणः**, मञ्चस्थो **मञ्चः**, वीरणं **कटः**, गङ्गानिकटो देशः **गङ्गा**, वस्त्रं **शाटकः**, प्राणोऽन्नम्, ब्राह्मणश्च मञ्चश्च कटश्च राजा च सक्तुश्च चन्दनञ्च गङ्गा च शाटकश्चान्नञ्च पुरुषश्च ते तथा, तेषु ब्राह्मणमञ्चप्रभृतिषु सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यः=**सहचरणं** साहचर्य्यम्, अविनाभावसम्बन्ध इति यावत्, **स्थानं** स्थितिः, तदर्थत्वं **तादर्थ्यं**, हितप्रवर्त्तनादिचरित्रं **वृत्तं**, **मानं** परिमाणं, **धारणं** धृतिः, **सामीप्यं** नैकट्यं, गुणप्रभृतियोगो **योगः**, **साधनं** हेतुः, **आधिपत्यं** स्वाम्यम्, सहचरणञ्च स्थानञ्च तादर्थ्यञ्च वृत्तञ्च मानञ्च धारणञ्च सामीप्यञ्च योगश्च साधनञ्चाधिपत्यञ्च तानि तथा, तेभ्यः सहचरणादिभ्योऽतद्भावेऽपि=ब्राह्मणाद्यर्थत्वाभावेऽपि **यथा** ब्रह्मदण्डादिपदोपचारः **तथा** तदुपचारः=व्यक्तिमात्रार्थत्वाभावेऽपि तन्मात्रे तेषां गवादिपदानामुपचार औपचारिकः प्रयोग इत्यर्थः ।

यथा हि "**पूर्वं ब्रह्मदण्डानि भोजय**" इत्यत्र ब्रह्मदण्डशब्दस्य(१) ब्रह्मदण्डधरब्राह्मणार्थत्वाभावेऽपि **सहचरणाद्** वैदिकधर्मोपदेष्टरि ब्रह्मदण्डधरे ब्राह्मणे "**मञ्चाः क्रोशन्ति**" इत्यत्र मञ्चपदस्य मञ्चस्थपुरुषार्थत्वाभावेऽपि **स्थानात्** मञ्चस्थे "**कटमानय**" इत्यत्र कटपदस्य वीरणार्थत्वाभावेऽपि **तादर्थ्यात्** वीरणे "**यमो राजा, कुबेरो राजा**" इत्यत्र यमकुबेरपदयो राजार्थत्वाभावेऽपि **वृत्ताद्** राजनि "**आढकं सक्तवः**" इत्यत्राढकपदस्य सक्त्वर्थत्वाभावेऽपि **मानात्** सक्तुषु "**तुला चन्दनम्**" इत्यत्र तुलापदस्य चन्दनार्थत्वाभावेऽपि **धारणाद्** चन्दने "**गङ्गायां गावश्चरन्ति**" इत्यत्र गङ्गापदस्य देशार्थत्वाभावेऽपि **सामीप्याद्** गङ्गानिकटदेशे "**कृष्णः शाटकः**" इत्यत्र कृष्णपदस्य कृष्णरूपवच्छाटकार्थत्वाभावेऽपि **योगात्** कृष्णरूप-

---

१. ओम् ब्रह्म, तद्युक्तं दण्डं ब्रह्मदण्डं, तद्वाचिशब्दः ब्रह्मदण्डशब्दस्तस्य ।

वति शाटके द्रव्ये **"अन्नं प्राणः"** इत्यत्रान्नपदस्य प्राणार्थत्वाभावेऽपि **साधनात्** प्राणे **"अयं पुरुषः कुलम्, अयं गोत्रम्"** इत्यत्र कुल-गोत्रपदयोः पुरुषार्थत्वाभावेऽप्याधिपत्यात् पुरुषे चौपचारिकः प्रयोगः **तथा** गवादिपदानां व्यक्तिमात्रार्थत्वाभावेऽपि व्यक्तिमात्रे **योगादौ**पचारिकः प्रयोगः । **किमुक्तं ?** तदा हि गवादीनि पदानि व्यक्तिमात्रार्थत्वाभावेऽपि व्यक्तिमात्रे न प्रयुज्येरन् **चेत्** तेषां **शक्तिरे**वैका वृत्तिः स्यात् । अस्ति च तेषां तत्सहचारिणी बहुपरिवारा **लक्षणा**नाम्नी द्वितीयाऽपि वृत्तिः । **सा** च सर्वत्र तात्पर्य्यान्यथानुपपत्त्या लब्धावकाशा पदं परिगृह्य स्वसहचारिणीसाहाय्येनापदार्थेऽपि पदार्थवत् संयुनक्ति । **तात्पर्य्यं** च तदितरप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वम् । अनया च पदप्रयोगे क्वचित् **सहचरणं** क्वचित् **स्थानं** क्वचित् **तादर्थ्यं** क्वचिद् **वृत्तं** क्वचिद् **मानं** क्वचिद् **धारणं** क्वचित् **सामीप्यं** क्वचिद् **योगः** क्वचित् **साधनं** क्वचिदाधिपत्यमिति दश निमित्तानि भवन्ति । तेषाम् **"अपाम सोमममृता अभूम"** ( ऋ० ६।४।११।३ ) इत्यत्र **"सोम"** पदस्य सोमयज्ञे **"अपाम"** पदस्य च तदनुष्ठाने प्रयोगः **सहचरणात्** । अस्ति ब्रह्मदण्डस्येव ब्रह्मदण्डधरेण वैदिकधर्मोपदेशकेन सोमस्य तत्पानस्य च सोमयज्ञेन नियतं साहचर्य्यम् । यथाविध्यनुष्ठिते हि तस्मिन् शुद्धमरुदन्नपानेन सर्वेऽमृताः भवन्ति । सोमप्रभृतीनामौषधीनां यस्मिन् यज्ञे रसाः हूयन्ते तं यज्ञविदः **"सोमयज्ञम्"** इत्याचक्षते । स च सप्तसंस्थ इत्यन्यत्र विस्तरः ।

**"एतेन योगः प्रत्युक्तः"** ( वेदा० २।१।३ ) इत्यत्र योगपदस्य योगस्थविरोधार्थत्वाभावेऽपि योगस्थविरोधे प्रयोगः **स्थानात्** । अस्ति पुरुषस्य मञ्च इव योगोऽपि वेदान्तानां विरोधस्य परिकल्पितं स्थानम् । तथा च **"एतेन**=सांख्यस्मृतिविरोधप्रत्याख्यानेन **योगः**=योगस्मृतिविरोधोऽपि **प्रत्युक्तः**=प्रत्याख्यातो वेदितव्यः" इति सूत्रार्थो निष्पन्नः । युक्तश्चायमेवार्थः । द्वितीयेऽस्मिन्नविरोधाध्याये स्मृतिपादे

स्मृतिविरोधप्रत्याख्यानस्यैवाचार्य्याभिप्रेतत्वात्। कथमन्यथा "**अविरोधाध्यायः**" इति समाख्यायेत। विरोधपरिहारार्थं ह्येष द्वितीयोऽध्यायः आरभ्यते न विरोधसम्पादनार्थम्। स च योगपदस्य योगविरोधेऽर्थे लक्षणया प्रयोगानभ्युपगमे न कथञ्चित् परिहर्तुं शक्यते। **तस्माद्** युक्तः तस्य तत्र लक्षणया प्रयोगः, नितरां युक्तश्च सूत्रार्थः। नचेह "**एतेन**=सांख्यस्मृतिप्रत्याख्यानेन **योगः**=योगस्मृतिरपि **प्रत्युक्तः**=प्रत्याख्याता द्रष्टव्या" इति **शाङ्करी** सरणिः साध्वी। तस्याः विरोधसम्पादकत्वेन जघन्यत्वात्। अनया हि विरोधः सम्पाद्यते नतु परिह्रियते। परिहारार्थं चारम्भः। **तस्मादनुपादेया** वैदिकैः। "**रामानुज**" प्रभृतयस्तु सर्वेऽत्र शङ्करपादानामनुचराः, अतः किन्नस्तदुक्तिव्यक्त्या।

"**स आत्मा तत्त्वमसि श्वेतकेतो!**" (छान्दो० ६।८।७) इत्यत्र तत्पदस्यापि तन्निष्ठे प्रयोगः **स्यानात्**। अत्र हि मञ्चपदं मञ्चस्थमिव तत्पदं तन्निष्ठमाह। मोक्षयितव्यस्य श्वेतकेतोर्मोक्षोपाये वक्तव्ये पूर्वं ब्रह्मनिष्ठाया एव तदुपायत्वेनोपस्थितत्वात्। नहि साधनचतुष्टयसम्पन्नस्य मुमुक्षोर्ब्रह्मनिष्ठां विहाय भवति कश्चिदन्यो मोक्षस्योपायः। अविवेकानां प्रकृतिनिष्ठया प्रकृतिदर्शनवद् विवेकिनां ब्रह्मनिष्ठया ब्रह्मदर्शनस्याप्यवश्यम्भावात्। **अत** एवाम्नातं छान्दोग्योपनिषदि "**ब्रह्मसंस्थोऽमृतत्वमेति**" (२।२३।१) इति। ब्रह्मसंस्थः ब्रह्मनिष्ठः। निष्ठा च सर्वव्यापारपरित्यागेनानन्यचित्ततया ब्रह्मणः प्रणिधानम्। न चोद्दालकस्य पितुः श्वेतकेतुं पुत्रं प्रति तां विहायान्यः कश्चिदुपदेशः सम्भवति। स हि गुरुर्भूत्वा तमुपदिशति। गुरुणा च ब्रह्मनिष्ठेनावश्यं भवितव्यम्। अन्यथा तस्य तद्भावानुपपत्तेः। अत एव विशिनष्टि भगवती मौण्डिकी श्रुतिः "**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्**" (मुं० २।१२) इति। यश्च स्वयं ब्रह्मनिष्ठो ब्रह्मनिष्ठां च तद्विज्ञानसाधनं मन्यते स कथं शिष्यभावेनोपसन्नं श्वेतकेतुं न तामुपदिशेत्। नहि स्वयं ब्रह्मनिष्ठस्तद्विज्ञानार्थिनं शिष्यं तद् ब्रह्म त्वमसीति कथञ्चिदुपदेष्टुमर्हति। ब्रह्मनिष्ठायास्तद्विज्ञानसाधनत्वं च "**तद्विज्ञानार्थम्**"

इति श्रुत्युक्त्यैवावगम्यते । **तस्माद्** भवति प्रतिपत्तिर्नूनमस्यात्र तन्निष्ठाभिप्रायेण तत्पदप्रयोग इति । **समिधो यजति, तनूनपातं यजति**" (शतप० १।५।४।१) इत्यादौ "**यजति**"वत् "**असि**" इति च लेटो रूपम्। "**लेटोऽडाटौ**" (अष्टा० ३।४।९४) इति विहितस्याटो विकल्पोपपत्तेः । तद्यथाऽऽह "**षष्ठीयुक्तश्छन्दसि वा**" (अष्टा० १।४।९) इति सूत्रे "**वा**" इति योगं विभज्य भगवान् भाष्यकारः "**वा छन्दसि सर्वे विधयो भवन्ति**" इति। यावदिह शास्त्रे कार्य्यं तच्छन्दसि वा भवतीति तदर्थः । **तथा च** यत् सत् सर्वासु प्रजास्वन्तर्यामिरूपेणानुस्यूतं न केनचित्परिच्छिद्यते स आत्मा, **यत्रेदमाम्नातं** "**तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निरग्नेरापः, अद्भ्यः पृथिवी**" (तै० २।१) इति । **तन्निष्ठस्त्वं भव श्वेतकेतो!** इति वाक्यार्थः । नचैष स्वोत्प्रेक्षितोऽर्थः । परमोदारचरितेनर्षिणा श्वेतकेतुं पुत्रं प्रति तद्भ्रमापनोदनार्थं चरमपर्यायेऽ**नृताभिसन्धस्य**=प्रकृतिनिष्ठस्य पुनः पुनर्जन्ममरणप्रबन्धलक्षणं संसारं **सत्याभिसन्धस्य**=ब्रह्मनिष्ठस्य संसारनिवृत्तिलक्षणं मोक्षं च निदर्शनपूर्वकमुपदिशता स्वयमेव सम्यगुपवर्णितत्वात् । **अतएव** चैतं ब्रह्मणो जगदुपादानत्वं निराकुर्वन् सिद्धवदुपन्यस्यति भगवान् बादरायणः "**तन्निष्ठस्य मोक्षोपदेशात्**" (वै० १।१।७) इति। व्याचष्टे च तं तथैव परमो वशी भगवान् **शङ्कराचार्य्योऽपि** "**स आत्मा इति प्रकृतं सदणिमानमादाय तत्त्वमसि श्वेतकेतो! इति चेतनस्य श्वेतकेतोर्मोक्षयितव्यस्य तन्निष्ठामुपदिश्य "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये**" (छां० ६।१४।२) इति **मोक्षोपदेशात्**" इति । यत्र चोपनिषदां व्यवस्थापयिता भगवान् **बादरायणोऽ**नुकूलः, यं च भगवान् **शङ्कराचार्य्योऽपि** तदनुगामित्वचिख्यापयिषामन्त्रेण भोगीव निरुद्धवीर्य्यः खलु मुक्तकण्ठोऽभिधत्ते, कस्तमेतं मामकीनमर्थमपवदितुं पारयते, को वाऽसम्यगिति भाषितुं समर्थयते ।

यथा चैष एवार्थः सर्वशास्त्रानुकूलत्वात् समीचीनो न **"तद् ब्रह्म त्वमसि"** इति शङ्करीयो वा रामानुजीयो वा, तथा वयं **"वेदान्तसूत्रवैदिकवृत्तौ"** निपुणतरमभिधास्याम इति कृतमिह तद्विस्तरेण ।

**"भो आर्य्यवर्य्य! गुरुकुलं देयम्"** इत्यत्र गुरुकुलपदस्य गुरुकुलार्थदेये धने प्रयोगस्तादर्थ्यात् । **"हंसो राजा मनीषी राजा"** इत्यत्र हंसमनीषिपदयो राजनि प्रयोगो **वृत्ताद्** । अस्ति यदेव हिताहितप्रवर्तननिवर्तनादिकं **"गायकवाड़स्य"** राज्ञो वृत्तं, तदेव हंसस्य मनीषिणश्च । **"गुरुकुलब्रह्मचारिभ्यः प्रतिदिनं प्रस्थः प्रस्थः शालितण्डुलाः पच्यन्ते"** इत्यत्र प्रस्थपरिमितेषु शालितण्डुलेषु प्रस्थप्रयोगो **मानात्** । गुरुकुलब्रह्मचारिणमायन्तं पश्यन्नाह **"ब्रह्मागच्छति"** इत्यत्र ब्रह्मपदस्य ब्रह्मचारिणि प्रयोगो **धारणात्** । तेन हि यावत्समावर्तनं गर्भ इव गर्भिणीभिर्यथाशास्त्रं **ब्रह्म** धार्य्यते । यत्रेदमाम्नातम् **"पृथक् सर्वे प्राजापत्याः प्राणानात्मसु बिभ्रति, तान् सर्वान् ब्रह्म रक्षति ब्रह्मचारिण्याभृतम्"** (अथर्व० ११।३।५। २२) इति । क्व भो? भारतवर्षोद्धारकाणां ब्रह्मचारिणामस्ति पुण्यं क्षेत्रं यन्नाम गुरुकुलमिति पृष्ट आह **"गङ्गायाम्"** इत्यत्र गङ्गापदस्य गङ्गाप्रान्तप्रदेशे प्रयोगः **सामीप्यात्** । अस्ति चानुगङ्गं गुरुकुलमिति सर्वजनीनम् । विद्वांसमागच्छन्तमाहुः **"विद्येयमागच्छति"** इत्यत्र विद्यापदस्य विदुषि प्रयोगो **योगात्** । अस्ति तस्य भगवतस्तादृग्विद्यायोगः, यया हि देशात्मोद्धारो द्रागित्येव सम्भाव्यते । कतमत् स्वराज्यमिति पृष्ट आह **"समाजः"** इत्यत्र समाजपदस्य स्वराज्ये प्रयोगः **साधनात्** । समाज एव हि स्वराज्यसाधनम् । यत्रेदमुक्तं भवति—

**संहताः किं न कुर्वन्ति किं तेषामस्त्यसम्भवम् ।**
**ऐहिकामुष्मिकं राज्यं संहतेषु व्यवस्थितम् ॥ १ ॥** इति ।

समाजोपदेशश्च भगवति वेदेऽपि दृश्यते

**सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्**

**देवा भागं यथा पूर्वे सञ्जानाना उपासते** (ऋ० ८।८।४९।२) इति। सङ्गच्छध्वमिति कायेन, संवदध्वमिति वाचा, संवो मनाँसि जानतामिति मनसा मुखबाहूरुपादानां चतुर्णामैक्योपदेशः। अन्यत्र तथैवोपदेशदर्शनात्। तथाहि—

**रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि**

**रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्** (यजु० १८।४८) इति। स्वराज्यसाधनं तेजो रुचम्। **यथा** पूर्वे देवाः=विद्वांसः कायेन वाचा मनसा सर्वशः सङ्गत्य भागम्=इदं मया कर्तव्यम्, इदं त्वया कर्तव्यमिति स्वस्वकर्तव्यभागं जानानाः=प्रतिजानानाः समुपासते=समुपासत **तथा** यूयमपि सङ्गच्छध्वमिति प्रथममन्त्रार्थः।

**सहृदयं सांमनस्यमविद्वेषं कृणोमि वः**
**अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या ॥ १ ॥**

**अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः**
**जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ॥ २ ॥**

**मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा**
**सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ ३ ॥**

**समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो**
**युनज्मि, सम्यञ्चोऽग्निं सपर्य्यतारा नाभिमिवाभितः॥४॥**

(अथर्व० ३।६।३।० ] इति। न चोपदेशोऽयं कथञ्चिदननुष्ठेयो वैदिकानाम्। अतोऽविलम्बेनात्र भवितव्यम्।

समाजाधिपतिमागच्छन्तमालोक्य कोऽयमागन्तेति पृष्ट आह **"समाजः"** इत्यत्र च समाजपदस्य समाजाधिपतौ प्रयोग **आधिपत्याद्**

यथा भवति, तथैव गवादिपदानां व्यक्तिमात्रे प्रयोगो योगादवगन्तव्यः । अस्ति रूपस्येव द्रव्येण गोत्वादेरपि व्यक्तिभिर्योग इति भावः ॥ ५९ ॥

आकृतिशक्तिवादिनमुत्थापयति—

"आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः" ॥ ६० ॥

आकृतिः=आकृतिः पदार्थः, कुतः ? सत्त्वव्यवस्थानसिद्धेः=सत्त्वो गवादिप्राणी, तद्गोचरा व्यवहारव्यवस्था व्यवस्थानं, तत्सिद्धेः "इयं गौ-रयमश्वः" इत्यादिव्यवस्थितव्यवहारनिष्पत्तेस्तदपेक्षत्वात्=आकृतिज्ञानाधी-नत्वादित्यर्थः ।

सत्त्वावयवानां तदवयवानां च नियतः सन्निवेशो ह्याकृतिः । सा यावन्न ज्ञायते तावदियं गौरयमश्व इति व्यवस्थितो लोकव्यवहारो न सिध्यति । यदा च ज्ञायते तदा सिध्यति । यस्याश्च ज्ञानाज्ञानाभ्यामस्य सिद्ध्यसिद्धी, न तामुज्झित्वा शब्दः किञ्चिदन्यदभिधातुमर्हति । लोकव्यव-हारसाधनस्यैव शब्दविषयत्वौचित्यात् । नहि लोकव्यवहारसाधनं घटो घट-शब्देन नाभिधीयते । स चावयवानां सन्निवेशविशेषत्वादाकृतिः । तस्मादा-कृतिरेव पदार्थः । किमुक्तं ? गोशब्दस्तावत् केसरादिमति व्यक्तिविशेषे न प्रयुज्यते, सास्नादिमति च प्रयुज्यते । नचात्र तत्प्रयोगनिमित्तमन्त-रेणाकृतिमन्यत् किञ्चिदुपलभ्यते । व्यक्तिमात्रस्योभयत्रापि समानत्वात् । नच तद्विशेषोऽपि विनाऽऽकृतिं कथञ्चिदुपपादयितुं शक्यते । प्रत्यक्षश्चा-श्वपिण्डावयवसन्निवेशतो गोपिण्डावयवसन्निवेशवैलक्षण्यं सास्नादिमति व्यक्तिविशेषे विशेषः । नच तदभ्युपगमाभावे लोकव्यवहारव्यवस्थानमु-पपद्यते । तस्मादश्वपिण्डावयवसन्निवेशाद् विलक्षणो यो गोपिण्डावयव-सन्निवेशः, यत्कृता च सत्त्वव्यवस्थानसिद्धिः, स एवाकृतिनामभाक् शब्दा-भिधानगोचरो न जातिर्न व्यक्तिरिति भावः ॥ ६० ॥

तत्राकृतिशक्तिवादिमतं निराकुर्वन् जातिशक्तिवादिमतमुपन्यस्यति—

"व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणा-
दीनां मृद्गवके जातिः" ॥ ६१ ॥

जातिः=जातिः पदार्थः, **कुतः?** व्यक्त्याकृतियुक्तेऽपि=जात्ययोगेऽप्यर्थः, वक्ष्यमाणलक्षणाभ्यां व्यक्त्याकृतिभ्यां युक्तेऽपि मृद्गवके=मृत्तिकारचिते गवाकृतिपिण्डे प्रोक्षणादीनां=दानक्रियाङ्गानां प्रोक्षणादिकर्मणामप्रसङ्गात्=असम्बन्धादित्यर्थः ।

यत् खलु **"देवाँश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह"** ( ऋ० ४।६।२५।३ ) इत्यादिना दानलक्षणं प्रधानं कर्म विहितं, तदङ्गगवादिपदार्थोद्देशेन कानिचित् प्रोक्षणादीनि गुणकर्माणि विधीयन्ते । तल्लक्षणं तु **"यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्"** ( मी० २।१।८ ) इत्युक्तं पूर्वमीमांसायाम् । तानि च पदार्थोद्देशेन विधीयमानानि सन्त्यपि व्यक्त्याकृतियुक्ते मृद्गवके न प्रसज्यन्ते । **चेद्** व्यक्तिर्वाऽऽकृतिर्वा पदार्थः स्यात् **तदा**ऽवश्यं प्रसज्येरन् । तदुद्देशेन विधीयमानानां सति तस्मिन् प्रसक्तेरवश्यम्भावात् । अस्ति च तत्र व्यक्तिरस्तिचाकृतिः । दानवत् तत्र तदप्रसक्तौ च भवति प्रतिपत्तिर्नूनं गोत्वाभावादेव तानि तत्र न प्रसज्यन्ते । सति गोत्वे तत्प्रसक्तेरन्यत्रदर्शनात् । नच तत्र न गोत्वाभावः । "या गौर्न भवति न सा गोत्ववती यथा वडवा, अगौश्च मृद्गवकः, तस्मान्न गोत्ववान्"इति तदभावस्य साधितत्वात् । न च तर्हि प्रयोगानुपपत्तिः । चित्रादिवदाकृतिसामान्यात् तदुपपत्तेः । न च सर्वगता जातिर्यथोत्पद्यमानया गवा सम्बध्यते तथा मृद्गवकेनापीति न मृद्गवके गोत्वाभावः । जातेराकाशादिवत्सर्वगतत्वानभ्युपगमात् । नहि साऽऽकाशादिवत् सर्वत्र वर्तनात् सर्वगतेत्युच्यते, **अपिच?** स्वविषये सर्वत्र वर्तनात् । **क्वः** पुनर्गोत्वजातेः स्वो विषयः? **यत्र** गोत्वं वर्तते । **क्व** पुनर्गोत्वं वर्तते? । **यत्र** गोत्वनिमित्तो गौर्गौरित्यनुवृत्तप्रत्ययो भवति । क्व पुनरेषोऽनुवृत्तप्रत्ययो भवति? । **सास्नादिमति** पिण्ड इति ब्रूमः । तस्यैव तदभिव्यक्तिहेतुत्वाभ्युपगमात् । **न च** सास्नादिमति पिण्डे गोत्वजातिनिमित्तो नानुवृत्तप्रत्ययः, **अपि च?** यच्छिरःपाणिपादाकृतिसा-

मान्यं तन्निमित्त इति **वाच्यम्** । पिण्डवदाकृतेरप्यसाधारणत्वात् । यथा हि पिण्डः पिण्डान्तरवर्ती न भवति तथाऽऽकृतिरप्येकपिण्डवर्त्तिनीत्वात् पिण्डान्तरवर्त्तिनी न भवति, कुतस्ततोऽनुवृत्तप्रत्ययः स्यात् । नह्यसति सामान्ये समानप्रत्यय उत्पत्तुमर्हति । सामान्यविशेषसमवायेषु चानेकार्थसमवायसामान्यात् समानप्रत्यय इति न कश्चिद्दोषः । **ननु** किमिदं गोत्वं प्रत्येकं पिण्डेषु कार्त्स्न्येन वर्तते, अथवैकदेशेन? । **कार्त्स्न्येन** चेत् **तदा** पिण्डवदसाधारणत्वान्न सामान्यं स्यात् । एकदेशेन चेत् **तदा** नैकमनैकत्र वर्तते किन्त्वनेकमनेकत्रेति प्रसज्येत । सावयवं च तदापद्येत । निरवयवं त्वभ्युपगम्यते । पिण्डवत् प्रत्येकं देशेषु वर्तमानं सामान्यं किं सामस्त्येन वर्तते, आहोस्विदेकदेशेनेति विकल्पे च पुनः पूर्ववत् प्रसङ्गः । **अथ** न तद् देशेषु वर्तते **तदा** न ते तद्देशा भवेयुः । अतद्देशत्वे च न तदेकदेशेनापि पिण्डेषु वर्ततेत्यसामान्यं गोत्वमिति **चेन्न** । अनभ्युपगमात् प्रश्नानुपपत्तेः । तदा ह्येष प्रश्न उपपद्येत "गोत्वं किं प्रत्येकं पिण्डेषु कार्त्स्न्येन वर्ततेऽथवैकदेशेन" इति, चेदवयवी वाऽवयवसमुदायो वा गोत्वमभ्युपगम्येत । नच तत् तथाऽभ्युपगम्यते । तदनभ्युपगमे चावयवानपेक्ष्य प्रयुज्यमानौ कृत्स्नैकदेशशब्दौ न तत्र प्रयोक्तुं शक्येते । नहि यद् यत्र न वर्तते तच्छब्दस्तत्र कथञ्चित्प्रयुज्यते । तस्मादयुक्तोऽयं प्रश्नः । गोत्वं च गोष्वाश्रयाश्रयिभावेन समवायेन वर्तमानमनुवृत्तप्रत्ययहेतुत्वात् सामान्यमुपपद्यते । **तद्**भावाच्चेन्मृद्गवके प्रोक्षणादीनामप्रसक्तिरन्यत्र च तद्भावात् प्रसक्तिः **तदा** स एव पदार्थो न व्यक्तिर्न वाऽऽकृतिः । **किमुक्तं ?** व्यक्तौ चाकृतौ च सत्यामपि जातेरसत्त्वात् मृद्गवके प्रोक्षणादीनि न प्रयुज्यन्ते । तत्सत्त्वाच्चान्यत्र प्रयुज्यमानानि दृश्यन्ते । प्रयोग एव च शब्दार्थनिर्णयहेतुरिति सर्वतन्त्रस्थितिः । तस्मात् प्रतिपद्यते न व्यक्तिर्वाऽऽकृतिर्वा पदार्थः **अपि च ?** जातिरिति भावः ॥ ६१ ॥

दूषयति—

**"नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः"** ॥ ६२ ॥

न=यदुक्तं तन्न, कुतः ? जात्यभिव्यक्तेः=जातिनिष्ठप्रत्यक्षयोग्यतायाः जातिप्रत्यक्षज्ञप्तेरितियावदाकृतिव्यक्त्यपेक्षत्वात्=प्राधान्यसूचनायाकृतेः पूर्वनिपातः, सा हि व्यक्त्या विशेष्यमाणा जातिं लिङ्गयति, व्यक्त्याकृतिज्ञानाधीनत्वादित्यर्थः ॥

**तदा** हि केवलं जातिः पदार्थो भवेत् **चेद्** व्यक्त्याकृत्योरग्रहणेऽपि गृह्येत । न चागृह्यमाणायां व्यक्तौ चाकृतौ च सा गृह्यते । तस्माद् भवति प्रतिपत्तिर्न केवलं जातिरपि पदार्थ इति भावः ॥ ६२ ॥

**ननु** नो चेदेकाकिनी व्यक्तिराकृतिर्जातिर्वा पदार्थः, तदा कः पदार्थः ? तत्राह—

**"व्यक्त्याकृतिजातयस्तु पदार्थः" ॥ ६३ ॥**

"तु" शब्देन प्रधानाङ्गभावानियमः सूच्यते । व्यक्त्याकृतिजातयः= व्यक्तिश्चाकृतिश्च जातिश्च तास्तथा, गुणप्रधानभावेन स्थिताः व्यक्त्याकृतिजातयस्तिस्रः पदार्थः=एकवचनमेकशक्तिलाभार्थं, गवादिपदानामर्थः इत्यर्थः ।

प्रयोगप्रतिपत्तिभ्यां हि शब्दार्थनिश्चयः । न जातु स्वार्थेन व्यवहरन्तो-वृद्धाः यस्मिन्नर्थे गोशब्दं प्रयुञ्जते श्रोतारश्च ततो यमर्थं प्रतिपद्यन्ते न स शब्दार्थ इति वक्तुं शक्यते । तन्निश्चायकप्रकारान्तरासत्त्वात् । प्रयोगाश्च गवादिशब्दानां गुणप्रधानभावेन स्थितासु व्यक्त्याकृतिजातिषु तिसृषु दृश्यन्ते । प्रतिपत्तारश्च ततस्तथैव ताः प्रतिपद्यन्ते । अतस्तिस्रः एव तथाभूताः पदार्थ इति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि व्यक्त्याकृतिविशिष्टा जातिः पदार्थ इति वैदिको राद्धान्तः **"आकृतिस्तु क्रियार्थत्वात्"** (मी० १।३।३३) इति भगवता जैमिनिना व्यवस्थापितत्वात् । जातिराकृतिरिति मीमां-

सकानामनर्थान्तरम् । **तथापि** सोऽसति बाधके वेदितव्यः । **यत्र** तु कश्चिद् बाधक उपलभ्यते यथाऽन्वयानुपपत्तिर्वा तदन्यतमाभावो वा **तत्र** यथायोग्यमवगन्तव्यं, नास्त्यत्र कश्चिदाग्रहः । **"गौर्न स्प्रष्टव्यः"** इत्यादौ हि बाधकाभावाद् व्यक्त्याकृतिविशिष्टा जातिः पदार्थः । सर्वगवीषु पादस्पर्शनिषेधस्य विवक्षितत्वात् । **"गौस्तिष्ठति गौर्निषण्णा"** इत्यादौ च जातेर्मुख्यतयाऽन्वयानुपपत्त्या जात्याकृतिविशिष्टा व्यक्तिः पदार्थः । तस्या एव स्थानादिनाऽन्वयसम्भवात् । **"मृद्गवकः कर्तव्यः पिष्टकमय्यो गावः क्रियन्ताम्"** इत्यादौ तु जातेरभावाद् व्यक्तिविशिष्टाऽऽकृतिरेव पदार्थः । एवं प्रयोगान्तरेष्वपि द्रष्टव्यम् । नचैवं भवति सिद्धान्तस्य काचित् क्षतिः । तस्यासति बाधके सर्वदा सुव्यवस्थितत्वादिति ॥ ६३ ॥

**ननु** केयं व्यक्तिः ? तत्राह—

**"व्यक्तिर्गुणविशेषाश्रयो मूर्तिः"** ॥ ६४ ॥

गुणविशेषाश्रयः=रूपादिगुणविशेषाणामाश्रयो या मूर्त्तिः=मूर्च्छितावयवं परिच्छिन्नपरिमाणकं द्रव्यं सा व्यक्तिः=व्यक्तिपदवाच्येत्यर्थः ।

**यद्धि** द्रव्यं रूपादिविशेषगुणाः अध्यासते परिच्छिद्यते च, **सा** व्यक्तिः । **किमुक्तं?** रूपादयो विशेषगुणाः यामधिशेरते परिमाणं चाव्यापकं यथासम्भवमधिकुरुते **सा** द्रव्यलक्षणा मूर्त्तिर्**व्यक्तिः,** व्यज्यतेऽक्षैर्गृह्यते या सा व्यक्तिरिति तद्व्युत्पत्तेरिति भावः ॥

**इदमत्र बोध्यम्**—यद्यप्येतल्लक्षणं व्यक्तिमात्रं न व्याप्नोति द्रव्यगुणकर्मसामान्यादावव्याप्तेः, **तथापि** गवादिपदार्थत्वेनोपास्थितस्य जात्याकृत्यालिङ्गितव्यक्तिमात्रस्याभिप्रायेण लक्षणे न कश्चिद्दोष इति ॥ ६४ ॥

नन्वाकृतिः का ? तत्राह—

**"आकृतिर्जातिलिङ्गाख्या"** ॥ ६५ ॥

जातिलिङ्गाख्या=जातेर्लिङ्गं जातिलिङ्गं तदेवाख्या संज्ञा यस्याः सा तथा जातिग्रहणस्यासाधारणकारणमिति यावद् या साऽऽकृतिः=आकृति-पदवाच्येत्यर्थः ॥

**यया** हि दृष्टिपथगया गोत्वादिजातिर्लिङ्ग्यते, **किमुक्तं ?** व्यक्त्या-श्रया जातिर्यया **गृह्यते साऽऽकृतिः** । दृश्यते हि नियतसन्निवेश-विशेषाणामवयवानां ग्रहणेन गोत्वादिजातेर्ग्रहणम्, अत एव चाह **"जातेरस्त्रीविषयादयोपधात्"** (अष्टा० ४ । १ । ६३) इति सूत्रे भाष्ये जातिलक्षणमाचक्षाणो महाभाष्यकृद् **"आकृतिग्रहणा जातिः"** इति । गृह्यतेऽनेनेति ग्रहणम्, आकृतिर्ग्रहणं यस्याः साऽऽकृतिग्रहणा=अवयवसन्निवेशविशेषव्यङ्ग्येतियावज्जातिः=जातिपदार्थः इत्यर्थः । नच सत्त्वावयवानां शिरःपाण्यादीनां नियते व्यूहे गृही-तेऽपि गोत्वमनुष्यत्वादिवद् ब्राह्मणत्वादिकं गृह्यते, तस्माद् न तज्जातिः अपि च ? उपाधिरिति वैदिकाः । नच सा योनिव्यङ्ग्या नाकृतिव्यङ्ग्येति युक्तं समाधानम् । अनेकव्यञ्जककल्पनापत्तेः । "ऐत-रेय-व्यास" प्रभृतिषु चर्षिमुनिवर्य्येषु ब्राह्मणत्वसत्त्वेऽपि योनेरभावेन व्यभिचारात् । नहि तत्रास्ति ब्राह्मणाद् ब्राह्मण्यां जन्मलक्षणा योनिः । अस्ति चाद्यतनेभ्योऽपि कल्याणतमं ब्राह्मण्यं भगवच्चरणेषु तेषु । ननु कथन्तर्हि **"तेन तुल्यं क्रियाचेद्वतिः"** (अष्टा० ५।१।११५) इति सूत्रे, भाष्ये ब्राह्मण्यं निर्ब्रुवाणो महाभाष्यकृद् योनिपदमुपादत्ते **"तपः श्रुतं च योनिश्चैतद् ब्राह्मणकारकं, तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः"** इति । सत्यमुपादत्ते । तथापि ब्राह्मणत्वादिजातिरिति नास्याभिप्रायः । चेदेवमभिप्रैष्यत् तदा **"सर्वे एते शब्दाः गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्रः"** इति ब्राह्मणादिशब्दानां गुणशब्दत्वं नावदिष्यत् । न वा तपःप्रभृति ब्राह्मण्यकारणमगदिष्यत् । नहि जातु जातिशब्दाः गुणशब्दा उपपद्यन्ते । नित्यायाः जातेर्वा करणमुपपद्यते । न च

ब्राह्मणकारकेषूपादीयमानाऽपि योनिः प्राधान्यमवलम्बते। "तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः" इत्युत्तरार्द्धं "ब्राह्मणजन्मा भवन्नपि तपःश्रुताभ्यां हीनो ब्राह्मणो न भवति" इति वदता तदुपसर्जनीभावस्य स्वयमुक्तत्वात्। "नासौ परिपूर्णो ब्राह्मणो जातिलक्षणैकदेशाश्रयस्तु तत्र ब्राह्मणशब्दप्रयोगः" इति कैय्यटेनापि तथैव व्याख्यातत्वात्। स्पष्टश्चास्य जातिब्राह्मणे ब्राह्मणशब्दप्रयोगो भाक्त इत्यभिप्रायः। अनेन च "**विश्वामित्र**" प्रभृतयोऽपि परिपूर्णाः ब्राह्मणाः न जातु जातिब्राह्मणवत् केवलब्राह्मणब्रुवा इत्युपपद्यतेतराम्। यथा चैष उपाधिपक्षः सर्वशास्त्रसम्मतस्तथाऽस्माभिः "**शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि**" (वे० १।३।२८) इत्यत्र सविस्तरं निरूपयिष्यते। तत्सिद्धं मनुष्यत्वादिरेव जातिर्न ब्राह्मणत्वादिरिति। तस्याश्च यत् प्रख्यापकं लिङ्गं यया सा प्रख्यायते स एवात्राकृतिपदार्थ इति भावः॥ ६५॥

**ननु** का जातिः? तत्राह—

**"समानप्रसवात्मिका जातिः"** ॥ ६६॥

समानप्रसवात्मिका=समानाकारस्य प्रत्ययस्य प्रसवः प्रसवकर्तृत्वमात्मा स्वरूपं यस्याः सा तथा, भिन्नेषु समानप्रत्ययप्रसोत्री या सा जातिः=जातिपदवाच्येत्यर्थः।

**या** खलु भिन्नेष्वधिकरणेषु समानां बुद्धिं प्रसूते, **किमुक्तम्?** अनेकत्र समवेतं सत् समानप्रत्ययोत्पत्तौ यत्कारणं सा जातिरिति भावः॥

**तत्र** समानप्रत्ययोत्पत्तौ कारणं जातिरिति जातौ नियमः न समानप्रत्ययोत्पत्तौ। ब्राह्मणादिषु वर्णेषु तद्भेदेषु चाश्रमेषु पाचकादिषु च कर्मकरेषु जात्यभावेऽपि समानप्रत्ययस्य दृष्टत्वादिति विवेकः॥ ६६॥

**चत्वारीति प्रमाणानि सम्परीक्ष्य यथाक्रमम्।**
**कृतकत्वं च शब्दस्य सार्थमस्मिन् परीक्षितम्॥ १॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्य द्वितीयमाह्निकम्।



# तृतीयोऽध्यायः

## आद्यमाह्निकम्

प्रमाणानि परीक्षितानि, प्रमेयमिदानीं परीक्षणीयम् । तच्चात्मादिद्वादशविधमित्युद्दिष्टम् । तत्र प्रथमोद्दिष्टस्यात्मनः परीक्षामुपक्रममाणः पूर्वं तस्य शरीरादितो व्यतिरिक्तत्वे हेतुमुपन्यस्यति—

**"दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" ॥ १ ॥**

दर्शनस्पर्शनाभ्यां=दृश्यतेऽनेनेति दर्शनं चक्षुरिन्द्रियं, स्पृश्यतेऽनेनेति स्पर्शनं त्वगिन्द्रियं, ताभ्यामेकार्थग्रहणात्=एकस्य विषयस्य ग्रहणादवगम्यतेऽस्ति शरीरेन्द्रियादितो व्यतिरिक्तः कश्चिदात्मेत्यर्थः ।

**यः** खल्वर्थः पूर्वं दर्शनेन गृहीतः सोऽयं स्पर्शनेनापि गृह्यते । यमहमद्राक्षं तं स्पृशामि, यं चास्प्राक्षं तं पश्यामीति प्रतिसन्धानात् । न चैते समानविषये दार्शनस्पार्शनग्रहणे विनैकेन केनचित् कर्त्रा सम्भवतः । नानाकर्तृकत्वे तयोरीदृक्प्रतिसन्धानानुपपत्तेः । नहि देवदत्तेन गृहीतमर्थं यज्ञदत्तोऽहमग्रहीषमिति प्रतिसन्धातुमर्हति । ग्रहणप्रतिसन्धानयोः सामानाधिकरण्यनियमात् । नच दर्शनादीन्द्रियं तत्कर्तृपपद्यते । तस्य स्वस्वविषयनियतत्वेन विषयान्तरग्रहणासम्भवात् । शरीरादिकं तु न तत्कर्तृ सम्भवतीति स्वयं निरूपयिष्यति । न चैतत् प्रतिसन्धानं भ्रमः । तस्य यथार्थत्वेन प्रामाण्यात् । अतो भवति प्रतिपत्तिरस्ति शरीरेन्द्रियादितो व्यतिरिक्तः कश्चिदात्मा, योऽसौ दर्शनस्पर्शनाभ्यामेकार्थस्य ग्रहीता भिन्ननिमित्ते समानविषये ते प्रतिसन्दधातीति भावः ॥ १ ॥

शङ्कते—

**"न विषयव्यवस्थानात्" ॥ २ ॥**

न=यदुक्तं तन्न युज्यते, कुतः? विषयव्यवस्थानात्=प्रतीन्द्रियं विषयनियमो विषयव्यवस्थानं, तस्मात् विषयस्य प्रतीन्द्रियं व्यवस्थितत्वादित्यर्थः।

स्वस्वविषये व्यवस्थितानि खलु सर्वाणीन्द्रियाणि न जातु तमतिक्रामन्ति। यच्च यत्र व्यवस्थितं, ततस्तत्रोत्पद्यमानं ग्रहणमपि तस्यैव भवितुमर्हति नान्यस्य कस्यचित्। तद्भावे भावात्, तदभावे चाभावात्। न हि यद् यद्भावे भवति यदभावे च न भवति तत् तदपहाय किञ्चिदन्यदाश्रयितुं पारयति। रूपग्रहणं च चक्षुषि भवति दृष्टम्, अभवति च तस्मिन् न दृष्टम्। एवं रसग्रहणमपि सति रसने दृष्टमसति च तस्मिन् न दृष्टम्। अतो भवति प्रतिपत्ती रूपग्रहणं नूनं चक्षुषो धर्मो रसादिग्रहणं चैवं रसनादेः। **किमुक्तं?** यद्भावाभावानुविधायिनौ ग्रहणभावाभावौ तच्चेतनम्। इन्द्रियभावाभावानुविधायिनौ च तावेताविति तदेव चेतनं, किमन्येन तद्व्यतिरिक्तेन चेतनात्मनेति भावः॥ २॥

समाधत्ते—

**"तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः" ॥ ३ ॥**

अप्रतिषेधः=उक्तप्रतिषेधो न युज्यते, कुतः? तद्व्यवस्थानादेव=प्रतीन्द्रियं विषयनियमादेवात्मसद्भावात्=आत्मसद्भावसिद्धेरित्यर्थः।

यदीन्द्रियाणि व्यवस्थितविषयाणि न स्युः तदा न तद्व्यतिरिक्तश्चेतन आत्मा कश्चित् सिध्येत्। तेषामन्यतमेनैव सर्वार्थग्रहणसम्भवात्। व्यवस्थितविषयाणि च तानि नान्योऽन्यगृहीतमर्थं कर्हिचिद् ग्रहीतुं शक्नुवन्ति। नहि दर्शनविषयस्य रूपस्य स्पर्शनेन, स्पर्शनविषयस्य च स्पर्शस्य दर्शनेन ग्रहणं सम्भवति। तस्मादवश्यमन्येन केनचिदव्यवस्थितविषयेण सर्वार्थग्राहिणा चेतनात्मना भवितव्यं, यः खलु चक्षुषा दृष्टं स्पर्शनेन च स्पृष्टमर्थं गृह्णीयात्। अन्वयव्यतिरेकौ तु प्रतिग्रहणमिन्द्रियाणां चेतनोपकरणत्वेऽपि प्रदीपवदुपपद्येते। यथा हि प्रदीपस्य सद्भावे भवति रूपग्रहणम्, असद्भावे च न भवति, तथैव चक्षुषि सति रूपग्रहणमसति च तदग्रहणं वेदितव्यम्। नचैतावता तद् चक्षुषो धर्मः सम्भवति। अन्यथा

प्रदीपस्यापि तद् धर्मः सम्भवेत् । **किमुक्तम् ?** अन्वयव्यतिरेकाभ्यां हि कारणत्वमात्रमिन्द्रियाणामवगम्यते नतु तद्व्यतिरिक्तस्य कर्तुश्चेतनस्यात्मनोऽभावः । तच्च तेषां करणत्वेऽपि सूपपन्नम् । अतो मन्तव्यमस्ति तद्व्यतिरिक्तः कश्चिदात्मा, योऽसौ प्रतिविषयं करणानि तानि प्रयोजयति तन्निमित्ताँश्च नानाविषयान् प्रत्ययान् स्वात्मकर्तृकान् प्रतिसन्दधातीति भावः ॥ ३ ॥

**ननु** शरीरमेव चेतनं न तद्व्यतिरिक्तो विद्यते कश्चिच्चेतन आत्मा, यः कर्ता स्यात् ? तत्राह—

**"शरीरदाहे पातकाभावात्"** ॥ ४ ॥

शरीरदाहे=शरीरस्य दहने पातकाभावात्=हिंसाकृतं पापं पातकं, तदभावादवगम्यते न चेतनं शरीरमित्यर्थः ।

**यदि** शरीरं चेतनं स्यात् **तदा** तद्दग्धुरात्महिंसाकृतं पापं भवेत् । नच तस्य लोकतो वा शास्त्रतो वा पापं भवतीत्यवगम्यते । नहि मातापित्रोरन्त्येष्टिकर्म कुर्वाणः कश्चित् पातकी भवति । शरीरचैतन्ये त्ववश्यं भवेत्। **"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः, ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः"** ( यजु० ४०।३ ) इत्यात्महिंसया पापावगतेः । तस्य पातकाभावात्तु प्रतिपद्यते न चेतनं शरीरमिति भावः ॥ ४ ॥

**आशङ्कते—**

**"तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्"** ॥ ५ ॥

सात्मकप्रदाहेऽपि=केवलशरीरप्रदाहवत् सात्मकशरीरप्रदाहेऽपि तदभावः=दग्धुः पातकाभावः सम्भवति, **कुतः ?** तन्नित्यत्वात्=तस्यात्मनो नित्यत्वाद् हिंसानुपपत्तेरित्यर्थः ।

**यथा हि** केवलशरीरप्रदाहे दग्धुः पातकं न भवति **तथा** सात्मकशरीरप्रदाहेऽपि न तत् सम्भवति । शरीरस्य जड़त्वेनात्मनश्च नित्यत्वेन हिंसानुपपत्तेः । नहि नित्यमात्मानं कश्चिद् हिंसितुमर्हति । हिंस्यते चेत्

तदा नासौ नित्यः स्यात्। नित्यश्चाभ्युपगम्यते। अतः समान उभयत्रापि पातकाभावः। तथा च शरीरदाहे पातकाभावादचेतनं शरीरमित्यनुपपन्नं, सात्मशरीरदाहेऽपि पातकाभावस्य सत्त्वादिति भावः॥ ५॥

समाधत्ते—

**"न कार्य्याश्रयकर्तृवधात्"॥ ६॥**

सात्मकशरीरप्रदाह इत्यनुवर्त्तते। न=यदुक्तं तन्न, **कुतः?** कार्य्याश्रयकर्तृवधात्=सुखदुःखसंवित्तिलक्षणो भोगः कार्य्यं, तस्याश्रयः शरीरं, तद्विशिष्टस्य कर्तुरात्मनो वधात् वधसम्भवात् सात्मकशरीरप्रदाहे हिंसोपपत्तेरित्यर्थः।

**न** वयमात्मनो नाशं हिंसां ब्रूमो येन तस्य नित्यत्वेन तदनुपपत्तिः स्यात्, **अपि च?** सुखदुःखभोगायतनशरीरविशिष्टस्यात्मनो नाशं शरीरात्मनोर्वैशिष्ट्यस्य सम्बन्धस्य नाशमिति यावद् हिंसां निगदामः। सच सात्मकशरीरप्रदाहे सम्भवति। तेन तद्विनाशस्यावश्यम्भावात्। नहि कृत्रिमः सम्बन्धो भवति विनाशकारणे न विनश्यति। कृत्रिमश्चासौ। कर्मकार्य्यत्वात्। तद्यथोक्तं प्रश्नोपनिषदि **"पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्"** (प्रश्नो० ३।७) इति। **तथा च** सात्मकशरीरप्रदाहे तद्विनाशेन हिंसोपपत्त्या पातकस्य सद्भावात् तदभावोऽसिद्धः। तदसिद्धौ च व्यभिचाराभावादुपपन्नं शरीरदाहे पातकाभावादचेतनं शरीरमिति भावः॥ ६॥

आत्मनः शरीरेन्द्रियादितो व्यतिरिक्तत्वे हेत्वन्तरमाह—

**"सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्"॥ ७॥**

सव्यदृष्टस्य=सव्येन वामेन चक्षुषा दृष्टस्यार्थस्येतरेण=तस्मिन् नष्टे तदितरेण वामेतरेण दक्षिणचक्षुषेति यावत् प्रत्यभिज्ञानात्=प्रतिसन्धानादवगम्यतेऽस्ति शरीरेन्द्रियादितो व्यतिरिक्त आत्मेत्यर्थः।

**यद्** वस्तु पूर्वं दृष्टं तस्य पुनर्दर्शनाद् यज्ज्ञानमुपजायते, **किमुक्तं?** पूर्वानुभवजनितसंस्कारसहकृतेनेन्द्रियेण यज्ज्ञानमुत्पद्यते, **किं बहुना**—

ज्ञातार्थगोचरं प्रतिसन्धानात्मकं यज्ज्ञानं, तत्तेदन्तावगाहि यत् संस्कारपूर्वकं प्रत्यक्षज्ञानमिति यावत्, तत् "प्रत्यभिज्ञानम्" इत्यभिधीयते। यदि शरीरेन्द्रियादितो व्यतिरिक्त आत्मा न स्यात् तदा सव्येन दृष्टमर्थमितरेण न प्रत्यभिजानीयात्। नह्यन्येन दृष्टमर्थमन्यः कश्चित् प्रत्यभिजानाति। सव्येन दृष्टस्य त्वितरेण भवति प्रत्यभिज्ञानं "यमद्राक्षं तमेवैतर्हि पश्यामि स एवायमर्थः" इति। न चैतदात्मनः शरीरेन्द्रियादितो व्यतिरेकाभावे कथञ्चिदुपपद्यते। तस्माद् भवति प्रतिपत्तिरस्ति नूनं शरीरेन्द्रियादितो व्यतिरिक्त आत्मेति भावः ॥ ७ ॥

आक्षिपति—

**"नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्" ॥ ८ ॥**

न=यदुक्तं तन्न, **कुतः?** एकस्मिन्=एकस्मिन् चक्षुषि नासास्थिव्यवहिते=मध्ये नासिकास्थ्नाऽऽच्छन्ने द्वित्वाभिमानात्="द्वे चक्षुषी" इत्यभिमानादित्यर्थः।

**यदि** चक्षुर्द्वयमभ्युपगम्येत **तदा** सव्येन दृष्टस्येतरेण प्रत्यभिज्ञानानुपपत्त्या तद्व्यतिरिक्त आत्मा सिध्येत्। नच चक्षुर्द्वयमभ्युपगम्यते। मध्यस्थितनासास्थिव्यवधानेनैकस्मिन्नेव चक्षुषि मध्यस्थितकाष्ठेनेव तड़ागे द्वित्वाभिमानोपपत्तेः। **किमुक्तं?** यथा हि मध्ये काष्ठेन व्यवधानादेक एव तडागो द्वाविव प्रतिभासते, तथैवैकं चक्षुर्मध्ये नासास्थिव्यवधानाद् द्वयमिव प्रतिभासते। नच वस्तुतोऽस्ति चक्षुर्द्वयम्। अतः सव्येन दृष्टस्येतरेण प्रत्यभिज्ञानमुपपद्यते, द्रष्टुः स्मरतश्च चक्षुष एकत्वात्, नास्ति काचिदनुपपत्तिरिति भावः ॥ ८ ॥

परिहरति—

**"एकविनाशे द्वितीयाविनाशान्नैकत्वम्" ॥ ९ ॥**

एकत्वं=चक्षुरिन्द्रियस्यैकत्वं न=न सम्भवति, **कुतः?** एकविनाशे=एकस्य चक्षुषो विनाशेऽपि द्वितीयाविनाशात्=द्वितीयस्य चक्षुषो विनाशादर्शनादित्यर्थः।

यदि चक्षुरिन्द्रियं वस्तुत एकं भवेत् तदेकस्मिन् वामे वा दक्षिणे वा विनष्टे द्वितीयमपि विनश्येत् । नह्येकत्वमिव तद्विनाशमपि व्यवधानं प्रतिवध्नाति । विनाशे प्रत्युपस्थिते कतिपयैरवयवैर्विनाशस्य कतिपयैरवस्थानस्य चैकस्मिन्नवयविन्यनुपपत्तेः । आरम्भकसंयोगनाशेन तन्नाशस्य ध्रौव्यात् । नचैकस्मिन् चक्षुषि विनष्टे द्वितीयं विनष्टमुपलभ्यते । तस्माद् भवति प्रतिपत्तिर्नैकं चक्षुः, अपि च ? चक्षुर्द्वयमिति भावः ॥ ९ ॥

अत्र व्यभिचारमाशङ्कते—

"अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः" ॥ १० ॥

अहेतुः=एकविनाशे द्वितीयाविनाशादित्ययमहेतुः, कुतः ? अवयवनाशेऽपि=शाखारूपकतिपयावयवनाशेऽप्यवयव्युपलब्धेः=अवयविनो वृक्षस्य यथापूर्वमुपलब्धेरित्यर्थः ।

अस्ति तावदेको वृक्षः । सच शाखारूपकतिपयावयवनाशेऽपि न नश्यति । यथापूर्वमुपलम्भात् । नहि नष्टं किञ्चिद् यथापूर्वमुपलभ्यते । चेदेकविनाशे द्वितीयाविनाशो हेतुर्भवेत्, तदैकत्वाभावाभाववति शाखिनि न जातु वर्तेत । वर्तते च । तस्मादहेतुरिति भावः ॥ १० ॥

समाधत्ते—

"दृष्टान्तविरोधादप्रतिषेधः" ॥ ११ ॥

अप्रतिषेधः=अहेतुरित्ययं हेतुप्रतिषेधो न युज्यते, कुतः ? दृष्टान्तविरोधात्=दृष्टान्तस्य शाखिनो दार्ष्टान्तिकेन चक्षुषा विरोधात् सादृश्याभावादित्यर्थः ।

यादृग् हि शाखाशाखिनोः परस्परमवयवावयविभावो न तथा वामदक्षिणचक्षुषोरवयवावयविभावो विद्यते । तयोर्भिन्नमूलस्थानत्वेन समानवदुपलम्भात् । शाखिनश्च तद्विपर्य्ययात् । नह्येकस्मिन् शाखिनि भिन्नं मूलं भिन्नं स्थानं समानवदुपलम्भश्च कथञ्चित् सञ्जाघटीति । किमुक्तं ? शाखारूपकतिपयावयवनाशे सति शाखिनो यथापूर्वमुपलम्भो न घटते । अवयवनाशेऽवयविनाशस्य ध्रौव्यात् । नच छिन्नासु शाखासु शाखी पुनर्यथापूर्वमुपल-

भ्यते । वामे नष्टे दक्षिणन्तु यथापूर्वमुपलभ्यते । तस्मादेकविनाशे द्वितीयाविनाशादिति हेतुप्रतिषेधो न युक्तः । शाखिन्येकविनाशे द्वितीयाविनाशादर्शनेन व्यभिचाराभावात् । तथा च सिद्धं नैकं चक्षुरपि च द्वे चक्षुषी । तयोश्चैकेन दृष्टस्येतरेण प्रत्यभिज्ञानादस्ति प्रत्यभिज्ञाता कश्चिदात्मा तद्व्यतिरिक्तः इति भावः ॥ ११ ॥

आत्मनः शरीरेन्द्रियादितो व्यतिरिक्तत्वेऽन्यं हेतुमाह—

**"इन्द्रियान्तरविकारात्"** ॥ १२ ॥

चक्षुरादितोऽन्यदिन्द्रियमिन्द्रियान्तरं रसनेन्द्रियं, तस्य रसानुस्मृतौ रसगर्द्धप्रवर्तिता दन्तोदकसम्प्लवलक्षणा विक्रिया विकारः, तस्मात्—अनुभूतपूर्वरससहचारिरूपाद्यालोचनेन रसानुस्मृत्या जायमानदन्तोदकसम्प्लवलक्षणरसनेन्द्रियविकारादवगम्यतेऽस्ति तद्व्यतिरिक्त आत्मेत्यर्थः ।

कदाचिदास्वादितरसस्य कस्यचिदम्लफलस्य चिरविल्वादे रूपालोचनेन वा गन्धाघ्राणेन वा तत्सहचारिरसानुस्मृतौ तत्तृष्णाप्रवृत्तितो यो दन्तान्तरपरिस्रुताभिरद्भी रसनेन्द्रियस्य सम्प्लवः सम्बन्धः स **"इन्द्रियान्तरविकारः"** इत्युच्यते । नचास्य रसनेन्द्रियविकारस्य कारणं रसानुस्मृतिरन्तरेण रसानुभवितारं कथञ्चिदुपपद्यते । नहि क्रिया काचित् कर्तारं विना सम्भवति । क्रिया च स्मृतिरुत्पत्तिवत् । न चेन्द्रियमस्याः कर्तृ कल्पयितुं शक्यते । तस्यानुभवाभावेन स्मृत्यनुभवयोर्वैयधिकरण्यापातात् । अस्ति च तयोः सामानाधिकरण्यनियमः । न चानुभवोऽपि तस्यैवेति कल्पना युज्यते । तन्नाशे स्मरणाभावप्रसङ्गात् । भवति चेन्द्रियनाशेऽपि स्मरणम् । तस्मात् प्रतिपद्यते यस्यानुभवितुरेषा स्मृतिः सोऽस्ति शरीरेन्द्रियादितो व्यतिरिक्तः कश्चिदात्मेति भावः ॥ १२ ॥

आक्षिपति—

**"न स्मृतेः स्मर्तव्यविषयत्वात्"** ॥ १३ ॥

न=यदुक्तं तन्न युज्यते, **कुतः?** स्मृतेः=स्मरणज्ञप्तेः स्मर्तव्यविषयत्वात्=स्मरणीयार्थविषयत्वादित्यर्थः ।

यद्गोचरा खलु स्मृतिः तद्गोचरमेवानुमानं प्रसोतुमर्हति नान्यगोचरम्। नहि यद् यद्गोचरं न भवति तेन तद्गोचरमनुमानं प्रसूयते। स्मृतिश्चेयं रूपादिसहचारिरसमात्रगोचरा नात्मगोचरा, तत्कथमात्मानमनुमापयेत्। **किमुक्तम्?** आत्मानमनुमापयन्ती स्मृतिः कारणत्वेन वाऽनुमापयेद् विषयत्वेन वा?। न तावत्कारणत्वेनानुमापयितुमर्हति। तस्याः संस्कारमात्रकारणकत्वेनात्मकारणकत्वाभावात्। नहि यद् यत्कारणकं न भवति तत् तदपरिदृष्टसामर्थ्यं क्वचिदनुमापयति। न जातु स्वकारणादुपजायमानोऽङ्कुरोऽपरिदृष्टसामर्थ्यं कञ्चिदन्यमर्थमनुमापयन् दृश्यते। नापि विषयत्वेन। तस्याः स्मर्तव्यार्थविषयत्वेनात्मविषयत्वाभावात्। स्मर्तव्यार्थश्चेह रस एव नात्मा। **तस्मात्** तया तदनुमानमयुक्तमिति भावः॥ १३॥

**स**माधत्ते—

**"तदात्मगुणसद्भावादप्रतिषेधः" ॥ १४॥**

स्मृतेरित्यनुवर्तते। अप्रतिषेधः=स्मृतेरात्मानुमापकताप्रतिषेधो नोपपद्यते, **कुतः?** तदात्मगुणसद्भावात्=तस्या आत्मगुणेन सद्भावात् आत्मगुणत्वेन तदनुमापकतासत्त्वादिति यावदित्यर्थः।

**यदि** वयं कारणत्वेन वा विषयत्वेन वा स्मृत्याऽऽत्मानमनुमिमीमहि, **त**दैवमाक्षिप्येमहि। नच वयं कारणत्वेन वा विषयत्वेन वा स्मृत्या तमनुमिमीमहे, किन्त्वाश्रयत्वेन। नचास्याः स्मृतेराश्रयः स्मर्तव्योऽर्थः सम्भवति। शान्तेऽपि तस्मिन् तदुद्भवात्। नचानाश्रया सा युक्ता। गुणस्य साश्रयत्वनियमात्। स्मृतिश्च गुणः। नचेन्द्रियमस्याः आश्रयः कल्पयितुं शक्यते। तन्नाशेऽपि स्मृत्युत्पत्तिदर्शनात्। नहि सेन्द्रियस्य सत एव स्मृतिज्ञानमुत्पद्यते न निरिन्द्रियस्य सत इत्यस्ति कश्चिन्नियमः। दृश्यते च सेन्द्रियस्येव निरिन्द्रियस्यापि स्मृतिः। नच शरीरमेवाश्रय इति कल्पना युज्यते। स्वपरप्रत्यक्षतापत्तेः। नहि शरीरस्य गुणाः रूपादयः स्वपरप्रत्यक्षाः न भवन्ति। स्मृतिरपि चेच्छरीरमाश्रयेत् तदा रूपादिवदवश्यं स्वपरप्रत्यक्षतामापद्येत। नचेयमस्ति स्वपरप्रत्यक्षा। स्वमात्र-

वेद्यत्वात् । नच सा नास्तीति वक्तुं पार्य्यते । सर्वव्यवहारलोपप्रसङ्गात् । स्मृत्याश्रयाः खलु प्राणभृतां सर्वे लौकिकाः वैदिकाश्च व्यवहाराः, नचासत्यां तस्यां ते कथञ्चित्सम्भवन्ति । सत्या च तयाऽवश्यं किञ्चिदाश्रयितव्यम् । अतो यस्तावदस्या आश्रयः स एवात्मेति स्मृतेरात्मानुमापकत्वसिद्धौ तत्प्रतिषेधोऽनुपपन्न इति भावः ॥ १४ ॥

पूर्वपक्षयति—

**(१) "नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात्" ॥ १५ ॥**

न=शरीरेन्द्रियाभ्यामतिरिक्तः सिध्यन्नप्यात्मा मनोऽतिरिक्तो न सिध्यति, **कुतः?** आत्मप्रतिपत्तिहेतूनाम्=आत्मनः प्रतिपत्तये शरीरेन्द्रियादितो व्यतिरिक्ततया सिद्धये ये पूर्वमुपन्यस्ताः हेतवस्तेषां मनसि=मनःसंज्ञकेन्द्रिये सम्भवात्=समन्वयसम्भवादित्यर्थः ।

**तदा** हि पूर्वोक्तेभ्यस्त्रिभ्यो हेतुभ्यः शरीरेन्द्रियादितो व्यतिरिक्तः आत्मा सिध्येत् चेत्तेषां मनसि समन्वयो न सम्भवेत् । सम्भवति च तेषां तस्मिन् स यथाकामम् । तद्धि सर्वार्थविषयमाभ्यन्तरेन्द्रियं, नास्ति कश्चन तादृगर्थो लोके, यं चक्षुरादिभिरिन्द्रियैर्गृहीतं सन्तं न तद् गृह्णीयात् । यथा ह्यस्यैकेनेन्द्रियेण सम्बन्धोऽभ्युपगतः, तथेन्द्रियान्तरैरप्यभ्युपगम्यते । तदभ्युपगमाच्चैतद् दर्शनस्पर्शनाभ्यामेकमर्थं ग्रहीतुं सव्येन दृष्टमितरेण प्रत्यभिज्ञातुमिन्द्रियान्तरविकारहेतुस्मृतिं चाश्रयितुं सुखेन पारयति । "चक्षुषा पश्यति, रसनेन रसयति, घ्राणेन जिघ्रति, स्पर्शनेन स्पृशति, कर्णेनाकर्णयति" इत्यादयः कर्तृव्यपदेशा अपि चास्मिन् सर्वार्थविषयत्वेन ज्ञानाश्रयत्वात् सम्यगुपपद्यन्ते, नास्ति कश्चिद् विरोधः । **किं बहुना**—यथा हि भवता सर्वेन्द्रियविषयवेदी कश्चिदात्मा परिक-

(१) एतस्मात् पूर्वं प्रायो मुद्रितपुस्तकेषु "अपरिसंख्यानाच्च स्मृतिविषयस्य" इत्येकमधिकं सूत्रमुपलभ्यते । तच्च भाष्यं न सूत्रम् । न्यायतत्त्वालोके न्यायसूचीनिबन्धे वार्त्तिके तात्पर्य्यटीकायां च क्वचिदपि सूत्रत्वेनाधृतः । "इदं न सूत्रं किंतु भाष्यम्" इति केचिदिति विश्वनाथपञ्चाननोक्तेश्च ।

रुप्यते, तथैवास्माभिः सर्वेन्द्रियविषयवेदि मनोऽभ्युपगम्यते। तस्य सर्वेन्द्रियविषयवेदित्वे च किन्नु नामास्ति तत्प्रतिपत्तिसाधनं यदत्रात्मवन्न समन्वियात्। अतो मन एवात्मेति भावः॥ १५॥

उत्तरयति—

**"ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्"॥ १६॥**

ज्ञातुः=ज्ञातुः सतो मनसो ज्ञानसाधनोपपत्तेः=बाह्यज्ञानसाधनस्येवाभ्यन्तरज्ञानसाधनस्यापि कस्यचिदिन्द्रियस्योपपत्तेः संज्ञाभेदमात्रं=मात्रचा संज्ञिभेदं निवर्तयति, केवलमात्ममनःसंज्ञयोरेव भेद आपद्येतेत्यर्थः।

**यथा हि** ज्ञातुश्चक्षुरादीनि बाह्यज्ञानसाधनान्युपपद्यन्ते, तथाऽऽभ्यन्तरज्ञानसाधनमपि किञ्चिदिन्द्रियमुपपद्यते। बाह्येन्द्रियैर्विना बाह्यविषयज्ञानवदान्तरेन्द्रियं विनाऽऽन्तरविषयज्ञानस्याप्यसम्भवात्। सन्ति चात्मात्मीयसुखदुःखादयो बहवः खल्वाभ्यन्तरविषयाः। नच तत्र ज्ञातृ भवन्मनोऽन्तरेणान्तरेन्द्रियं किञ्चिज्ज्ञानमुपजनयितुमलं सम्पद्यते। नच तदेव तत्र करणं न करणान्तरमिति वक्तुं शक्यते। कर्तृत्वकरणत्वयोर्विरोधेनैकत्र वृत्तित्वासिद्धेः। स्वतन्त्रः साधको हि कर्ता, परतन्त्रं साधकतमं च करणम्। नचैकक्रियानिरूपिते स्वातन्त्र्यपारतन्त्र्ये साधकत्वसाधकतमत्वे चैकं धर्मिणमाश्रयितुमर्हतः। भिन्नधर्मित्वे चोपपन्नमान्तरज्ञानसाधनं किञ्चिदिन्द्रियम्। **तथा** चास्माकं युष्माकं च ज्ञातरि पदार्थे केवलमात्मेति मन इति च संज्ञाभेदमात्रमापन्नं न संज्ञिभेदः। ज्ञातृभिन्नस्यान्तरज्ञानसाधनस्येन्द्रियस्यास्माभिरिव युष्माभिरप्यभ्युपगमात्। **अस्माकं** हि ज्ञाता पदार्थ आत्मेति संज्ञयाऽऽन्तरेन्द्रियं च मन इति संज्ञया व्यपदिश्यते, **युष्माकं** तु ज्ञाता पदार्थो मन इति संज्ञयाऽऽन्तरेन्द्रियं च केनचित्संज्ञान्तरेणाभिधीयते। नचात्रास्ति कश्चिदन्यो विशेष इति भावः॥ १६॥

**ननु** बाह्यविषयगोचरमेव ज्ञानं बाह्यकरणापेक्षमुत्पद्यते नान्तरविषय-

गोचरं ज्ञानमान्तरकरणापेक्षमिति नियमाद् ज्ञातृतो भिन्नमान्तरेन्द्रियं किञ्चिन्नोपपद्यते ? तत्राह—

**"नियमश्च निरनुमानः"** ॥ १७ ॥

नियमश्च=भवदुक्तो नियमस्तु निरनुमानः=निर्युक्तिको विद्यत इत्यर्थः ।

**यदि** कश्चित् कर्ता करणमव्यापारयन् कर्मगोचरक्रियोत्पादकः क्वचिदुपलभ्येत **तदा** स्यादेष नियमः । नच तथा क्वचिदुपलभ्यते । नहि वर्द्धकिः कुठारमव्यापारयन् शाखिनं छिनत्ति । नच बाह्याभ्यन्तरभेदेन वा क्रिया विशिष्यते, येनैकत्र करणमपेक्षमाणेयमुत्पद्यतेऽन्यत्रचानपेक्षमाणेति कल्प्येत । सा तु यथा बाह्या तथाऽऽभ्यन्तरीति नियमेनापि समानेन तत्र भवितव्यम् । अन्यथा विनिगमनाविरहेण बाह्यायामपि तदनपेक्षताप्रसक्तौ करणमात्रं विलुप्येत । तच्च महदनिष्टम् । अतः काचित् क्रिया करणसापेक्षोत्पद्यते काचिन्निरपेक्षेति निर्युक्तिकं नियमं मा व्याकार्षीः । क्रियात्वाविशेषे करणापेक्षाविशेषस्याप्यौचित्यात् । **किमुक्तं ?** यावत् सविषयं ज्ञानं तत्सर्वं ससाधनं दृष्टं यथा बाह्यविषयज्ञानम् । आन्तरविषयज्ञानमपि ज्ञानम् । अतस्तेनापि ससाधनेन भवितव्यम् । नचात्रास्ति काचिद् युक्तिर्यत्तन्निःसाधनमुत्पद्यते ससाधनं चेतरदिति । युक्त्यभावे च कथमेष नियमोऽभ्युपगम्येत । नहि निर्युक्तिकं किञ्चिच्छ्रद्दधते वैदिकाः खलु तर्ककोविदाः । **तस्मादा**न्तरविषये ज्ञानोत्पत्त्यर्थं यस्तावच्चक्षुरादिबाह्यसाधनवदान्तरं किञ्चिद् साधनं व्यापारयति, स न शरीरं नेन्द्रियं न च मनः, **अपि च ?** तद्व्यतिरिक्तः कश्चिच्चेतन आत्मेति भावः ॥ १७ ॥

शरीरेन्द्रियादितो व्यतिरिक्त आत्मेति परीक्षितम् । **सम्प्रति** तन्नित्यत्वं परीक्षिष्यमाणस्तत्र हेतुमुपन्यस्यति—

**"पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः"** ॥ १८ ॥

जातस्य=उपात्तजन्मनो बालकस्य पूर्वाभ्यस्तस्मृत्यनुबन्धात्=पूर्वमभ्यस्ताः पुनः पुनरनुभूताः ये हर्षभयशोकहेतव इष्टानिष्टादिलक्षणाः

पदार्थास्तेषां यः स्मृत्यनुबन्धः स्मृतिसम्बन्धहेतुसंस्कारविशेषस्तस्माद् हर्ष-भयशोकसम्प्रतिपत्तेः—हर्षश्च भयश्च शोकश्च ते तथा, तेषां हसितरुदितादि-लिङ्गानुमितहर्षभयशोकानां सम्प्रतिपत्तेः प्राप्तेरवगम्यते नित्य आत्मेत्यर्थः ।

उपात्तजन्मा खलु बालकः कदाचिद् हसति कदाचिद्वेपते कदाचिच्च रोदिति । न चास्य हसितवेपथुरुदितानि हर्षभयशोकसम्प्रतिपत्तिमन्तरेण कथञ्चित् सम्भवन्ति । लोके हसितादीनां हर्षादिकार्य्यत्वनिर्णयात् । नहि कश्चित्प्राणी भवन् हर्षादिसद्भावाभावे हसिति वेपते रोदिति चेति क्वचिद् दृश्यते । नच हर्षादिसम्प्रतिपत्तिरन्तरेण हर्षादिहेतुग्रहणम् । अगृहीतेषु हर्षभयशोकहेतुषु हर्षादिसम्भवाभावात् । नहि निमित्ताभावे नैमित्तिकं क्वचिदुपलभ्यते । नच तद्ग्रहणं प्रत्यक्षाद्यात्मकं तदानीमुपपद्यते । अव्यु-त्पन्नस्य तस्य प्रत्युदिते जन्मनि प्रथमत एवोपस्थितेषु पदार्थेष्विष्टानि-ष्टादिसाधनत्वबुद्धेरनुत्पत्तेः । नहि प्रथमतो मातुरङ्कात् स्खलन् निरा-लम्बनो बालः पतनस्यानिष्टसाधनत्वमनुभवितुं पारयति । विज्ञाय चानि-ष्टसाधनत्वं तस्य रुदन् तन्मङ्गल्यमुरःसूत्रं विक्षिप्य हस्तौ कर्हिचिदुपा-दातुमर्हति । स्मृतिलक्षणं च ग्रहणं नान्तरेण संस्कारं सम्भवति । "**आ-त्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः**" (वै० ९।२।६ ) इति तस्याः संस्कारमात्रजन्यत्वाभिधानात् । न चायं संस्कारः पूर्वाभ्यासमन्तरेण, नच सोऽसति पूर्वस्मिन् जन्मनीति प्रत्युदिताज्जन्मनः पूर्वजन्मसिद्धौ तत्रापि पूर्वाभ्यस्तस्मृत्यनुबन्धाद् हर्षभयशोकसम्प्रतिपत्तेर-नादिरात्मेति सुखेन निष्पद्यते । अनादिभावस्य च नाशासम्भवान्नित्यः आत्मेति सिद्धमिति भावः ॥

तत्रैकविषयानेकविज्ञानोत्पादोऽ**भ्यासः** । प्रत्यक्षबुद्धिनिरोधे तद्विषय-विषयः प्रत्ययः **स्मृतिः** । स्मृतिसम्बन्धहेतुर्भावनासंस्कारोऽ**नुबन्धः** । इष्टविषयस्य प्रार्थनायां सत्यां प्राप्तौ सुखानुभवो **हर्षः** । मरणादिसाधन-स्यानिष्टविषयस्याहिव्याघ्रादेः सन्निधाने सति तज्जिहासोः "अशक्यहान मेतद्" इति बुद्धि**र्भयम्** । इष्टविषयस्य वियोगे तत्प्राप्त्यशक्यताज्ञानं **शोकः** । **सम्प्रतिपत्तिः** प्राप्तिरनुभव इति यावदिति विवेकः ॥ १८॥

अत्र शङ्कते—

**"पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः" ॥ १९ ॥**

पद्मादिषु=कमलादिषु प्रबोधसम्मीलनविकारवत्=पद्मादिपत्राणां विभागः **प्रबोधः**, संयोगः **सम्मीलनं**, तल्लक्षणो विकारो **यथा** स्वाभाविको भवति **तथा** तद्विकारः=तस्य जातस्य बालकस्य हसितादिलक्षणो विकारोऽपि स्वाभाविको वेदितव्यो न हर्षभयशोकसम्प्रतिपत्तिनिमित्तकः इत्यर्थः ।

**यथा** हि पद्मादीनां प्रबोधसम्मीलने वस्तुस्वभावादेव जायेते न कुतश्चिन्निमित्तात् **तथा** जातस्य बालकस्य हसितादयोऽपि स्वभावादेव जायन्ते न हर्षादिसम्प्रतिपत्तितो निमित्तात् । **तथा च** तया पूर्वाभ्यस्तस्मृत्यनुबन्धानुमानासम्भवान्न तावदात्मनोऽनादित्वं सेद्धुमर्हति । तदसिद्धौ च कुतो नित्यत्वम् । **किमुक्तं ?** यो यो विकारः स सर्वः सनिमित्तक इति न नियमः । पद्मादीनां प्रबोधसम्मीलनलक्षणेषु विकारेषु व्यभिचारात् । पद्मादिविकारवदेवात्मनोऽपि हसितादिलक्षणो विकारः । **तस्मात्** सोऽपि न सनिमित्तकः । निर्निमित्तकत्वे चात्मनः कुतोऽनादित्वं, तदभावे च कुतो नित्यत्वमिति भावः ॥ १९ ॥

समाधत्ते—

**"नोष्णशीतवर्षकालनिमित्तत्वात्**
**पञ्चात्मकविकाराणाम्" ॥ २० ॥**

न=यदुक्तं तन्न, **कुतः ?** पञ्चात्मकविकाराणां=विकारिबहुत्वेन विकारबहुत्वाद् बहुवचनं, पञ्चभूतात्मकानां पद्मादीनां ये प्रबोधसम्मीलनलक्षणाः विकारास्तेषामुष्णशीतवर्षकालनिमित्तत्वात्=कालशब्दो द्वन्द्वान्ते भावादुष्णादित्रयेण सम्बध्यते, उष्णादिकालत्रयनिमित्तकत्वादित्यर्थः ।

**ये** खलु पद्मादीनां प्रबोधसम्मीलनलक्षणाः विकारा उदाहृताः, **तेऽपि** निर्निमित्ताः न भवन्ति । सत्सूष्णादिषु भावेनासत्सु चाभावेन तेषां तन्निमित्तकत्वावधारणात् । **नहि** यद् यद्भावे भवति यदभावे च

न भवति तच्चन्निमित्तकं न भवतीति वक्तुं पार्य्यते । अन्वयव्यतिरेकयोः सर्वत्र निमित्तनैमित्तिकभावग्राहकत्वेन दृष्टत्वादत्र तदग्राहकत्वकल्पनानुपपत्तेः । तेषां सनिमित्तकत्वे च हसितादिभिरात्मविकारैरपि सनिमित्तकैरेव भवितव्यम् । विकारत्वाविशेषात् । नच तन्निमित्तं हर्षभयशोकसम्प्रतिपत्तितोऽन्यत् किञ्चिदुपपद्यते । सम्प्रतिपत्तिनिमित्तं च पूर्वाभ्यस्तस्मृत्यनुवन्ध एवेत्यनादिरात्मा । **किमुक्तं ?** तदा हि पद्मादीनां प्रबोधसम्मीलनलक्षणेषु विकारेषु **"यो यो विकारः स सर्वः सनिमित्तकः"** इति नियमस्य व्यभिचारः स्यात्, चेत्ते निर्निमित्ताः प्रादुष्युः । नच ते तथा प्रादुर्भवितुमर्हन्ति । विकारत्वहानप्रसङ्गात् । **यथा** चेमे न जातु निर्निमित्ताः युज्यन्ते **तथा** हसितादयोऽपि जातविकाराः न निर्निमित्ताः युक्ताः । तन्निमित्तं च हर्षादिसम्प्रतिपत्तिः पूर्वाभ्यस्तस्मृत्यनुबन्धमाक्षिपन्ती सुखेनात्मनोऽनादित्वं साधयति नास्त्यत्र काचिदनुपपत्तिः । **यश्चानादिर्भावश्च स नित्यः, यथेश्वरः । अनादिभावश्चात्मा, । तस्मान्नित्य इति भावः ॥ २० ॥**

आत्मनो नित्यत्वे हेत्वन्तरमाह—

**"प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्" ॥ २१ ॥**

जातस्येति मण्डूकप्लुतिन्यायेनानुवर्तते । प्रेत्य=मृत्वा जातस्य वालकस्याहाराभ्यासकृतात्=आहाराभ्यासजनितात् स्तन्याभिलाषात्=मातृस्तनभवं क्षीरं **स्तन्यं**, तत्पिपासाऽभिलाषस्तस्मादवगम्यते नित्य आत्मेत्यर्थः ।

सद्यो जातस्तावद् वालको मातृस्तनतटे दृष्टिं निदधानः शनैः शनैस्तदभिमुखमुपसर्पति । नच तस्य तदभिमुखोपसर्पणं स्तन्याभिलाषं विना कथञ्चिद् घटते । कामयमानो हि किञ्चित् क्वचित् प्रवर्तते नाकामो न वा पर्य्याप्तकामः । नच तदभिलाषोऽयमन्तरेणाहाराभ्यासं युज्यते । लोके पुनः पुनः कृतक्षीराहारस्यैव क्षुत्पीडायां तत्पानाभिलाषदर्शनात् । **नहि** येन क्षीरे क्षुत्पीडानिवृत्तिसाधनत्वं पूर्वं नानुभूतं **स** कदाचित् क्षुधया पीड्यमानः क्षीरं पातुमभिलषति । क्षीराहाराभ्यासेन हि दृढतरः स्मृत्य-

नुबन्ध उपजायते, तेन चोद्बोधकसमवधानादुद्बुद्धेन स्मृतिः, ततश्चाभिलापः, ततश्च प्रयत्नः, ततश्च प्रवृत्तिरित्यभ्युपगमात् । न चानेनास्मिन् जन्मन्याहारोऽयमभ्यस्त इत्युपपद्यते । जातमात्रस्य तदसम्भवात् । अतो मन्तव्यमंसाच्छरीरात्प्रागस्य शरीरमासीत् यस्मात्प्रेत्य शरीरान्तरमुपसम्पन्नोऽसौ क्षुत्पीडितः पूर्वाभ्यस्ताहारमनुस्मरन् स्तन्यमभिलपति । **किमुक्तं** ? यौवनाद्यवस्थायां चेतनस्य क्षीरपानादौ प्रवृत्तिः पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका दृष्टा, बाल्यावस्थायामपि तद्धेतुकयैव तत्र तत्प्रवृत्त्या भवितव्यम् । धूमस्येव वह्निना चेतनप्रवृत्तेरपि तेनैव हेतुना स्वाभाविकसम्बन्धस्यावगमात् । न चैष हेतुरस्मिन् जन्मनि सम्पन्न इति प्राग्भवीया तत्सम्पत्तिः परिशिष्यते । तत्रापि चैवमित्यनादिरयमात्मा । **यश्चानादिर्भावश्च** स नित्यो यथा जगतां पतिरीश्वरः । आत्माऽपि तथा । **तस्मान्नित्यः** इति भावः ॥ २१ ॥

अत्र शङ्कते—

**"अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम्" ॥ २२ ॥**

अयसः=लोहस्यायस्कान्ताभिगमनवत्="**चुम्बक**" इति समाख्यातः प्रस्तरविशेषो**ऽयस्कान्तः**, तदभिमुखोपसर्पणवत् तदुपसर्पणं=तस्य सद्योजातस्य बालकस्य जननीस्तनाभिमुखोपसर्पणं वेदितव्यमित्यर्थः ।

**यथा** ह्ययोऽयस्कान्ताभिमुखं स्वभावादेवोपसर्पति न कुतश्चिन्निमित्तात् **तथा** जातमात्रो बालोऽपि स्वभावादेव जननीस्तनाभिमुखमुपसर्पति नाहाराभ्यासकृतात्स्तन्याभिलाषात् । **किमुक्तं ?** चेद् जातमात्रोऽयं बालः पूर्वजन्माभ्यस्तमनुसरन् स्तन्याभिलाषेण प्रवर्तेत **तदा** जन्मान्तरानुभूतमन्यदपि किञ्चिदनुसरन् व्याचक्षीत । जात्यन्धबधिरादयोऽपि च रूपादिभेदान् व्याकुर्वीरन् । न चैष व्याचष्टे, नचामी वा व्याकुर्वते । **तस्माद्** भवति प्रतिपत्तिः "नूनमयसोऽयस्कान्ताभिगमनवदस्यापि जननीस्तनाभिमुखोपसर्पणं स्वाभाविकं न नैमित्तिकम्". इत्यतो जन्मान्तरानुमानासम्भवान्नायमनादिः, अनादित्वाभावे च नायमीश्वरवन्नित्य इति भावः ॥

इदमत्र बोध्यम्—यद्यप्येतत् पूर्वेणैव चरितार्थं न पृथगारब्धुं योग्यं प्रतिभाति । पूर्वाभ्यस्तस्मृत्यनुबन्धस्य हेतोरुभयत्रापि समानत्वात् । तथापि सामान्यतोऽधिगतस्य विशेषतो ज्ञापनार्थं पृथगारम्भो युज्यते । पूर्वस्मिन् हि हर्षादिना सामान्यतोऽभिलापमात्रमवगम्यते, द्वितीयस्मिंस्तु तद्विशेषस्तावत्स्तन्याभिलाप इति हेतुसामान्येऽपि न कश्चिद्दोष इति ॥२२॥

समाधत्ते—

"नान्यत्र प्रवृत्त्यभावात्" ॥ २३ ॥

न=यदुक्तं तन्न, कुतः? अन्यत्र=अयसोऽन्यत्र लोष्टादौ प्रवृत्त्यभावात्=अयस्कान्ताभिमुखप्रवृत्त्यदर्शनादित्यर्थः ।

अयसश्चेदयस्कान्ताभिगमनं निर्निमित्तं भवेत् तदा ततोऽन्यत्रापि दृश्येत । निमित्ताभावस्यायोवदन्यत्राप्यविशेषात् । नच ततोऽन्यत्रायस्कान्ताभिमुखप्रवृत्तिर्दृश्यते । नहि लोष्टादयोऽयस्कान्तमभिगच्छन्ति । नच निमित्ततोऽन्यद् नियमे किञ्चित् कारणमुपपद्यते । निमित्तं च न प्रत्यक्षमिति प्रवृत्त्या वस्तुशक्तिलक्षणं किञ्चिददृष्टमनुमेयम् । तच्च बालप्रवृत्तावपि न दुःशकं, तया तदनुमानस्यापि सम्भवात् । किमुक्तम्? अयसि दर्शनादन्यत्र चादर्शनाद् यथाऽयसोऽयस्कान्ताभिगमनं न निर्निमित्तम्, अपि च वस्तुशक्तिलक्षणादृष्टनिमित्तं तथा जातमात्रस्य बालस्य मातृस्तनाभिगमनमपि न निर्निमित्तम्, अपि च? पूर्वाभ्यस्तस्मृतिकृतस्तन्याभिलापनिमित्तमिति निश्चेतव्यम् । नच पूर्वाभ्यस्तस्मरणेऽन्यदपि किञ्चिदनुस्मरन् ब्रूयादिति युक्तं भाषणम् । अत्रैवान्यत्रादृष्टपरिपाकोद्बुद्धस्य संस्कारस्यासत्त्वेन स्मरणाभावसम्भवात् । स्मृत्यनुमेयो हि संस्कारोद्बोधः । नचान्यत्र स्मृतिरुपलभ्यते, येन तद्धेतुसंस्कारोद्बोधस्तत्र कल्प्येत । न चायमप्यस्ति कश्चिन्नियमो येनैकं स्मर्य्यते तेनापरमपि स्मर्तव्यम् । दृश्यते चास्मिन्नेव जन्मन्यनुभूतेषु पदार्थेषु कस्यचिदेव स्मरत्यात्मा न सर्वस्य । यदा च प्रत्युदितजन्मानुभूतानां पदार्थानामीदृग्वृत्तं तदा किमु वक्तव्यं जन्मान्तरानुभूतानां तेषाम् । एतेन "जात्य-

न्धवधिरादयोऽपि जन्मान्तरानुभूतान् रूपादिभेदाननुस्मृत्य व्याकुर्वीरन्" इति व्याख्यातं भवति । संस्कारोद्बोधाभावेन स्मरणाभावोपपत्त्या व्याकरणाभावोपपत्तेः । न चान्यदस्ति किञ्चिद् बाधकं, येन जातमात्रस्य मातृस्तनाभिगमनं निर्निमित्तं सिध्येत् । तस्य सनिमित्तत्वे चानादिः, अनादिभावत्वाच्चेश्वरवन्नित्योऽयमात्मेति निष्पन्नमिति भावः ॥ २३ ॥

आत्मनो नित्यत्वेऽन्यं हेतुमाह—

**"वीतरागजन्मादर्शनात्" ॥ २४ ॥**

वीताः विगताः शान्ताः राग इत्युपलक्षणं, रागद्वेषमोहाः यस्य भगवतो योगिनस्तस्य **जन्म** निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिः सम्बन्धस्तस्यादर्शनमनुपलम्भस्तस्मात्=रागरहितोत्पादानुपलम्भादवगम्यते नित्य आत्मेत्यर्थः ।

**सर्वः** खलु जायमानः प्राणी सराग एवोपलभ्यते न कश्चिद् वीतरागः । न हि जायमानश्च वीतरागश्चेति कथञ्चित् सङ्गच्छते । रागे सत्येव जन्मावधारणात् । तद्यथोक्तं दर्शनान्तरे **"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः"** ( यो० २।१२ ) **"सति मूले तद्विपाको जात्यायुर्भोगाः"** ( यो० २।१३ ) इति । रागश्च पूर्वानुभूतविषयानुचिन्तनयोनिः । तद्भावे भावात् तदभावे चाभावात् । न हि पूर्वानुभूतान् विषयान् नानुचिन्तयति तत्र रज्यति चेति युज्यते । पूर्वानुभवश्च विषयाणां नास्मिन् जन्मनि जातः । अन्यस्मिन् जन्मनि च न स शरीरमन्तरेणोपपद्यते । तत्रापि चैवमिति पूर्वतरेण पूर्वतमेन शरीरहेतुना जन्मना भवितव्यम् । न चैतदस्यानादित्वाभावे युक्तम् । अनादिश्च न जातु नश्यति कश्चिद्भावः । अनादिभावश्चात्मा । तस्मान्नित्यः इति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि हेतुरेष पूर्वेण समानः, **तथापि** विशेषज्ञापनार्थत्वात्पुनरारम्भो न दुष्यति । पूर्वस्मिन् हि स्तन्यमात्ररागः उपन्यस्तः, अत्र च पदार्थमात्रराग इति विशेष इति ॥ २४ ॥

आशङ्कते—

"सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः" ॥ २५ ॥

सगुणद्रव्योत्पत्तिवत्=यथा रूपादिभिर्गुणैः सह द्रव्यस्य घटादेर्जन्म स्वाभाविकं तथा तदुत्पत्तिः=तस्यात्मनो रागेण सह जन्मापि स्वाभाविकं वेदितव्यमित्यर्थः ।

यथा हि घटादिद्रव्यमुत्पद्यमानं स्वभावतः सगुणमेवोत्पद्यते तथाऽऽत्माऽपि जायमानः स्वभावत एव सरागो जन्यते, न तत्र निमित्तान्तरं किञ्चिदन्वेष्टव्यं, येनात्मनोऽनादिभावत्वमनादिभावत्वाच्च नित्यत्वं स्यादिति भावः ॥ २५ ॥

समाधत्ते—

"न सङ्कल्पनिमित्तत्वाद् रागादीनाम्" ॥ २६ ॥

न=यदुक्तं तन्न, कुतः ? रागादीनां=रागद्वेषादिदोषाणां सङ्कल्पनिमित्तत्वात्="इदं मदिष्टसाधनम्, अनिष्टसाधनं च ममैतत्" इति पूर्वानुभूतविषयानुचिन्तनं सङ्कल्पः, तन्निमित्तकत्वादित्यर्थः ।

न तावद् घटादिद्रव्यं स्वभावतः सगुणमुत्पद्यते, घटादिवत् तद्गुणानामपि नैमित्तिकत्वात् । सन्ति च तत्र कारणगुणाः निमित्तं, तद्यथोक्तं दर्शनान्तरे "द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्" ( वै० १।१।१० ) इति । यथा च घटादिगुणाः नैमित्तिकाः तथा रागादयोऽपि नैमित्तिका भवितुमर्हन्ति । पूर्वानुभूतविषयानुचिन्तनादन्यच्च न तेषां किञ्चिन्निमित्तान्तरमुपपद्यते । तच्च जन्मान्तरसापेक्षमित्यनादित्वसिद्धिः । अनादिभावस्य च नाशासम्भवान्नित्य आत्मेति भावः ॥ २६ ॥

आत्मा परीक्षितः, क्रमप्राप्तं शरीरं परीचिक्षिपमाण आह—

"पार्थिवं तद्विशेषगुणोपलब्धेः" (१) ॥ २७ ॥

---

(१) "पार्थिवं गुणान्तरोपलब्धेः" इति मुद्रितपुस्तकेषु पाठः । सचापपाठः । 'न्यायवार्तिकतात्पर्यपरिशुद्धौ' "पार्थिवं तद्विशेषगुणोपलब्धेः" इति सूत्रपाठधृतिदर्शनात् ॥

पार्थिवम्=अस्मदादिशरीरं पार्थिवं, **कुतः?** तद्विशेषगुणोपलब्धेः=पार्थिवो विशेषगुणो गन्धस्तस्योपलब्धेः प्राधान्येनोपलम्भादित्यर्थः ।

**गन्धवती** पृथिवी, **"व्यवस्थितः पृथिव्यां गन्धः"** (वै०२।२।२) इत्युक्तेः । शरीरमपि गन्धवत् । **तस्माद्** भवति प्रतिपत्तिर्नूनमिदं पार्थिमिति । **नन्वबादीनां** रसरूपादयोऽपि गुणास्तत्रोपलभ्यन्ते, तत्कथमिदं पार्थिवमिति चेत् । **सत्यं** । न वयमबादिभिरसम्पृक्तया पृथिव्याऽऽरब्धं पार्थिवमिति ब्रूमो येन ते तत्र नोपलभ्येरन्, **अपि च?** तत्सम्पृक्तया तया । **"अणुसंयोगस्त्वप्रतिषिद्धः"** ( वै० ४।२।५ ) इति भूतान्तरसंयोगस्याप्रतिषेधात् । पृथिव्याः हि तत्र प्राधान्यम्, इतरेषां चाप्राधान्यम् । प्रधाननिबन्धनश्च व्यपदेशो न जात्वप्रधाननिबन्धनः । तद्यथोक्तं दर्शनान्तरे **"वैशेष्यात्तु तद्वादस्तद्वादः"** ( वे० २।४।२२ ) इति । **तस्माद्** भूतान्तरसंयोगसत्त्वेऽपि **पार्थिवं** शरीरमित्यनवद्यमिति भावः ॥ २७ ॥

**ननु** युक्तिरुच्यते न श्रुतिः? तत्राह—

**"श्रुतिप्रमाण्याच्च"** ॥ २८ ॥

पार्थिवमित्यनुवर्तते । द्वितीयोऽयं हेतुरिति सूचनाय चकारोऽप्यर्थः ।

**"वायुरनिलममृतमथेदं भस्मान्तꣳशरीरम्"** (यजु० ४।१५) इत्यादिश्रुतिप्रामाण्यादपि पार्थिवमस्मदादिशरीरमित्यर्थः ।

**चेदिदं** शरीरं पार्थिवं न स्यात् **तदा** नेयं श्रुतिर्भस्मान्तं शरीरमित्यभिदधीत, न वा **"पृथिव्यै ते शरीरं स्पृणोमि स्वाहा"** ( शत० ११।८।१४।६ ) इति ब्राह्मणं व्याचक्षीत । नहि यद् यत्र विद्यते, तत् कदाचित् तत् सम्पद्यते । शरीरं चान्ते भस्म भवतीति श्रुतिरभिधत्ते । भस्म च पृथिवीति प्रत्यक्षम् । **तस्मात्** प्रतिपद्यते नूनमस्मदादिशरीरं पार्थिवमिति भावः ॥ २८ ॥

परीक्षितं शरीरम् । **इन्द्रियाणि** परीक्षणीयानि । तत्र पूर्वं तावच्चक्षुरिन्द्रियं परीचिक्षिषुः परीक्षाङ्गभूतं संशयमाह—

**"कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः" ॥ २९ ॥**

कृष्णसारे=कृष्णश्चासौ सारश्च कृष्णसारः **कृष्णतारा,** तस्मिन् कृष्णसारे चक्षुर्गोलके सति=भवत्युपलम्भात्=विषयस्योपलब्धेर्व्यतिरिच्य च=कृष्णसारं व्यतिरिच्य चोपलम्भात्=उपलब्धेः संशयः=किं कृष्णसारमात्रं चक्षुरिन्द्रियमाहोस्वित् तद्व्यतिरिक्तं किञ्चिदिति भवति संशयः इत्यर्थः ।

विद्यमाने खलु कृष्णसारे विषयाः उपलभ्यन्ते, तं च व्यतिरिच्य दूरमवस्थिता अप्युपलभ्यन्ते । **चेत्** कृष्णसारतो व्यतिरिक्तमिन्द्रियं भवेत् **तदा** तस्मिन्नविद्यमानेऽप्युपलभ्येरन् । न चोपलभ्यन्ते । तन्मात्रं चेत् तदा तमप्राप्य दूरमवस्थितास्तावन्नोपलभ्येरन् । उपलभ्यन्ते च । **तस्माद्** भवति संशयः किं गोलकमात्रं चक्षुरिन्द्रियमाहोस्वित् तद्व्यतिरिक्तमितिभावः ॥

**तत्र** गोलकमात्रमिति पूर्वःपक्षो **बौद्धानाम्** । तद्व्यतिरिक्तं तैजसमिन्द्रियमिति सिद्धान्तपक्षो **वैदिकानामिति** विवेकः ॥ २९ ॥

**सम्प्रति** पूर्वपक्षं निराचक्षाण आह—

**"महदणुग्रहणात्" ॥ ३० ॥**

कृष्णसारादिति विपरिणम्यानुवर्तते । कृष्णसारान्महतो महत्तरस्य महत्तमस्य चाणोरणुतरस्याणुतमस्य चोपलम्भादवगम्यते न कृष्णसारमात्रं चक्षुरिन्द्रियम्, **अपि च** तद्व्यतिरिक्तमित्यर्थः ।

**चेत्** कृष्णसारमात्रं चक्षुरिन्द्रियं भवेत् **तदा** तदपेक्षया ये महान्तो महत्तरा महत्तमाश्च घटमठप्रभृतयोऽणवोऽणुतरा अणुतमाश्च वटधानादयो विषयास्ते न जातु गृह्येरन् । नहि तैजसद्रव्यमन्तरेणान्यत् किञ्चिदात्मपरिमाणतोऽधिकपरिमाणं न्यूनपरिमाणं च वस्तु ग्रहीतुं शक्नोति । तैजसस्यैव द्रव्यस्य खलु प्रदीपादेरेष स्वभावो दृष्टो यत्तदधिकमपि ग्राहयति न्यूनमपि ग्राहयति चेति । चेदन्यत्रापि क्वचिदीदृक्स्वभावोऽनुभूयेत

तदा कल्प्येतापि कृष्णसारमात्रं चक्षुः। न चान्यत्रानुभूयते। **तस्माद्** भवति प्रतिपत्तिर्न खलु कृष्णसारमात्रं चक्षुरिन्द्रियम्, **अपि च** तदधिष्ठानं तेजोद्रव्यमितिभावः ॥ ३० ॥

**ननु** तथापि महदणुग्रहणं नोपपद्यते, गोलकस्थेन तेन दूरस्थानां तेषां सन्निकर्षाभावात्? तत्राह—

**"रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम्"** ॥ ३१ ॥

रश्म्यर्थसन्निकर्षविशेषात्= नायनो रश्मिर्महदण्वर्थश्च तयोर्यः सन्निकर्षविशेषः संयोगस्तस्मात् तद्ग्रहणं=महदणुद्रव्यग्रहणमुपपद्यत इत्यर्थः।

**यथा** हि प्रदीपस्य रश्मिर्विषयदेशं गत्वा विषयं प्राप्य प्रकाशयति **तथा** चाक्षुषो रश्मिरपि विषयदेशं गत्वा विषयं प्राप्य प्रकाशयति। न चेहास्ति किञ्चिच्चित्रं, तेजसो विसारिद्रव्यत्वेन रश्मिना विषयप्राप्तिसम्भवात्। प्राप्तिरेव च सन्निकर्षविशेषः। तस्य च महदण्वोरुभयत्रापि विद्यमानत्वाद् गोलकातिरिक्तेन चक्षुरिन्द्रियेणोपपद्यते तद्ग्रहणमिति भावः ॥ ३१ ॥

**अत्र** शङ्कते—

**"तदनुपलब्धेरहेतुः"** ॥ ३२ ॥

अहेतुः="रश्म्यर्थसन्निकर्षविशेषात्" इत्ययमहेतुः, **कुतः?** तदनुपलब्धेः= तस्य सन्निकर्षविशेषनिमित्तस्य रश्मेः प्रत्यक्षतोऽनुपलम्भादित्यर्थः।

**तदा** हि रश्म्यर्थसन्निकर्षविशेषाद् गोलकातिरिक्तेन चक्षुरिन्द्रियेण महदणुद्रव्यग्रहणमुपपद्येत **चेद्** चाक्षुषरश्मिसत्त्वं सम्भवेत्। न च तत्सत्त्वं सम्भवति। प्रत्यक्षतोऽनुपलम्भात्। यद्धि रूपवत्तेजो द्रव्यं तत् प्रत्यक्षत उपलभ्यते यथा प्रदीपः। रूपवत्तेजो द्रव्यं च चाक्षुषोरश्मिः। नच स प्रत्यक्षत उपलभ्यते। **तस्माद्** भवति प्रतिपत्तिः चाक्षुषो रश्मिश्चेत् स्यात् तदा प्रत्यक्षतः प्रदीपवदुपलभ्येत, नचोपलभ्यते तस्मान्ना-

स्तीति। यदा च नास्ति तदा रश्म्यर्थसन्निकर्षविशेषस्य हेतोरहेतुत्वाद् गोलकातिरिक्तेन चक्षुरिन्द्रियेण महदणुद्रव्यग्रहणमनुपपन्नमिति भावः॥३२॥

समाधत्ते—

**"नानुमीयमानस्य प्रत्यक्षतोऽ-**
**नुपलब्धिरभावहेतुः" ॥ ३३ ॥**

प्रत्यक्षतः=प्रत्यक्षेणानुपलब्धिः=अनुपलम्भोऽनुमीयमानस्य=अनुमान-विषयस्य रश्मेरभावहेतुः=असत्त्वे लिङ्गं न=नोपपद्यत इत्यर्थः।

न खलु प्रत्यक्षतोऽनुपलब्धिर्वस्तुनोऽसद्भावे हेतुरुपपद्यते। चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्य प्रत्यक्षतोऽनुपलब्ध्याऽप्यनुमानेन सद्भावावगमात्। नहि नागरङ्गाकृतेश्चन्द्रमसः परभागो नास्ति पृथिव्याश्चाधोभाग इति केन चिद् वक्तुं शक्यते। नायनोरश्मिरपि चेत् प्रत्यक्षेण नोपलभ्यते तदा नास्तीति वक्तुमशक्यम्। अनुमानेन तत्सद्भावस्यावगन्तुं शक्यत्वात्। आवृतं हि वस्तु चक्षुषा नोपलभ्यते। तत्समानदेशमनावृतं तूपलभ्यते तेन चेत् प्राप्तं स्यात्। अप्राप्तोपलम्भकत्वस्येन्द्रियाणां प्रतिषेधात्। तद्यथोक्तं दर्शनान्तरे **"नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा"** (सां० ५।१०४) इति। न च प्राप्तिर्गोलकस्थस्य चक्षुरिन्द्रियस्यान्तरेण रश्मिं सम्भवति। तस्माद् भवत्यनुमानमस्ति तावन्नायनोरश्मिर्योऽनावृत्ते वस्तुन्यप्रतिबद्धः सन् प्राप्तिमुपजनयति, ततोऽन्यत्र चावरणेन प्रतिबद्धो नोपजनयतीति भावः॥

**इदमत्रबोध्यम्**—सांख्यदर्शने हि नयनस्याहङ्कारिकत्वमभ्युपगम्य विषयप्राप्त्यर्थं वृत्तिरभ्युपगम्यते, न्यायदर्शने च तस्य तैजसत्वमभ्युपेत्य विषयप्राप्त्यर्थं रश्मिरभ्युपेयते। रश्मिवृत्त्योश्च प्राप्तिहेतुत्वाविशेषान्नास्ति कश्चिद् विशेषः। तत्र कारणबुद्ध्याऽऽहङ्कारिकत्वं सांख्यानां, कार्य्यदृष्ट्या च तैजसत्वं नैयायिकानामिति बुद्धिभेदेऽपि गोलकातिरिक्तस्य तस्याभ्युपगमे विशेषाभावादविरोधः सर्वत्र दर्शनानां, नास्ति कुत्रापि कश्चिद् विरोध इति॥ ३३॥

**ननु** भवतु रश्मेरेवं सद्भावः, **तथा पि** तस्य प्रत्यक्षतोऽनुपलब्धिर्न युज्यते, रूपिद्रव्यस्य चाक्षुपोपलब्धिनियमात्? तत्राह—

**"द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः"** ॥ ३४ ॥

द्रव्यगुणधर्मभेदाच्च=द्रव्यस्य धर्मभेदो **महत्त्वादिः**,गुणस्य चोद्भूतत्वं, भेदो **विशेषः**, द्रव्यधर्मविशेपाद् गुणधर्मविशेपाच्चोपलब्धिनियमः=चाक्षुषद्रव्योपलब्धिनियम इत्यर्थः।

**न** खलु यद् रूपिद्रव्यं तत् सर्वं चक्षुपोपलभ्यत इति नियमः। द्व्यणुकस्य रूपिद्रव्यत्वेऽपि चक्षुपोपलम्भाभावात्, **अपि च?** यन्महदनेकद्रव्यवच्च भवदुद्भूतं रूपमाश्रयति **तदेव** चक्षुपोपलभ्यते नान्यत्किञ्चिद् द्रव्यमिति नियमः। तद्यथोक्तं दर्शनान्तरे **"महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः"** (वै० ४।१।६) इति। नायनो रश्मिस्तु तथाभूतं द्रव्यं भवदपि नोद्भूतं रूपमाश्रयति। तदनाश्रयणाच्च तस्य युज्यते प्रत्यक्षतोऽनुपलब्धिरिति भावः॥

**तत्रोद्भूतरूपस्पर्शं** तेजः सूर्य्यरश्मयः। उद्भूतरूपानुद्भूतस्पर्शं तेजः प्रदीपरश्मयः। उद्भूतस्पर्शानुद्भूतरूपं तेजोऽबादिसंयुक्तम्। अनुद्भूतरूपस्पर्शं च तेजो नायनो रश्मिः। **अतएव** च प्रथमस्य तेजोद्वयस्य भवति प्रत्यक्षमितरस्य चाप्रत्यक्षमिति विवेकः॥ ३४ ॥

**अत्र** तटस्थ आशङ्कते—

(१) **"मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः"** ॥ ३५ ॥

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्=मध्याह्ने गगनात्पतितस्य रेखाकारतेजःपुञ्जविशेषस्य सौरालोकेनाभिभवाद् यथोपलब्धिर्न भवति **तथा** तदनुपलब्धिः=तस्य चाक्षुषरश्मेरुपलब्धिर्न भवतीत्यर्थः।

---

(१) इतःपूर्वं क्वचिद् मुद्रितपुस्तकेषु **"कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः"** इत्येकमधिकं सूत्रमुपलभ्यते। तच्च न सूत्रं किन्तु भाष्यम्। "चक्षुरादावुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यं "कर्मकारितः" इति विश्वनाथावतारदर्शनात्॥

**यः** खलु रेखाकृतितेजःपुञ्जविशेषः कदाचिद् गगनात् स्रस्यते स **उल्का,** तदात्मकः प्रकाशश्चोल्काप्रकाश इति व्यपदिश्यते। तस्य **यथा** मध्याह्ने सौर्य्यप्रकाशेनाभिभवादनुपलम्भः **तथा** नायनस्य रश्मेरपि सौर्य्यप्रकाशेनाभिभवादनुपलम्भः सम्भवति। **तस्माद्** रूपिद्रव्यत्वे सत्यपि तस्यानुपलब्धौ नास्ति कश्चिद्दोष इति भावः॥ ३५॥

**समाधत्ते—**

**"न रात्रावप्यनुपलब्धेः"॥ ३६॥**

न=यदुक्तं तन्न, **कुतः?** रात्रावपि=नक्तमप्यनुपलब्धेः=तदुपलम्भाभावादित्यर्थः।

**यत्तावत्** केनचिदभिभावकेनाभिभूतः सन्नोपलभ्यते **तत्** तदभावेऽवश्यमुपलभ्यते। नहि मध्यन्दिनेऽनुपलभ्यमानः खलूल्काप्रकाशो रात्रावपि नोपलभ्यते। नायनो रश्मिरपि **चेत्** सौर्य्यप्रकाशेनाभिभूतः सन् दिवा नोपलभ्यते **तदो**ल्काप्रकाशवन्नक्तमवश्यमुपलभ्येत। न च स तदाऽप्युपलभ्यते। **तस्माद्** भवति प्रतिपत्तिर्न जातूल्काप्रकाशवदभिभवनिमित्ता तदनुपलब्धिरिति भावः॥ ३६॥

**ननु** किंनिमित्ता तर्हि तदनुपलब्धिः? तत्राह—

**"बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः"॥ ३७॥**

अनभिव्यक्तितः=अनुद्भूतितः अनुद्भूतिनिमित्तेति यावदनुपलब्धिः=तदनुपलब्धिर्वेदितव्या, **कुतः?** बाह्यप्रकाशानुग्रहात्=बाह्यप्रकाशस्य साहाय्याद् विषयोपलब्धेः=तेन विषयस्योपलम्भादित्यर्थः।

**यत्** खलु स्वविषयोपलब्धौ बाह्यप्रकाशानुग्रहमपेक्षते तस्यानुद्भूतेरेवानुपलब्धिर्भवति नत्वभिभूतेः, **यथा** हेमन्तर्तौ विपक्वावयवस्याप्यस्य द्रव्यस्य। नहि हेमन्ते विपक्वावयवमाप्यं द्रव्यं स्वविषयोपलब्धौ बाह्यालोकानुग्रहमपेक्षमाणं केनचिदभिभूतं दृष्टम्, **अपि च?** अनुद्भूतम्। चाक्षुषस्तेजोरश्मिरपि स्वविषयोपलब्धौ बाह्यालोकानुग्रहमपेक्षते। निरा-

लोके तस्य विषयेष्वप्रवृत्तेः । अतो भवति प्रतिपत्तिर्नूनमेष स्वविषयोपलब्धौ बाह्यप्रकाशापेक्षत्वादनुद्भूत्या न प्रतीयते न पुनरभिभूत्येति भावः ॥ ३७ ॥

**ननु** कस्मात् पुनरुल्काप्रकाशवदभिभूतिनिमित्ता तदनुपलब्धिर्न कल्प्यते ? तत्राह—

**"अभिव्यक्तौ चाभिभवात्" ॥ ३८ ॥**

अनुपलब्धिरित्यनुवर्तते । चकारेण बाह्यप्रकाशानुग्रहनिरपेक्षतां समुच्चिनोति । अभिव्यक्तौ च=उद्भूतिरभिव्यक्तिः, तस्यां, बाह्यप्रकाशानुग्रहनिरपेक्षतायां च सत्यामभिभवात्=निमित्तपञ्चमीयम्, अभिभवनिमित्ताऽनुपलब्धिर्भवतीत्यर्थः ।

**यत्** खलु पूर्वमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते, तदेवाभिभूयते न पूर्वमनभिव्यक्तमनुद्भूतं बाह्यप्रकाशानुग्रहं चापेक्षमाणम् । **नह्युल्काप्रकाशः** पूर्वमनभिव्यक्तो बाह्यप्रकाशानुग्रहं चापेक्षमाणो दिनकरालोकेनाभिभवं गच्छतीति दृश्यते, **अपि च** ? पूर्वमभिव्यक्तः बाह्यप्रकाशानुग्रहं चानपेक्षमाणः । **विपरीतश्चातः** सर्वथा नायनो रश्मिः । न च स पूर्वमभिव्यक्तः, न वा बाह्यप्रकाशानुग्रहनिरपेक्षः । तस्य स्वविषयप्रकाशनाय तदपेक्षायाः सत्त्वात् । **अतः** प्रतिपद्यते न तावदुल्काप्रकाशवदभिभवनिमित्ता तदनुपलब्धिः, **अपि च** ? अभिभूतिनिमित्तेति । **तथा** चास्ति नायनो रश्मिरित्युपपन्नमिति भावः ॥ ३८ ॥

अत्रैव हेत्वन्तरमाह—

**"नक्तंचरनयनरश्मिदर्शनाच्च" ॥ ३९ ॥**

अप्यर्थश्चः । वृषदंशप्रभृतयो नक्तंचराः, तन्नयनरश्मीनां दर्शनादप्यवगम्यतेऽस्ति नायनो रश्मिरित्यर्थः ।

**यादृशं** हि विडालादीनां नक्तंचराणां चक्षुरिन्द्रियं **तादृशमेवास्माकं** मानुषादीनामपि । जातिभेदवदिन्द्रियभेदकल्पनस्यानौचित्यात् । **नहि** कुड्यादिभिरावरणैरस्माकमेव चक्षुरिन्द्रियमाव्रियते न विडालादीनामिति-

किञ्चित् प्रमाणमस्ति, येन तद्भेदः कल्प्येत । वृषदंशादीनां च तेषां नक्तं तावच्चक्षूरश्मयो दृश्यन्ते । यथादर्शनं च सर्वत्र कल्पनं न्याय्यम् । **अतो**ऽवगम्यते प्राप्तिस्वभावत्वे सति रूपाद्युपलब्धिनिमित्तत्वाद् **यथा** नक्तंचराणां चक्षुरिन्द्रियं रश्मिवत् **तथा**ऽस्माकं मानुषादीनामपि चक्षुरिन्द्रियं रश्मिवदिति भावः ॥

**तत्र** रश्मिरश्मिमतोरभेदान्न रश्मितोऽतिरिक्तं किञ्चिदिन्द्रियम्, **अपि च**? कृष्णसाराधिष्ठानस्तेजोभेदः कश्चिद्रश्मिरेव चक्षुरिन्द्रियमिति द्रष्टव्यम् ॥ ३९ ॥

**ननु** प्राप्यकारित्वे हीन्द्रियाणां रश्म्यर्थसन्निकर्षविशेषो ग्रहणहेतुरुपपद्यते नाप्राप्यकारित्वे, अप्राप्यकारीणि च तानीति नासौ हेतुरिति सम्प्रति शङ्कते—

**"अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः" ॥ ४० ॥**

अप्राप्यग्रहणं=**प्राप्तिः** सन्निकर्षः, तत्कर्म **प्राप्यं** सन्निकृष्टम्, **ग्रहणमुपलब्धिः** प्रकाश इति यावत्, चक्षुरिन्द्रियेण सन्निकृष्टस्य ग्रहणं न भवति, **कुतः**? काचाभ्रपटलस्फटिकान्तरितोपलब्धेः=काचश्चाभ्रपटलं च स्फटिकश्च ते तथा, तैरन्तरितस्य व्यवहितस्य विषयस्योपलब्धेरुपलम्भादित्यर्थः ।

**यथा हि** चक्षुरिन्द्रियेणाव्यवहिताः विषया उपलभ्यन्ते **तथा** काचेनाभ्रपटलेन स्फटिकेन च व्यवहिता अप्युपलभ्यन्ते । **चेदिदं** प्राप्यकारि=प्राप्यप्रकाशकारि सन्निकृष्टग्राहीति यावत् स्यात् **तदा** तेनाव्यवहिता एवोपलभ्येरन् न व्यवहिताः । सति व्यवधाने प्राप्त्यसम्भवात् । उपलभ्यन्ते च व्यवहिता अपि । **तस्मात्** प्रतिपद्यते नेदं प्राप्यकारि किन्त्वप्राप्यकारि । **तथा च** ग्रहणे रश्म्यर्थसन्निकर्षोऽहेतुरिति भावः ॥४०॥

**समाधत्ते**—

**"कुड्यान्तरितानुपलब्धेरप्रतिषेधः" ॥ ४१ ॥**

अप्रतिषेधः=ग्रहणे रश्म्यर्थसन्निकर्षहेतुताप्रतिषेधो नोपपद्यते, कुतः? कुड्यान्तरितानुपलब्धेः=कुड्येन व्यवहितस्यानुपलम्भादित्यर्थः।

चेदिदमप्राप्यकारि स्यात् तदा कुड्यान्तरितमपि गृह्णीयात्। नच गृह्णाति। किमुक्तं? रश्म्यर्थसन्निकर्षस्याहेतुत्वे कुड्यान्तरितस्यानुपलब्धिर्न स्यात्। भवति चानुपलब्धिः। तस्मात् प्रतिपद्यते नेदमप्राप्यकारि किन्तु प्राप्यकारीति भावः॥ ४१॥

ननु प्राप्यकारित्वे कुड्यान्तरितस्येव काचाद्यन्तरितस्याप्युपलब्धिर्न स्यात्, कुड्यान्तरितवत् काचाद्यन्तरितेऽपि सन्निकर्षानुपपत्तेः? तत्राह—

"अप्रतीघातात् सन्निकर्षोपपत्तिः" ॥ ४२ ॥

अप्रतीघातात्=प्रतीघातः प्रतिबन्धः, चाक्षुषरश्मेः काचादिना प्रतिबन्धाभावात् सन्निकर्षोपपत्तिः=सन्निकर्ष उपपद्यत इत्यर्थः।

तेजोद्रव्यं हि चाक्षुषो रश्मिः, न तं स्वच्छं वा सुषिरं वा किञ्चिद् द्रव्यं प्रतिहन्ति। काचादिकं च स्वच्छं मेघपटलादिकं च सुषिरं द्रव्यमित्यविवादम्। अतस्तेनाप्रतिहन्यमानस्य तस्य तदन्तर्गतेनार्थेन सन्निकर्ष उपपद्यते। किमुक्तं? काचः स्फटिकोऽभ्रपटलं च स्वच्छद्रव्यत्वात् सुषिरत्वाच्च न चाक्षुषं रश्मिं विष्टभ्नाति। तेन चैष काचादिनाऽविष्टभ्यमानः काचादिकं व्यतिभिद्य काचाद्यन्तर्गतेनार्थेन सन्निकृष्टुं पारयति। नचेहास्ति काचिदनुपपत्तिरिति भावः॥ ४२॥

ननु काचादिकं नायनं रश्मिं न प्रतिबध्नातीति न श्रद्धीयते, तथा क्वचिददृष्टेः? तत्राह—

"आदित्यरश्मेः स्फटिकान्तरितेऽपि
दाह्येऽविघातात्" ॥ ४३ ॥

आदित्यरश्मेः=सौर्य्यरश्मेः स्फटिकान्तरितेऽपि=स्फटिक इत्युपलक्षणं, स्फटिकादिव्यवहितेऽपि दाह्ये=दहनीयवस्तुन्यविघातात्=प्राप्तिप्रतिषेधो विघातः, तद्भिन्नस्तदप्रतिषेधोऽविघातः सम्बन्धस्तद्दर्शनादवगम्यते न नायनं रश्मिं काचादिकं प्रतिबध्नातीत्यर्थः।

**आ**दित्यरश्मेस्तावत् स्फटिकाद्यन्तरितेऽपि दाह्ये पदार्थे सन्निकर्षो दृश्यते। **नचासौ** सति प्रतिबन्धे कथञ्चिदुपपत्तुमर्हति। **दृष्टे** चैकत्राप्रतिबन्धे नान्यत्र तदनुमानासम्भवः। **तस्मा**च्छ्रद्धातव्यं काचादिकं नायनं रश्मिं न प्रतिबध्नाति यथाऽऽदित्यरश्मिं स्वच्छद्रव्यत्वादिति भावः॥ ४३॥

**अत्र** शङ्कते—

**"नेतरेतरधर्मप्रसङ्गात्"** ॥ ४४ ॥

न=यदुक्तं तन्न, **कुतः?** इतरेतरधर्मप्रसङ्गात्=इतरेतरस्मिन्नितरेतरधर्मप्रसक्तेः—इतरस्य कुड्यादेर्यो धर्मः प्रतीघातस्तस्य काचादौ, काचादेर्यो धर्मोऽप्रतीघातस्तस्य कुड्यादौ प्रसक्तेरित्यर्थः।

**यत्र** हि किञ्चिन्नियमकारणं विद्यते **तत्रे**तरेतरस्मिन्नितरेतरस्य धर्मो न प्रसज्यते **यथा** व्योम्नि भूमिधर्मः, भूमौ च व्योमधर्मः। **यत्र** चैतन्नास्ति **तत्र** तत्प्रसक्तिर्न जातु वारयितुं शक्यते। **नच** कुड्यादौ काचादौ चास्ति धर्मनियमस्य किञ्चित्कारणम्। **अतः** काचादिवद्वा कुड्यादिभिरप्रतीघातः, कुड्यादिवद्वा काचादिभिः प्रतीघात इति निष्प्रत्यूहं प्रसज्यते। **तथा च** "आदित्यरश्मिवदप्रतीघातात्सन्निकर्षोपपत्तिस्तदुपपत्तौ च काचादिभिरन्तरितस्याप्युपलब्धिः" इत्यनुपपन्नमिति भावः॥ ४४॥

**स**माधत्ते—

**"आदर्शोदकयोः प्रसादस्वाभाव्याद् रूपोपलब्धिवत् तदुपलब्धिः"** ॥ ४५ ॥

आदर्शोदकयोः=आदर्शे चोदके च प्रसादस्वाभाव्यात्=स्वच्छस्वभावत्वाद् रूपोपलब्धिवत्=स्वरूपस्य मुखादेर्यथोपलब्धिस्तथा तदुपलब्धिः=तस्य प्रसादस्वभावैः काचादिभिरन्तरितस्यार्थस्य सन्निकर्षोपपत्त्या चक्षुरिन्द्रियेणोपलब्धिरुपपद्यत इत्यर्थः।

**यथा** हि दर्पणेऽप्सु च प्रसादस्वाभाव्यान्मुखादेरुपलब्धिर्भवति, न कुड्यादौ। तत्स्वाभाव्याभावात्। **तथा** प्रसादस्वाभाव्यात् काचादिभिरन्तरितस्य सन्निकर्षोपपत्त्या चक्षुरिन्द्रियेणोपलब्धिरुपपद्यते न कुड्यादिभि-

रन्तरितस्य । तत्स्वाभाव्याभावात् । **स्वभावश्च** न कदाचित् कुत्रचित् केनचिदन्यथयितुं पार्य्यते । **अतः** स एव सर्वत्र नियमकारणमास्थेयम् । **तथा च** नेतरेतरधर्मप्रसङ्गः । **किमुक्तम्?** आदर्शोदकयोः खलु तत्प्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वरूपेण मुखादिना सन्निकर्षे सति प्रतिबिम्बग्रहणाख्यं तदुपलम्भनमुपजायते, न कुड्यादाविति दृष्टमेतत् । किमत्र कारणम्? । स्वभावः । प्रसादस्वभावो ह्यादर्शः प्रसादस्वभावं चोदकम् । तत्र संयुक्तस्य नयनरश्मेः परावृत्तिः सम्भवति । कुड्यादयश्च न तत्स्वभावाः । अतो न तत्र तत्परावृत्तिर्युज्यते । **यथा** चेह पदार्थस्वभावकृते परावृत्त्यपरावृत्ती **तथा** चक्षूरश्मेः काचादिभिरप्रतीघातः कुड्यादिभिश्च प्रतीघातोऽपि स्वभावकृतो वेदितव्यः । **सति** चैवं स्वभावे नियमकारणे "काचादिवद्वा कुड्यादिभिरप्रतीघातः कुड्यादिवद्वा काचादिभिः प्रतीघातः" इति धर्मविनिमयो न कथञ्चित् प्रसज्यते । **तदप्रसक्तौ** च **यत्राप्रतीघातः तत्रान्तरितस्य** विषयस्य सन्निकर्षोपपत्त्योपलब्धिः **यत्र** च प्रतीघातः **तत्र** तदनुपपत्त्याऽनुपलब्धिरित्युपपद्यते । **नास्ति** कश्चिद्दोष इति भावः ॥ ४५ ॥

**ननु** काचादीनां प्रतीघातः कुड्यादीनां चाप्रतीघातो धर्मो भवतु स्वभावात्, न विपरीतः? **तत्राह—**

**"दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः"** ॥ ४६ ॥

दृष्टानुमितानां=दृष्टानामनुमितानां च निखिलपदार्थानां नियोगप्रतिषेधानुपपत्तिः="एवं भवत" इत्यनुशासनं **नियोगः**, "मैवं भवत" इति निषेधनं **प्रतिषेधः**, नियोगश्च प्रतिषेधश्च नोपपद्येत इत्यर्थः ।

**द्विविधाः** खलु पदार्थाः केचिद् दृष्टाः केचिददृष्टाः अनुमिताः । **तत्र** दृष्टा वा अनुमिता वा ये यथा प्रमाणेनावगम्यन्ते न **ते** ततो वैपरीत्येन कर्हिचिन्नियोक्तुं वा प्रतिषेद्धुं वा शक्यन्ते । **नहि** रूपं चाक्षुषं तद्वद् गन्धोऽपि चाक्षुषो भवतु, गन्धो वाऽचाक्षुषस्तद्वद् रूपमपि चाक्षुषं माभूत, धूमेन ज्वलनप्रतिपत्तिर्भवति तद्वन्नीरप्रतिपत्तिरपि स्यात्,

नीराप्रतिपत्तिवद्वा ज्वलनप्रतिपत्तिरपि धूमेन माभूदिति नियोक्तुं वा प्रतिषेद्धुं वा केनचिदुत्सह्यते। **यथा** चेमे नियतस्वभावाः नियतधर्माश्च न जातु नियोक्तुमर्हन्ति न वा प्रतिषेद्धुं **तथा** काचादयः कुड्यादयश्चापि नियतस्वभावाः नियतधर्माश्च नियोगप्रतिषेधानर्हा वेदितव्याः। **न च** तेषु "काचादीनां प्रतीघातः कुड्यादीनां चाप्रतीघातो धर्मो भवतु स्वभावात्" इति नियोगः "कुड्यादीनां प्रतीघातः काचादीनां चाप्रतिघातो धर्मो माभूत्" इति प्रतिषेधो वा कथञ्चित्प्रवर्तितुमर्हति। स्वभावतो नियतस्य धर्मस्य नियोगपर्य्यनुयोगाविषयतायाः सर्वतन्त्रसिद्धत्वात्। कुड्यादिभिर्व्यवहितास्तावत्पदार्थाः न चक्षुषोपलभ्यन्ते, काचादिभिर्व्यवहिताश्चोपलभ्यन्ते। तेन कुड्यादीनां प्रतिघातः काचादीनां चाप्रतीघातो धर्मः प्रमाणेन प्रतिपद्यते। **यत्र** च यस्य प्रमाणेन प्रतिपत्तिस्तत्रैव तस्य व्यवस्थानमिति नेतरेतरधर्मप्रसङ्गः। **तदप्रसङ्गे** च काचादिभिरन्तरितस्याप्युपलब्धिरुपपन्नेति सिद्धं प्राप्यकारि खलु चक्षुरिन्द्रियं नाप्राप्यकारीति। **तथा च** युक्तो रश्म्यर्थसन्निकर्षविशेषो ग्रहणे हेतुरिति भावः॥

**इदमत्र बोध्यम्**—यथा हि चक्षुरिन्द्रियं गोलकातिरिक्तं प्राप्यकारि च **तथा** रसनादीनीन्द्रियान्तराण्यपि गोलकातिरिक्तानि प्राप्यकारीणि च वेदितव्यान्यन्यत्र श्रोत्रादिन्द्रियादिति॥ ४६॥

**गो**लकातिरिक्तानि प्राप्यकारीणि चेन्द्रियाणीति परीक्षितम्। **इदानीं** तेषामेकानेकत्वे परीचिक्षिषुः सन्दिग्धे—

**"स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः"॥ ४७॥**

स्थानान्यत्वे=स्थाननानात्वे नानात्वात्=स्थानिनानात्वदर्शनादवयविनानास्थानत्वाच्च=एकस्यावयविनोऽवयवलक्षणनानास्थानत्वसम्भवाच्च संशयः=किं नानास्थानानामिन्द्रियाणां स्थानिवन्नानात्वम्, आहोस्विदवयविवदेकत्वमिति भवति संशय इत्यर्थः।

**यावन्ति** स्थानानि **तावन्तः** स्थानिन इति क्वचिद् दृष्टं **यथा**

नानाभाजनस्थानाः नागरङ्गादयः फलभेदाः, क्वचिच्चावयवात्मकस्थानना-नात्वेऽपि स्थानी तावदेको दृष्टः **यथा** नानातन्तुस्थानोऽवयवी पटः। इन्द्रियाण्यपि नानास्थानानि दृश्यन्ते। **तेन** भवति सन्देहः किं नाना-स्थानमेकमिन्द्रियमवयविवत् आहोस्विन्नानेन्द्रियाणि नानास्थानकनानाफ-लवदिति भावः॥

**तत्रै**कमिन्द्रियमिति पूर्वः पक्षः, **नाने**न्द्रियाणीति सिद्धान्त इति विवेकः॥ ४७॥

**अत्र** पूर्वपक्षमाह—

**"त्वगव्यतिरेकात्"** ॥ ४८॥

त्वक्=त्वगेकमिन्द्रियं, **कुतः**? अव्यतिरेकात्=सम्बन्धाभावो व्यति-रेकः, तदभावोऽव्यतिरेकः, तस्मात्—तस्याः सर्वेन्द्रियस्थानेषु सम्बन्धादित्यर्थः।

**सर्व**शरीरव्यापिनी खलु त्वग्। नच तत् किञ्चिदिन्द्रियस्थानं विद्यते यत् सा न व्याप्नोति। कथमन्यथा कृष्णसाराद्यवच्छेदेनापि त्वाचज्ञान-मुत्पद्यते। **नहि** यत्र यत्र भवति **तत्र** तन्निमित्तं किञ्चिज्ज्ञानमुत्पत्तुमर्हति। **नच** यया सर्वेन्द्रियस्थानानि व्याप्तानि यस्यां च सत्यामखिलेन्द्रियविषय-ग्रहणं सम्पद्यते **ताम**पहायेन्द्रियान्तराभ्युपगमो युज्यते। गौरवप्रसङ्गात्। **अतो**ऽवयविवन्नानास्थाना त्वगेवैकमिन्द्रियमिति भावः॥ ४८॥

**सिद्धा**न्तमाह—

**"न युगपदर्थानुपलब्धेः"** ॥ ४९॥

न=यदुक्तं तन्न, **कुतः**? युगपत्=एकस्मिन् कालेऽर्थानुपलब्धेः=अ-खिलेन्द्रियार्थोपलम्भाभावादित्यर्थः।

**यदि** त्वगेवैकमिन्द्रियं स्यात् **तदा** स्पर्शोपलब्धिसमये रूपादयोऽप्यु-पलभ्येरन्। उपलब्धिनिमित्तस्य सन्निकर्षस्य स्पर्शवद् रूपादिभिरपि सद्भा-वात्। **नहि** घटं स्पृशन् रूपादिकं न स्पृशति। नच त्वचा स्पर्शोपल-ब्धिवेलायां रूपादय उपलभ्यन्ते। **नच** तदा त्वक्सामान्यसन्निकर्षे सत्यपि तत्तदिन्द्रियस्थरूपाद्युपलब्धिहेतुतदवयवविशेषाणां रूपादिभिः

सन्निकर्षाभावान्न तेषामुपलब्धिरिति कल्पना ज्यायसी । नानाभूतविजातीयावयवभेदकल्पनापेक्षया तत्तद्विषयोपलब्धिसाधनेन्द्रियभेदकल्पनस्यैव ज्यायस्त्वात् । अतो न त्वगेवैकमिन्द्रियमिति भावः ॥ ४९ ॥

ननु कतीन्द्रियाणि तर्हि मन्तव्यानि ? तत्राह—

(१) "इन्द्रियार्थपञ्चत्वात्" ॥ ५० ॥

इन्द्रियार्थानां गन्धादीनां पञ्चविधत्वात् पञ्चेन्द्रियाणीत्यर्थः ।

गन्धरसरूपस्पर्शशब्दा इति पञ्चविधस्तावदिन्द्रियार्थ उपलभ्यते । न च तस्यैकेन त्वगिन्द्रियेण ग्रहणं सम्भवति । त्वचः स्पर्शग्राहकत्वेऽपि गन्धादिग्राहकत्वाभावात् । नहि तया गन्धो वा रसो वा रूपं वा शब्दो वा क्वचिद्गृह्यते । नचोपलब्धस्यापह्नवो युक्तः । तस्मात् स्पर्शग्रहणोपलब्ध्या यथा स्पर्शविषयं त्वगिन्द्रियमभ्युपगम्यते तथा गन्धादिग्रहणोपलब्ध्या गन्धविषयं घ्राणं रसविषयं रसनं रूपविषयं चक्षुः शब्दविषयं श्रोत्रमप्यभ्युपगन्तव्यम् । अर्थपञ्चत्वेन तद्गोचरेन्द्रियपञ्चत्वस्याप्यौचित्यादिति भावः ॥ ५० ॥

अत्र शङ्कते—

"न तदर्थबहुत्वात्" ॥ ५१ ॥

न=यदुक्तं तन्न, कुतः ? तदर्थबहुत्वात्=इन्द्रियार्थानां बहुत्वादित्यर्थः ।

न खलु पञ्चैवार्थाः येन तद्ग्रहणप्रयोजनानि घ्राणादीनि पञ्चैवेन्द्रियाणि सिध्येयुः । अपि च ? बहवः । गन्धस्तावत् सुरभ्यसुरभिभेदाद् द्विविधः, रसो मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः, रूपं नीलशुक्ललोहितपीतहरितकपिशचित्रभेदात् सप्तविधं, स्पर्शः शीतोष्णानुष्णाशीतभेदात् त्रिविधः, शब्दो वर्णध्वनिभेदाच्च द्विविधः । सत्सु

(१) इतः पूर्वं "विप्रतिषेधाच्च न त्वगेका" इत्येकमधिकं सूत्रं मुद्रितपुस्तकेषूपलभ्यते । तच्च भाष्यं न सूत्रम् । कुत्रापि सूत्रत्वेन प्रतीकाग्रहणात् । न्यायतत्त्वालोके विश्वनाथवृत्तौ चाव्याख्यानात् ॥

चैवमर्थेषु बहुषु तद्ग्रहणप्रयोजनैरिन्द्रियैरपि बहुभिर्भवितव्यम्। **नहि** यस्येन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि, तस्येन्द्रियार्थबहुत्वाद् बहूनि तानि न सिध्यन्ति। **तस्मा**दिन्द्रियार्थपञ्चत्वादिन्द्रियाणि पञ्चेति न युक्तमिति भावः॥ ५१॥

**समाधत्ते**—

**"गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः"॥ ५२॥**

अप्रतिषेधः=इन्द्रियपञ्चत्वप्रतिषेधो न युज्यते, **कुतः?** गन्धादीनां=सुरभ्यसुरभ्यादिभेदेन भिन्नानां गन्धादीनामर्थानां गन्धत्वाद्यव्यतिरेकात्=गन्धत्वादिभिर्व्यतिरेकाभावात् सम्बन्धाभावो **व्यतिरेकः**, तदभावोऽ-**व्यतिरेकः** सम्बन्धः, सचेहाश्रयाश्रयिभावो विवक्षितः, गन्धत्वादीनामव्यतिरेकः गन्धत्वाद्यव्यतिरेकः, **तस्मात्** गन्धत्वाद्याश्रयत्वादिति यावदित्यर्थः।

**न** वयं गन्धादिभेदेनेन्द्रियार्थाः पञ्चेति ब्रूमो **येन** सुरभ्यसुरभ्यादि-भेदेन तेषां बहुत्वप्रसक्त्या तद्ग्रहणप्रयोजनानि घ्राणादीनीन्द्रियाण्यपि बहूनि सिध्येयुः। **अपि च?** गन्धत्वाद्याश्रयभेदेन। गन्धत्वाद्याश्रयस्तु सर्वो गन्धः, सर्वो रसः, सर्वं रूपं, सर्वः स्पर्शः, सर्वश्च शब्दः। न चास्ति कश्चिद् गन्धो वा रसो वा रूपं वा स्पर्शो वा शब्दो वा, यं खलु गन्धत्वा-दिकं नाधिकुरुते। **नहि** गन्धत्वाश्रयः केवलं गन्ध एव न सुरभि-र्वाऽसुरभिर्वा गन्ध इति केनचिद् वक्तुं शक्यते। **यथा हि** गन्धत्वेन सर्वे गन्धाः सङ्गृह्यन्ते **तथा** रसत्वेन सर्वे रसाः, रूपत्वेन सर्वाणि रूपाणि, स्पर्शत्वेन सर्वे स्पर्शाः, शब्दत्वेन च सर्वे शब्दा अपि सङ्गृह्यन्ते। **तथा च** कुतो बहुत्वम्। **किमुक्तं?** तदा हि सुरभ्यसुरभ्यादिभेदेन गन्धा-दीनामर्थानां बहुत्वं प्रसज्येत **चेत्** सुरभ्यादिगन्धो **गन्धाद्** मधुरा-दिरसो वा **रसाद्** नीलादिरूपं वा **रूपाद्** शीतादिस्पर्शो वा **स्पर्शाद्** वर्णादिशब्दो वा **शब्दाद्** व्यतिरिच्येत। **नच** सुरभ्यादिगन्धो **गन्धाद्** मधुरादिरसो वा **रसाद्** नीलादिरूपं वा **रूपाद्** शीतादि-

स्पर्शो वा **स्पर्शाद्** वर्णादिशब्दो वा **शब्दाद्** व्यतिरिच्यते । यच्च यस्मान्न व्यतिरिच्यते न तत्कृतोऽर्थभेदस्तावत् कथञ्चित् प्रसज्यते । **तस्मात्** पञ्चैवेन्द्रियार्थाः न बहवः । पञ्चत्वाच्च तेषां तद्ग्रहणप्रयोजनानीन्द्रियाण्यपि पञ्चैवेति भावः ॥ ५२ ॥

पुनराशङ्कते—

**"विषयत्वाव्यतिरेकादेकत्वम्"** ॥ ५३ ॥

गन्धादीनामित्यनुवर्तते । विषयत्वाव्यतिरेकात्=गन्धादीनां विषयत्वेन व्यतिरेकाभावादेकत्वम्=इन्द्रियैकत्वं स्यादित्यर्थः ।

**यदि** गन्धत्वाद्यव्यतिरेकाद् गन्धादीनां पञ्चत्वं **तदा** विषयत्वाव्यतिरेकादेकत्वमपि स्यात् । गन्धत्वादिनेव सुरभ्यादीनां विषयत्वेन गन्धादीनामपि सङ्ग्रहसम्भवात् । **नहि** गन्धो वा रसो वा रूपं वा स्पर्शो वा शब्दो वा विषयत्वमतिक्राम्यति । **यदा** च नातिक्राम्यति **तदै**कत्वमेवार्थानां न पञ्चत्वम् । एकत्वाच्च तद्ग्रहणप्रयोजनमिन्द्रियमप्येकमेव न पञ्चेति भावः ॥ ५३ ॥

**समाधत्ते**—

**"न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः"** ॥ ५४ ॥

न=यदुक्तं तन्न, **कुतः ?** बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः=पञ्चत्वशब्दो बुद्ध्यादिभिः प्रत्येकमभिसम्बध्यते, बुद्धिश्च लक्षणञ्चाधिष्ठानं च गतिश्चाकृतिश्च जातिश्च तास्तथा, तासां पञ्चत्वानि, तेभ्यः बुद्धिपञ्चत्वाल्लक्षणपञ्चत्वादधिष्ठानपञ्चत्वाद्गतिपञ्चत्वादाकृतिपञ्चत्वाज्जातिपञ्चत्वादित्यर्थः ।

**यथा हि** गन्धत्वेन स्वसामान्येन सुरभ्यादयः सर्वे गन्धाः रसत्वेन स्वसामान्येन मधुरादयः सर्वे रसाः रूपत्वेन स्वसामान्येन नीलादयः सर्वे रूपभेदाः स्पर्शत्वेन स्वसामान्येन शीतादयः सर्वे स्पर्शाः शब्दत्वेन स्वसामान्येन च वर्णादिलक्षणाः सर्वे शब्दाः कृतव्यवस्थाः ग्राहकान्तरनिरपेक्षाः एकेन्द्रियग्राह्याः अवगम्यन्ते **न** तथा विषयत्वेन स्वसामान्येन कृतव्यवस्थाः

गन्धादयो विषयाः खलु ग्राहकान्तरनिरपेक्षाः एकेन्द्रियग्राह्याः अवगम्यन्ते। तादृगवगमाभावे च तेषु विषयत्वसामान्येनैकेन्द्रियग्राह्यत्वलक्षणमेकत्वं न कथञ्चिद् व्यवतिष्ठते। तादृगेकत्वव्यवस्थानमेव चेह सामान्येन विवक्षितम्। **तथा च** तत्र विषयत्वेन सामान्येन तादृगेकत्वाभावात् न तद्ग्रहणप्रयोजनमिन्द्रियमप्येकं सेद्धुमर्हति, **किन्तु** गन्धग्रहणप्रयोजनं **घ्राणं,** रसग्रहणप्रयोजनं **रसनं,** रूपग्रहणप्रयोजनं **चक्षुः,** स्पर्शग्रहणप्रयोजनं **स्पर्शनं,** शब्दग्रहणप्रयोजनं **श्रवणं** चेति पञ्चैव तानि सिध्यन्ति। ग्राह्यार्थस्य पञ्चत्वेन तद्ग्राहकेन्द्रियपञ्चत्वस्याप्यावश्यकत्वात्। **यथा** चेन्द्रियार्थपञ्चत्वात् पञ्चैवेन्द्रियाणि **तथा** बुद्ध्यादीनां पञ्चत्वादपि पञ्चैव तानि निश्चेयानि। तत्र ज्ञानं **"बुद्धिः" तच्च** घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रावणं चेति पञ्चविधम्। तस्य पञ्चविधत्वे च तत्करणस्यापि पञ्चविधत्वमुचितम्। तद् विना तदनुपपत्तेः। **तस्मात्** तत्करणानीन्द्रियाणि पञ्च। समानासमानजातीयव्यवच्छेदकं **"लक्षणं"** तदपि "गन्धग्राहकमिन्द्रियं घ्राणं, रसग्राहकमिन्द्रियं रसनं, रूपग्राहकमिन्द्रियं चक्षुः, स्पर्शग्राहकमिन्द्रियं स्पर्शनं, शब्दग्राहकमिन्द्रियं श्रवणम्" इति प्रतीन्द्रियं भिन्नत्वात् पञ्चविधम्। न चेदं तस्मिन्नेकस्मिन् सति कथञ्चिदुपपद्यते। लक्षणभेदस्य लक्ष्यभेदनिबन्धनत्वात्। **अतस्तल्लक्ष्याणीन्द्रियाणि** पञ्च। स्थानम् **"अधिष्ठानं"** तदपि "नासाधिष्ठानं घ्राणं, जिव्हाधिष्ठानं रसनं, कृष्णसाराधिष्ठानं चक्षुः, सर्वशरीराधिष्ठानं स्पर्शनं, कर्णशष्कुल्यधिष्ठानं श्रोत्रम्" इति पञ्चविधम्। न चैतदिन्द्रियस्यैकत्वे युज्यते। निराकृतत्वात्। अतस्तदधिष्ठातॄणीन्द्रियाणि पञ्च। विषयप्राप्तिः **"गतिः"** अर्थग्रहणप्रकार इति यावत्। घ्राणरसनस्पर्शनानि ह्याश्रयोपसर्पणात् प्रत्यासीदन्तं विषयं गृह्णन्ति। चक्षुस्तु बहिर्निःसृतैश्चाक्षुषरश्मिभिः प्रत्यासन्नं, श्रवणं च सन्तानवृत्त्या प्रत्त्यासत्तिं प्राप्तं विषयं गृह्णाति। न चेदृशो गतिभेदोऽन्तरेणाश्रयभेदं सम्भवति। तदाश्रयश्चेन्द्रियाणि। **तस्मात्** तानि पञ्च। अधिष्ठानसंस्थानविशेषः **"आकृतिः"** साऽपि पञ्चविधा। तस्याः पञ्चविधत्वाच्च तदाकृतीनीन्द्रियाण्यपि पञ्च।

घ्राणत्वादिधर्मो जातिकल्पत्वाद् **"जातिः"** साऽपि पञ्चधा। तस्याः पञ्चधात्वाच्च तदाश्रयैरिन्द्रियैरपि पञ्चधा भवितव्यम्। धर्मभेदे धर्मिभेदस्यावश्यकत्वादिति पञ्चैव तानीन्द्रियाणीति भावः॥ ५४॥

**ननु** किमात्मकानीमानि घ्राणादीनि पञ्चेन्द्रियाणि? तत्राह—

**"भूतगुणविशेषोपलब्धेस्तादात्म्यम्"** ॥ ५५॥

भूतगुणविशेषोपलब्धेः=भूतानां पृथिव्यप्तेजोवाय्वाकाशानां ये गुणविशेषाः गन्धरसरूपस्पर्शशब्दास्तेषां घ्राणादिभिरिन्द्रियैर्नियमेनोपलम्भादवगम्यते तादात्म्यं=**तदा** भूतानि परामृशति, भूतात्मकत्वं तेषां, भूतात्मकानि तानीत्यर्थः।

**यत्** तावद् भूतानां गुणविशेषं नियमेनाभिव्यनक्ति **तत्** तदात्मकं दृष्टं **यथा** कुङ्कुमगन्धाभिव्यञ्जकं गोघृतं पृथिव्यात्मकं, मोदकरसाभिव्यञ्जकं दन्तान्तरस्यन्दमानलालोदकमुदकात्मकं, सुवर्णादिरूपाभिव्यञ्जकं प्रदीपादि ज्योतिरात्मकं, स्वेदोदविन्दुशीतस्पर्शाभिव्यञ्जकं व्यजनपवनादि पवनात्मकं, नानाविधशब्दाभिव्यञ्जकं भेर्य्यादिकं चाकाशात्मकम्। **घ्राणादीनीन्द्रियाण्यपि** पृथिव्यादीनां भूतानां गन्धादीन् गुणविशेषान् नियमेनाभिव्यञ्जन्ति। **दृश्यते** हि घ्राणं गन्धरसरूपस्पर्शशब्देषु गन्धमेव नियमेनाभिव्यनक्ति, रसनं रसं, चक्षू रूपं, स्पर्शनं स्पर्शं, श्रवणञ्च शब्दम्। नच यद् दृष्टं तत् कथञ्चिन्निह्नोतुं शक्यते। **तस्माद्** भवति प्रतिपत्तिः—**घ्राणं** खलु गोघृतवत् पार्थिवं, गन्धरसरूपस्पर्शशब्देषु गन्धस्यैवाभिव्यञ्जकत्वात्, **रसन**माप्यं लालावद् रसस्यैव, **चक्षु**स्तैजसं प्रदीपवद्रूपस्यैव, **स्पर्शनं** वायवीयं व्यजनपवनवत् स्पर्शस्यैव, **श्रवणं** व्योमात्मकं भेर्य्यादिवच्छब्दस्यैवाभिव्यञ्जकत्वादिति। **किमुक्तं**? यथा हि पृथिव्यादिभेदानां भूतगुणविशेषाभिव्यक्तिनियमो दृश्यते **तथा** घ्राणादीनामिन्द्रियाणामपि भूतगुणविशेषोपलब्धिनियमो दृश्यते। यथादर्शनं च कल्पनं न्याय्यम्। **अतः** प्रतिपद्यते **नूनं** भूतात्मकानि तानीति भावः॥ ५५॥

इन्द्रियाणि परीक्षितानि । क्रमप्राप्तमर्थन्तावत् परीक्षयिष्यन्नाह—

**"गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्य्यन्ताः पृथिव्याः"॥५६॥**

गन्धरसरूपस्पर्शशब्दानां=मध्ये षष्ठीयं, गन्धश्च रसश्च रूपञ्च स्पर्शश्च शब्दश्च ते तथा, तेषां स्पर्शपर्य्यन्ताः=गन्धरसरूपस्पर्शा इति चत्वारः पृथिव्याः=पृथिवीगुणाः वेदितव्या इत्यर्थः ॥ ५६ ॥

**"अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः"॥ ५७ ॥**

स्पर्शपर्य्यन्तानामिति विपरिणम्यानुवर्तते । पूर्वंपूर्वं=स्पर्शपर्य्यन्तानां चतुर्णां मध्ये पूर्वंपूर्वं गुणमपोह्य=वर्जयित्वा शिष्टाः गुणा अप्तेजोवायूनां=जलज्योतिरनिलानामाकाशस्य=व्योम्नश्चोत्तरः=अव्युत्पन्नशब्दोऽयं, स्पर्शानन्तरः शब्दो गुणो वेदितव्य इत्यर्थः ।

ये खलु गन्धरसरूपस्पर्शशब्दा इति पृथिव्यादिभूतानां गुणविशेषाः तेऽर्थाः । तत्र गन्धरसरूपस्पर्शाः **पृथिव्याः**, रसरूपस्पर्शा **अपां**, रूपस्पर्शौ **तेजसः**, स्पर्शो **वायोः**, शब्द **आकाशस्य** गुण इति भावः ॥ ५७ ॥

पूर्वपक्षयति—

**"न सर्वगुणानुपलब्धेः" ॥ ५८ ॥**

न=उक्तो गुणविनियोगः सम्यग् न, **कुतः ?** सर्वगुणानुपलब्धेः=उक्तानां सर्वेषां तत्तद्भूतगुणानां तत्तद्भूतात्मकेनेन्द्रियेणोपलम्भाभावादित्यर्थः ।

**तदा** हि गन्धरसरूपस्पर्शवती "**पृथिवी**" रसरूपस्पर्शवत्यः "**आपः**" रूपस्पर्शवच्च "**तेजः**" इति सिध्येत्, **चेत्** ते सर्वे गुणाः तत्तदात्मकेनेन्द्रियेणोपलभ्येरन् । **नच** पार्थिवेन **घ्राणेन** गन्धादयः सर्वे गुणा उपलभ्यन्ते, **रसनेन** चाप्येन रसादयः । न चोपलब्धिमन्तरेण तदभ्युपगमो युक्तः । **नहि** यस्य भूतस्येन्द्रियेण यो गुणो नोपलभ्यते सोऽपि तद्गुण इति युज्यते । गन्ध एव **घ्राणेन,** रसो **रसनेन,** रूपं **चक्षुषा,** स्पर्शः **स्पर्शनेन,** शब्दश्च **श्रवणेनो**पलभ्यते **न** रसादिः ।

**तस्मा**देकैकस्य तस्य तत्तद्भूतगुणत्वसम्भवेऽपि न रसादीनां तद्गुणत्वं सम्भवति। **तथा** चायुक्तोऽयं गुणविनियोग इति भावः ॥ ५८ ॥

**अत्र** पूर्वपक्षिवर्गान्तरगतः **कश्चित्** स्वमतेन सर्वगुणानुपलब्धिं समर्थयते—

**"एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः" ॥ ५९ ॥**

उत्तरोत्तराणां=निष्ठाषष्ठीयम्, उत्तरोत्तरभूतानामबादीनामेकैकश्येन=एकैकत्वेन एकैकक्रमेणेतियावदुत्तरोत्तरगुणसद्भावात्=उत्तरोत्तरगुणानां रसादीनां सद्भावाभ्युपगमात् तदनुपलब्धिः=पृथिव्यादिषु घ्राणादिभिस्तेषामुपलब्धिर्न भवतीत्यर्थः।

**गन्धादीनामेकैकस्तावद्** यथाक्रमं पृथिव्यादीनामेकैकस्य गुणोऽभ्युपगम्यते **न** स्पर्शपर्य्यन्ताः पृथिव्याः पूर्वपूर्वमपोह्यापस्तेजोवायूनामाकाशस्य चोत्तर इति। **अतो** रसादीनामुत्तरोत्तरभूतगुणत्वेन पृथिव्यादिष्वसद्भावाद् घ्राणादिभिस्तदनुपलब्धिर्युज्यते **नास्ति** कश्चिद् दोष इति भावः॥ ५९॥

**ननु** कस्मात् तर्हि पृथिव्यादिषु रसादय उपलभ्यन्ते ? **तत्राह—**

**"विष्टं ह्यपरं परेण" ॥ ६० ॥**

हि=यस्मादपरं=पूर्वं परेण=उत्तरेण विष्टं=संयोगविशेषो विष्टत्वं, संयुक्तं विद्यत इत्यर्थः।

**यथा** हि पृथिव्यादिषु शीतस्पर्शादीनामभावेऽपि **"शीतलं शिलातलम्"** इत्यादितदुपलब्धिरबादिसंयोगादौपाधिक्यभ्युपेयते **तथा** रसादीनामुपलब्धिरप्यौपाधिकी वेदितव्या । पृथिव्यादीनां पूर्वपूर्वभूतेनोत्तरोत्तरभूतसंयोगस्याभ्युपेतत्वात् । **किमुक्तं ?** पृथिव्यादीनां हि पूर्वंपूर्वं भूतमुत्तरमुत्तरं भूतं वेविष्टे। तस्य च तेन विष्टत्वात् तत्रौपाधिकी रसादीनामुपलब्धिरिति भावः ॥ ६० ॥

**सिद्धान्तयति—**

**"न पार्थिवाप्ययोः प्रत्यक्षत्वात्" ॥ ६१ ॥**

नेति त्रिसूत्रीं प्रत्याचष्टे। न=यदुक्तं तन्न, कुतः? पार्थिवाप्ययोः=पार्थिवरसस्याप्यस्य च रूपस्य प्रत्यक्षत्वात्=रसनेन चक्षुषा चोपलभ्यमानत्वादित्यर्थः।

पृथिव्यां हि मधुरादिभेदेन षड्विधो रसोऽप्सु च शुक्लो रूपं प्रत्यक्षेणोपलभ्यते। नच प्रत्यक्षेणोपलब्धस्यापलापः सम्भवति। तस्य सर्वप्रमाणज्येष्ठत्वेन प्रबलत्वात्। नचोत्तरोत्तरभूतसंयोगात् तत्र तदुपलब्धिरिति युक्तं भाषणम्। अप्सु मधुररसस्यैकस्य सत्त्वेऽपि षड्विधरसस्य, तेजसि च लोहितरूपसत्त्वेऽपि शुक्लरूपस्यासत्त्वात्। नहि यत्र यो गुणः कालत्रयेऽपि सत्त्वं न समश्नुते तत्संयोगात् सोऽन्यत्रोपलभ्यत इत्युपपद्यते। न चानुपपन्नस्य कल्पना युक्ता। तस्मात् पूर्वपूर्वभूतस्योत्तरोत्तरभूतेन विष्टत्वात् पृथिव्यादिषु रसादीनामुपलब्धिरिति यत् किञ्चिदेतत्। किमुक्तं? तदा हि पृथिव्यादिषु रसादीनामुपलब्धिरौपाधिकी कल्प्येत चेदप्सु षड्विधो रसः, तेजसि च शुक्लो रूपं विद्येत। नचाप्सु षड्विधो रसः, तेजसि च शुक्लो रूपं विद्यते। न च तत्राविद्यमानस्यान्यत्रोपलब्धिरौपाधिकी युज्यते। तस्मान्मन्तव्यं यथा हि पृथिव्यादीनां गन्धादयो गुणाः स्वाभाविकाः तथा रसादयोऽपि। विशेषस्त्वियानेव यत् पृथिव्यादीनां गन्धादयो नैजाः गुणाः कारणक्रमाच्च रसादय इति। यावद्भूतसूक्ष्मारब्धं कार्य्यद्रव्यं तत्सर्वं पाञ्चभौतिकमित्यभ्युपगमात्। तद्यथोक्तं पुरस्तात् "नोष्णाशीतवर्षकालनिमित्तत्वात् पञ्चात्मकविकाराणाम्" (न्या० ३।१।२०) इति। दर्शनान्तरेऽप्युक्तं "द्रव्येषु पञ्चात्मकत्वम्" (वै० ८।२।४) इति। तथा च पृथिव्यादिषु न रसादीनामुपलब्धिरौपाधिकीति सिद्धमिति भावः॥ ६१॥

ननु रसादयोऽपि चेत् पृथिव्यादीनां स्वाभाविकाः गुणाः, तदा कुतस्ते गन्धादिवद् घ्राणादिभिर्न गृह्यन्ते? तत्राह—

**"पूर्वपूर्वं गुणोत्कर्षात् तत्तत्प्रधानम्"॥ ६२॥**

पूर्वपूर्वं=घ्राणादीनामिन्द्रियाणां पूर्वपूर्वमिन्द्रियं घ्राणादीन्द्रीयमिति यावद्

गुणोत्कर्षात्=उत्कर्षः प्राधान्यं, गन्धादिगुणप्राधान्यात् तत्तत्प्रधानं=तत्तद्गुणग्रहणप्रधानं यथाक्रमं गन्धादिगुणग्राहकमिति यावद् विद्यत इत्यर्थः।

**यस्मिन्** द्रव्ये हि यो गुण उत्कृष्यते तद् द्रव्यं द्रव्यान्तरगतं तद्गुणमेवाभिव्यनक्ति न गुणान्तरमिति नियमः। **दृश्यते** हि गन्धोत्कर्षाद् गोघृतं कुङ्कुमगन्धमेवाभिव्यनक्ति न तद्रसं न वा तद्रूपं, रसोत्कर्षाच्च लालोदकं मोदकरसमेवाभिव्यनक्ति न तद्गन्धं न वा तद्रूपम्। घ्राणादीन्द्रियद्रव्येष्वपि गुणान्तरसमवाये सत्यपि गन्धादय एव गुणा उत्कृष्यन्ते न रसादयः। **तस्मात्** तैरपि पृथिव्यादिषु द्रव्येषु गन्धादिगुणग्राहकैरेव भवितव्यं न गुणान्तरग्राहकैः, । **तस्य** तत्रोत्कर्षाभावात्। **किमुक्तं?** घ्राणमिन्द्रियं पार्थिवं गन्धमेव गृह्णाति रसनं चाप्यं रसमेव न गुणान्तरमित्यत्र गन्धादिगुणानामुत्कर्ष एव कारणं विद्यते न जात्वन्यत् किञ्चित्। **लोके** यत्र द्रव्ये यस्य गुणस्योत्कर्षः तद्द्रव्येण द्रव्यान्तरगततद्गुणग्रहणस्यैव दर्शनात्। **नहि** पार्थिवाप्यतैजसानां गोघृतादिद्रव्याणां गुणान्तरग्राहकत्वमद्यापि केनचिद् दृश्यते। गन्धरसरूपादिग्राहकत्वं तु गन्धरसरूपाद्युत्कर्षादित्यन्यत्रापि सुवचम्। **अतो** रसादीनां पृथिव्यादिगुणत्वे सत्यपि गन्धादिवद् घ्राणादिभिर्न ग्रहणं **तत्र** तदुत्कर्षाभावादिति भावः॥ ६२॥

**ननु** पाञ्चभौतिकत्वाविशेषेऽपि घ्राणादिषु गन्धादीनामेवोत्कर्षो न रसादीनामिति कुतो व्यवसीयते? तत्राह—

**"तद्व्यवस्थानं तु भूयस्त्वात्"** ॥ ६३॥

तद्व्यवस्थानं तु=**तदा** गुणोत्कर्षं परामृशति, **तुना** तत्र भूयस्त्वातिरिक्तं निमित्तान्तरं व्यवच्छिनत्ति, गुणोत्कर्षव्यवस्थानन्तु भूयस्त्वात्=प्रकृतिद्रव्यस्याधिक्याद् वेदितव्यमित्यर्थः।

**यद्यपि** सर्वाणीन्द्रियाण्यविशेषेण पाञ्चभौतिकानि **तथाप्यस्ति** तत्रैकैकस्य प्रकृतिभूतस्य द्रव्यस्य भूयस्त्वं, **तद्यथा** घ्राणे पृथिव्याः, रसनेऽपां, चक्षुषि तेजसः, स्पर्शने वायोः, श्रवणे चाकाशस्य। **यस्य** च

यत्र भूयस्त्वं तद्गुणस्य तत्रोत्कर्ष इति सुखेन व्यवस्थातुं शक्यते। **नहि** सति भूयसि द्रव्ये तद्गुणोत्कर्षेण न जातु भवितव्यमिति सम्भवति। तत्र तत्र द्रव्यभूयस्त्वं चोक्तं दर्शनान्तरेऽपि **"भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः"** (वै० ८।२।५) **"तथाऽऽपस्तेजोवायुश्च रसरूपस्पर्शज्ञानेऽविशेषात्"** (वै० ८।२।६) इति। गन्धादिमत्त्वं च घ्राणादीनामग्रिमसूत्रे स्पष्टम्। **अतो** घ्राणादिषु गन्धादय एवोत्कृष्यन्ते न रसादय इति युक्तं व्यवस्थानमिति भावः ॥ ६३ ॥

**ननु** घ्राणादिषु चेद् गन्धादीनामुत्कर्षः **तदा** कुतस्ते तैर्नोपलभ्यन्ते ? तत्राह—

**"सगुणानामिन्द्रियभावात्"** ॥ ६४ ॥

सगुणानां=गन्धादिगुणसहितानां घ्राणादीनामिन्द्रियभावात्=इन्द्रियत्वादित्यर्थः।

इन्द्रियैः सद्भिर्घ्राणादिभिर्गन्धादयो गुणा उपलब्धुं शक्यन्ते नानिन्द्रियैः सद्भिः। इन्द्रियत्वं च तेषां गन्धादिगुणसहितानामेव न केवलानाम्। **लोके** सर्वत्र सगुणानामेव द्रव्याणां परकीयगुणाभिव्यञ्जकत्वदर्शनात्। **नहि** निर्गन्धं गोघृतं कुङ्कुमगन्धं नीरसं वा लालोदकं मोदकरसं नीरूपं वा प्रदीपादि सुवर्णादिरूपमभिव्यनक्ति। नच यथादर्शनं कल्पनमन्याय्यम्। **अतः** केवलानामिन्द्रियभावाभावेन सगुणानां चेन्द्रियभावभावेऽपि स्वभिन्नगन्धादिविषयाभावेन न घ्राणादिभिः स्वगतगन्धादिगुणोपलब्धिरिति भावः ॥ ६४ ॥

अत्रैव हेत्वन्तरमाह—

**"तेनैव तस्याग्रहणाच्च"** ॥ ६५ ॥

घ्राणादिभिः स्वगुणानुपलब्धौ द्वितीयोऽयं हेतुरिति सूचनाय चकारः। इतरव्यवच्छेदार्थश्चैवकारः। तेनैव=स्वेनैव तस्य=स्वस्याग्रहणाच्च=ग्रहणासम्भवाच्चेत्यर्थः।

**यथा** हि कर्णच्छिद्रं वर्जयित्वा न केवलमाकाशं श्रोत्रभावमुपसम्पद्यते **तथा** गन्धादिगुणान् वर्जयित्वा घ्राणादीन्यपि केवलानि नेन्द्रियभावमुपसम्पत्तुमर्हन्ति। **यान्** विना च यानि नेन्द्रियभावमुपसम्पत्तुं पारयन्ति **नच** ते तत्स्वरूपतोभिन्नत्वेन कर्हिचित् परिगणयितुं शक्यन्ते। **नहि** कर्णतः कर्णच्छिद्रं खलु भिन्नं परिगण्यते। **तेषां** तत्स्वरूपतो भेदाभावे च घ्राणादिभिः स्वगुणोपलब्धौ चोद्यमानायां स्वेनैव स्वस्य ग्रहणं प्रसज्यते। तच्चासम्भवम्। आत्माश्रयप्रसङ्गात्। **अतो** न तैस्तदुपलब्धिरिति भावः॥ ६५॥

**अत्र** शङ्कते—

**"न शब्दगुणोपलब्धेः"** ॥ ६६ ॥

न=यदुक्तं तन्न, **कुतः?** शब्दगुणोपलब्धेः=श्रोत्रेणात्मीयस्य शब्दगुणस्योपलम्भादित्यर्थः।

**कर्ण**शष्कुल्यवच्छिन्नं नभः खलु श्रोत्रम्। तेन च प्रत्यक्षा शब्दोपलब्धिः। शब्दश्च नभोगुण इति निर्विवादम्। **अत**स्तेनैव तस्योपलब्धेः स्पष्टो व्यभिचार इति भावः॥ ६६॥

**स**माधत्ते—

**"तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात्"** ॥ ६७ ॥

इतरेतरद्रव्यगुणवैधर्म्यात्=इतरेतरम् अन्योऽन्यं द्रव्यगुणानां घ्राणादिद्रव्याणां गन्धादिशब्दान्तानां च तद्गुणानां वैधर्म्यात् विलक्षणधर्मकत्वात् तदुपलब्धिः=तस्य शब्दगुणस्य श्रोत्रेणोपलब्धिर्वेदितव्येत्यर्थः।

**यथा** हीन्द्रियभावाय घ्राणादीनि द्रव्याणि गन्धादिगुणसाहाय्यमाकांक्षन्ति **न** तथाऽऽकाशं द्रव्यमिन्द्रियभावाय शब्दगुणसाहाय्यमाकांक्षति। **तस्य** तत्साहाय्यं विनैव तदुपपत्तेः। **नहि** गन्धादीनां गन्धादिव्यञ्जकत्ववद् शब्दस्य शब्दव्यञ्जकत्वमस्ति, **येन** तत्र तत्साहाय्यं कल्प्येत। **यथा** चेदं द्रव्याणामन्योऽन्यं वैधर्म्यं **तथा** तद्गुणानामपि वेदितव्यम्। **शब्दो** हि सन्तानवृत्त्या श्रोत्रेन्द्रियमुपसीदति, **गन्धा-**

दयस्तु न तथा तत्तदिन्द्रियमुपसीदन्ति । सति चेद्दशि द्रव्यगुणवैधर्म्ये तदुपलब्धिवैधर्म्येणाप्यवश्यं भवितव्यम् । नहि भवति निमित्ते नैमित्तिकं न भवतीति युज्यते । नच श्रोत्राकाशेनोपसन्नस्य शब्दस्योपलब्धिरप्रामाणिकी विद्यते । अनुमानगम्यत्वेन प्रामाणिकत्वात् । तथा चेतरेतरद्रव्यगुणवैधर्म्याच्छ्रोत्रेणैकेन कथञ्चित् स्वगुणस्य शब्दस्योपलम्भेऽपि न तद्विरुद्धधर्मकैरिन्द्रियान्तरैः स्वगुणा उपलब्धुं शक्यन्ते । तस्मादचलोऽयं नियमः यदिन्द्रियैः स्वगुणा नोपलभ्यन्त इति । तस्य च श्रोत्रेन्द्रियातिरिक्तेन्द्रियविषयत्वान्नव्यभिचार इति भावः ॥ ६७ ॥

**आत्मा कायस्तथा खानि तदर्था भौतिका गुणाः ।**
**तृतीयस्याह्निके पूर्वे सम्यगेते परीक्षिताः ॥ १ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ तृतीयाध्यायस्याद्यमाह्निकम् ।**





# तृतीयोऽध्यायः

## द्वितीयमाह्निकम्

**अथ** क्रमप्राप्तां **बुद्धिं** परीक्षितुकामः **पूर्वं** तावत् परीक्षाङ्गभूतं संशयमाह—

**"कर्माकाशसाधर्म्यात् संशयः"** ॥ १ ॥

कर्माकाशसाधर्म्यात्=कर्म चाकाशं च ते तथा, ताभ्यां समानः तुल्यो धर्मः अस्पर्शत्वलक्षणो धर्मो यस्याः बुद्धेः सा तथा, तस्याः भावस्तत्त्वं तस्मात् कर्माकाशसमानधर्मत्वात् संशयः=किं कर्मवदनित्या बुद्धिः आहोस्विदाकाशवन्नित्येति भवति संशय इत्यर्थः ।

**यत्** खल्वस्पर्शि वस्तु तन्नित्यमनित्यं चोभयथा दृष्टम् । तद्यथाऽस्पर्शि कर्म तदनित्यं क्षणिकत्वात्, अस्पर्शमाकाशं तन्नित्यं चिरस्थायित्वात् । बुद्धिरप्यस्पर्शा । नहि सा केनचित्स्पृश्यते । अतो भवति संशयः किमेषा कर्मवदनित्या आहोस्विदाकाशवन्नित्येति । **किमुक्तं?** यस्य येन साधर्म्यं तत्तत्कल्पमुपलब्धं **यथा** घटसधर्मा पटो घटकल्पः । बुद्धावपि कर्माकाशाभ्यां साधर्म्यमुपलभ्यते । अस्ति निःस्पर्शि कर्म निःस्पर्शमाकाशं निःस्पर्शा च बुद्धिः । अतोऽनयाऽपि कर्मकल्पया वाऽऽकाशकल्पया वाऽवश्यं भवितव्यम् । अनित्यं च कर्म । तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात् । नित्यमाकाशम् । आमहाप्रलयं स्थायित्वात् । **तथा च** संशयः किमियमप्यनित्याऽ**थवा** नित्येति भावः ॥

**तत्र** बुद्धिरेवात्मा, मनोऽन्तःकरणं चित्तं चेति तन्नामान्तरम् । गोलकमात्राणि चेन्द्रियाणि । तत्र प्रतिबिम्बिताः विषयाः अनिशं तत्संसृष्टायां बुद्धौ प्रतिबिम्बन्ति । तत्र प्रतिबिम्बनाच्च येयं तस्यास्तत्तद्विषयाकारता

तदेव घटोऽयं पटोऽयमिति तत्तद्विषयविज्ञानम् । सोऽयं तत्तद्विषयाकारतालक्षणो धर्मो न बुद्धिसकाशाद् भिन्नः । धर्मधर्मिणोरभेदाभ्युपगमात् । सा चैका स्थास्नुर्नित्या चेति **पूर्वः पक्षः** । आत्मेन्द्रियार्थसन्निकर्षजन्यं ज्ञानं बुद्धिः । सा च नात्मा **किन्तु** मनःसंयुक्तस्यात्मनो गुणोऽनित्या चेति **सिद्धान्त** इति विवेकः ॥ १ ॥

पूर्वपक्षयति—

**"विषयप्रत्यभिज्ञानात्" ॥ २ ॥**

विषयस्य प्रत्यभिज्ञानं प्रतिसन्धानं तस्मादवगम्यते नित्या बुद्धिरित्यर्थः ।

**यदिदं** दृष्टवस्तुविषयं "तदेवेदम्" इति प्रतिसन्धानात्मकं विज्ञानं तत् "प्रत्यभिज्ञानम्" इत्युक्तम् । तदधिकरणं च बुद्धिरेव नान्यत् किञ्चित् । अनभ्युपगमात् । नच बुद्धेरस्थिरत्वे तदधिकरणत्वमुपपद्यते । अन्येन दृष्टस्यान्येन प्रत्यभिज्ञानासम्भवात् । **नहि** चैत्रेण दृष्टं मैत्रः प्रत्यभिजानातीति सम्भवति । बुद्धेरस्थिरत्वे चोदयव्ययावश्यम्भावेन येयं द्रष्ट्री न सा प्रत्यभिज्ञात्री या च प्रत्यभिज्ञात्री न सा द्रष्ट्रीत्यन्येन दृष्टस्यान्येन प्रत्यभिज्ञानं विस्पष्टम् । **अतो** भवति प्रतिपत्तिर्नूनं प्रत्यभिज्ञानाश्रयो बुद्धिः स्थिरा, स्थिरत्वाच्चाकाशवन्नित्येति । **किमुक्तं ?** यत् किल वैदिकाः मनोऽन्तःकरणं बुद्धिश्चित्तमिति नामभागात्मनो जीवभावनिर्वर्त्तकं प्राणव्यापारमिन्द्रियप्रमुखाखिलशरीरनायकं प्रत्यात्मं भिन्नं सत्त्वप्रधानत्वात् सात्त्विकं द्रव्यभेदमातिष्ठन्ते तमेव वयं वाह्या आत्मेति व्याचक्ष्महे । नचैतद् बुद्धितत्त्वं वैदिकानामिवास्माकं ज्ञानसाधनं **किन्तु** तदधिष्ठानं स्फटिकवन्नितान्तोज्ज्वलम् । ज्ञानं च न तद्गुणः **अपि च ?** विलक्षणशक्तिकेषु गोलकमात्रेष्विन्द्रियेषु प्रतिबिम्बितानामर्थानां तत्र प्रतिबिम्बनाद् यः खलु तस्य तदाकारतावभासः सः । तस्य चौपाधिकत्वान्न तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि तत् सम्बध्यते । **अत एव** चैकं नित्यं बुद्धितत्त्वमात्मेत्यास्माकीनः प्रवादः । प्रत्यभिज्ञानमपि ज्ञातार्थप्रतिबिम्ब एव नान्यत् किञ्चित् । तच्च तस्य स्थिरत्वे सम्भवति न क्षणिकत्वे । नहि

क्षणमात्रस्थितिकं प्रति ज्ञातेत्यर्थविशेषणमुपपद्यते। स्थिरं च सर्वं नित्यं दृष्टं यथाऽऽकाशम्। तस्मादवगम्यते बुद्धितत्त्वमपि नित्यमिति भावः॥ २॥

उत्तरयति—

**"साध्यसमत्वादहेतुः"॥ ३॥**

अहेतुः="विषयप्रत्यभिज्ञानात्" इत्ययमहेतुः, **कुतः?** साध्यसमत्वात्=साध्येनाविशिष्टत्वात् असिद्धत्वादित्यर्थः।

**सिद्धो** हि हेतुर्भवति नासिद्धः। प्रत्यभिज्ञानं च बुद्धेर्नित्यत्ववन्नाद्यापि सिध्यति। नहि चेतनधर्मः प्रत्यभिज्ञानमचेतनायाः बुद्धेर्धर्मः सम्भवति। चेतनो हि ज्ञातपूर्वमर्थं प्रत्यभिजानाति नाचेतनमिति सर्वजनीनम्। अचेतना च बुद्धिः। **तस्माद**सिद्धो हेतुः। तदसिद्धौ च स्थिरत्वासिद्धेर्न तावन्नित्या बुद्धिरिति सिद्धमिति भावः॥ ३॥

ननु चेतना बुद्धिर्नाचेतना? तत्राह—

**"न युगपदग्रहणात्"॥ ४॥**

न=चेतना बुद्धिर्न, **कुतः?** युगपत्=एकदाऽग्रहणात्=नानार्थाग्रहणादित्यर्थः।

**चे**दियं चेतना भवेत् **तदा**ऽनिशं गोलकमात्रसन्निहितया तया युगपत् सर्वेऽर्था गृह्येरन्। **नहि** नानागवाक्षसन्निहितो वेश्मान्तरालस्थः पुमान् न नानार्थान् युगपद् गृह्णाति। न च वैदिकानामिवास्ति मध्ये युष्माकं किञ्चित् करणान्तरं येनायुगपद्ग्रहणं व्यवस्थाप्येत। नचान्तरेण नियामकं किञ्चिद् व्यवस्थापयितुं शक्यते। न च भवति युगपद् ग्रहणम्। **तस्मात्** प्रतिपद्यते न खलु चेतना बुद्धिः **अपि च?** अचेतनेति भावः॥ ४॥

**ननु** माभूत् तर्हि प्रत्यभिज्ञानं को दोषः? तत्राह—

**"अप्रत्यभिज्ञाने च विनाशप्रसङ्गः"॥ ५॥**

अप्रत्यभिज्ञाने च=प्रत्यभिज्ञानाभावे च विनाशप्रसङ्गः=बुद्धेर्विनाशः प्रसज्येतेत्यर्थः।

प्रत्यभिज्ञानबलेनैव तावत् स्थिरा बुद्धिः सिध्यति । **यदा** च तस्याः प्रत्यभिज्ञानमेव न भवति **तदा** कुतस्तत्स्थैर्य्यं सिध्येत् । **नह्यहेतुकं** स्थैर्य्यं क्वचित् सेद्धुमर्हति । तदसिद्धौ चास्थिरा सेति हसताऽऽस्थेयम् । **तथा च** ध्रुवस्तस्या विनाशप्रसङ्ग इति भावः ॥ ५ ॥

**बुद्धे**र्विनाशप्रसक्तिमसहमानः पुनराशङ्कते—

**"क्रमवृत्तित्वादयुगपद्ग्रहणम्"** ॥ ६ ॥

अयुगपद्ग्रहणं=बुद्धेर्युगपद्ग्रहणाभावः क्रमवृत्तित्वात्=क्रमेण वृत्तिः अर्थैः सम्बन्धो यस्याः सा तथा, तस्या भावस्तत्त्वं तस्मात् युगपदर्थैः सम्बन्धाभावाद् वेदितव्य इत्यर्थः ।

न खलु बुद्धेरचेतनत्वाद् युगपद्ग्रहणाभावः **अपि च**? अर्थैर्युगपत्सम्बन्धाभावात् । अतो येन सम्बन्धस्तस्य ग्रहणं येन चासम्बन्धस्तस्याग्रहणमिति बुद्धेश्चेतनत्वेऽपि युगपदग्रहणमुपपद्यते । **नहि** चेतनोऽपि भवन्नात्मासम्बद्धमर्थं कंचिद् ग्रहीतुं शक्नोति । सम्बद्धं हि गृह्यते नासम्बद्धमिति निर्धारणात् । **तथा च** युगपदग्रहणादचेतना बुद्धिरित्ययुक्तमिति भावः ॥ ६ ॥

**ननु** सत्यपि सम्बन्धे क्वचिदग्रहणं दृश्यते? तत्राह—

**"अप्रत्यभिज्ञानञ्च विषयान्तरव्यासङ्गात्"** ॥ ७ ॥

अप्रत्यभिज्ञानं च=प्रत्यभिज्ञानमत्र ग्रहणमात्रमाह नतु ज्ञातार्थग्रहणम्, चस्त्वर्थो ग्रहणाभावप्रयुक्तप्रसक्तमचैतन्यं व्यवच्छिनत्ति, क्वचित् सत्यपि सन्निकर्षे ग्रहणाभावस्तु विषयान्तरव्यासङ्गात्=अन्यो विषयो विषयान्तरं, तत्र प्रसक्तिर्व्यासङ्गस्तस्मात् अर्थान्तरे नितान्तासक्तत्वाद् वेदितव्य इत्यर्थः ।

**सत्यं** क्वचित् सन्निकर्षे सत्यपि भवत्यग्रहणं **तथापि** न तेन बुद्धेरचैतन्यं सेद्धुमर्हति । तस्य विषयान्तरव्यासक्त्याऽप्युपपत्तेः । कार्य्यान्तरत्यागेनैकपरत्वं हि व्यासङ्गः । नच सति तस्मिन् सन्निहितमपि केनचिदर्थान्तरं ज्ञातुं शक्यते । नह्येकत्र निलग्नोऽन्यत् किञ्चिज्जानातीत्युपपद्यते । नच व्यासक्तौ सत्यामर्थान्तरग्रहणेऽस्ति किञ्चित् प्रमाणम् । अप्र-

हणं तु व्यासक्तमनसो भावत्की बृहदारण्यकश्रुतिरेवाचष्टे **"अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषम्"** (बृह० ३।५।३ ) इति। लोकानुभवश्चेह प्रत्यक्ष एव न तदाम्रेडनं युक्तम्। बुद्धिरपि चेत् कदाचित् सन्निहितमर्थं न जानीते तदा न तेन तदचैतन्यमनुमातव्यम्, **अपि च?** विषयान्तरव्यासङ्गः। तेनापि तदज्ञानसम्भवात्। **तथा च** निमित्तान्तरानुमानमयुक्तम्। **नहि** धूमस्यार्द्रेन्धनसंयोगलक्षणे निमित्ते सम्भवति पुनरशक्यसम्भवं निमित्तान्तरं किञ्चिदनुमिन्वतेऽनुमातारः। **तस्मात्** सन्निहितविषयाग्रहणेऽपि नाचेतना बुद्धिः **अपि च?** चेतना। चेतनत्वाच्च विषयप्रत्यभिज्ञानोपपत्त्या विनाशाप्रसङ्गे नित्येति भावः॥ ७॥

**समाधत्ते—**

**"गत्यभावात्"** ॥ ८॥

न=यदुक्तं तन्न, **कुतः?** गत्यभावात्=गमनाभावात् विषयग्रहणार्थं बुद्धेर्गमनानभ्युपगमादित्यर्थः।

स्थास्नुर्हि **बुद्धिः** न सा विषयदेशं गन्तुमर्हति। तत्रागच्छन्त्याश्च तस्याः न **जातु** क्रमवृत्तित्वमुपपद्यते। प्रतिविषयं क्रमेण वर्तनं हि क्रमवृत्तित्वम्। यस्याश्च गतिरेव न विद्यते सा **कथं** प्रतिविषयं क्रमेण वर्तेत। **यत्** किल बुद्धौ **विषया** आत्माकारमादधते **तदेव** ते ज्ञानं, न वैदिकानामिव संयोगजो गुणः। **तत्र** द्वारभूतानि च गोलकानि सर्वदा विवृतमुखानि न क्रमप्रयोजकानि सम्पद्यन्ते। अन्यच्च नास्ति ते किञ्चित् क्रमप्रयोजकं निमित्तम्। नच बुद्धेः प्रतिविषयं गतिरभ्युपगम्यते, येन सा तत्र निमित्तं सम्भवेत्। नच निमित्ताभावे नैमित्तिकमुपपत्तुमर्हति। नैमित्तिकश्च क्रमः। तदनुपपत्तौ च क्रमवृत्तित्वासम्भवादनुपपन्नं युगपदग्रहणम्। युगपद्ग्रहणं च नास्ति। तेन प्रतिपद्यते नूनमचेतना बुद्धिरिति। **तथा च** विषयान्तरव्यासङ्गोऽपि न दुरपह्नवः। स हि व्यासज्यते यो जानीते। नच बुद्धिर्जानीते। नह्यचेतनं च जानीते चेति

न व्याहन्यते । नच व्याहताश्रयणं युक्तम् । **अतो** विषयान्तरव्यासङ्गाभावेन ग्रहणाभावानुपपत्त्या युक्तस्तस्याः विनाशप्रसङ्गः । यस्याश्च विनाशप्रसङ्गः सा नित्येति नितान्तासङ्गतम् । **नहि** नित्यं च विनश्यति चेति कथञ्चित् सङ्गच्छते । बुद्धेरुत्पादविनाशौ च प्रत्यक्षौ रसबुद्धिरुत्पन्ना रूपबुद्धिर्विनष्टेति । नच यत्प्रत्यक्षं तदपह्नोतुं शक्यते । **तस्माद**नित्या नाना च बुद्धिरिति भावः ॥ ८ ॥

**नित्या** बुद्धिरात्मेति निराकृतम् । **इदानीं** क्षणिका बुद्धिरात्मेति निराकरिष्यन् तन्नानात्वमाक्षिपति—

**"स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः"** ॥ ९ ॥

स्फटिकान्यत्वाभिमानवत्=जवादिकुसुमोपधानेनैकस्यापि स्फटिकस्य नानात्वाभिमानवत् तदन्यत्वाभिमानः=गन्धादिविषयोपधानेन तस्याः बुद्धेर्नानात्वाभिमानो वेदितव्य इत्यर्थः ।

**यथा** खल्वेकः स्फटिको मणिर्नानाविधकुसुमसन्निधानाद् रक्तः पीतो नीलो नानाविधोऽवभासते **तथा** बुद्धिरेका गन्धादिनानाविधविषयसन्निधानाद् गन्धज्ञानं रसज्ञानं रूपज्ञानमिति नानाविधा प्रतिभासते नास्ति परमार्थतस्तस्या नानात्वम् । **अतो**ऽभेदेनावस्थितस्य स्फटिकस्य **यथा** कुसुमोपधानभेदान्नानात्वाभिमानः **तथा**ऽभेदेनावस्थिताया बुद्धेरपि विषयोपधानभेदान्नानात्वाभिमानो न वास्तविकं नानात्वमिति भावः ॥ ९ ॥

**क्षणिकवादी** दूषयति—

**"स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः"** ॥ १० ॥

अहेतुः="स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः" इत्ययमविद्यमानहेतुकः प्रमाणशून्यः पक्ष इति यावत्, **कुतः?** व्यक्तीनां=व्यज्यमानो भावो **व्यक्तिः,** तासां सतो भावमात्रस्येति यावत् क्षणिकत्वात्=पूर्वापरभागविकला कालकला **क्षणः,** तन्मात्रस्थितिकत्वात् स्फटिकेऽपि=दृष्टान्तीभूते स्फटिकेऽप्यपरापरोत्पत्तेः=अन्यान्यस्फटिकव्यक्त्युत्पत्तेरित्यर्थः ।

**यावन्तः** खलु भावाः **सर्वे** ते क्षणमात्रावस्थायिनो न क्षणादूर्ध्वमधोऽवतिष्ठन्ते। **अत एव** च तेषां प्रतिक्षणं पूर्वाः पूर्वाः व्यक्तयो निरुध्यन्ते, अपराः अपराश्चोत्पद्यन्ते। सर्वं चैतदात्मशरीरे प्रत्यक्षम्। तद्धि प्रतिक्षणमन्यदन्यद् भवतीति को नु नाम न जानीते। कस्य तावत् सूक्ष्मदर्शिनः शरीरस्यास्य कालपरिपाकवशेनोपचयलक्षणस्य स्थौल्यस्यापचयलक्षणस्य च ह्रासस्य दर्शनाद् नैतादृशी मतिरुदयमासादयति नूनमेतत् क्षणपरिणामीति। **यथा च** सदिदं शरीरं **तथा** स्फटिकोऽपि सन्। अतस्तेनापि शरीरवत् प्रतिक्षणं परिणामिना भवितव्यम्। सत्त्वाविशेषात्। नह्येकं सत् प्रतिक्षणं परिणमते नान्यदिति सम्भवति। तस्य च प्रतिक्षणं परिणामित्वेऽन्यान्यव्यक्त्युत्पत्तेरवश्यम्भावेनौपाधिको नानात्वाभिमानो न युज्यते। सम्भवति वास्तवेऽवास्तवकल्पनस्यान्याय्यत्वात्। **यथा च** स्फटिके प्रतिक्षणमुत्पादविनाशशालित्वाद् वास्तविकं नानात्वं **तथा** प्रतिक्षणमुत्पादविनाशशालिन्यां बुद्धावपि वास्तविकं तदभ्युपगतव्यं नौपाधिकम्। अप्रामाणिकत्वात्। **तथा च** "स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः" इति रिक्तं वच इति भावः॥ १०॥

**सिद्धान्तमाह—**

**"नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा"॥ ११॥**

नियमहेत्वभावात्="यत् सत् तत् क्षणिकम्" इति नियमे प्रमाणाभावाद् यथादर्शनं=यो भावो यथा दृश्यते तत्र तथाऽभ्यनुज्ञा=अभ्यनुज्ञानं विधेयमित्यर्थः।

यस्तावदेष नियमः "यत् सत् तत् क्षणिकम्" इति, नच तं कश्चित् प्रमाणभेदः प्रत्यक्षं वाऽनुमानं वा प्रतिपादयति। सत्त्वं ह्यर्थक्रियाकारित्वं, क्षणिकत्वं च क्षणमात्रस्थायित्वम्। न चैतयोरग्निधूमयोरिव रसवत्यां क्वचिदविनाभावः प्रत्यक्षेण प्रतिपद्यते। न वा क्षणिकस्य भावस्यार्थक्रियाकारित्वं कथञ्चित् सम्भाव्यते, येनानुमानेनापि प्रतिपद्येत। प्रमाणप्रतिपत्तिमन्तरा च न तदभ्युपगमो युज्यते। **अतो** यो भावो यथोपल-

भ्यते स तथैवाभ्यनुज्ञातव्यः । नच स्फटिके सत्त्वोपलम्भेऽपि क्षणिकत्व-मुपलभ्यते, येन तत्र तदभ्यनुज्ञायेत । बुद्धौ चोपलभ्यते गन्धज्ञानं विनष्टं रसज्ञानमुत्पन्नमिति । **तस्मात्** तत्र तदभ्यनुज्ञायते न जातु प्रत्याख्यायते । दृष्टस्य प्रत्याख्यानासम्भवात् । **तथा च** बुद्धेः क्षणिकत्वेन वास्तवनानात्वसिद्धेऽपि न तत् स्फटिकस्य सेद्धुमर्हति । तस्याक्षणिकत्वेन वास्तवनानात्वानर्हत्वादिति भावः ॥ ११ ॥

**ननु** यथा सदिदं शरीरं क्षणिकं **तथा** स्फटिकोऽपि क्षणिकः किं न-स्यात् ? **तत्राह**—

**"नोत्पत्तिविनाशकारणानुपलब्धेः"** ॥ १२ ॥

न=स्फटिकः क्षणिको न, **कुतः ?** उत्पत्तिविनाशकारणानुपलब्धेः= तत्र शरीरवदुत्पत्तिविनाशकारणयोरुपलम्भाभावादित्यर्थः ।

**शरीरे** हि पूर्वव्यक्तिविनाशस्योत्तरव्यक्त्युत्पादस्य च कारणे वृद्धिह्रास-लक्षणौ तावदुपचयापचयौ प्रतिक्षणमुपलभ्येते, तेन तस्य क्षणिकत्वमास्थी-यते। स्फटिकेऽपि **चेत्** ते तथोपलभ्येयातां **तदा** तस्यापि क्षणिकत्वमास्थी-येत । नच ते तत्र तथोपलभ्येते । तदुपलब्धिमन्तरा च केवलेन सामा-न्यधर्मेण सत्त्वेन न तस्य क्षणिकत्वमास्थातुं शक्यते । नह्येकस्मिन् कुसु-मेऽरुणिमा दृष्ट इति कुसुममात्रे तं कुसुमत्वेन हेतुनाऽनुमिमतेऽनुमातारः । **तस्मात्** सत्त्वाविशेषेऽपि न शरीरवत् क्षणिकः स्फटिक इति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि "क्षणिकवादिनः" इव "वैदिकाः" अपि शरीरं क्षणिकमभ्युपगच्छन्ति । सर्वे भावाः क्षणपरिणामिन ऋते चिच्छक्तेरिति सिद्धान्तात् । तथाऽप्यस्ति द्वयोर्महान् विशेषः । **तेषां** हि शरीरं प्रतिक्षणमन्यदन्यत् सम्पद्यते **वैदिकानां** च तदेव प्रतिक्षण-

स्थ - त्वसु :सम्पद्यते । **किमुक्तं ?** क्षणिकवादिनस्तावत् प्रतिक्षणं शरीरपरिणामभ्युपयन्ति, वैदिकास्तु तदवस्थापरिणामम् । यन्मे बाल्ये यौवने च शोभनं शरीरमासीद् हन्त तदेव वार्द्धके नितान्ताशोभनं जात-मित्यवस्थाभेदेऽपि शरीराभेदप्रत्यभिज्ञानात् । भावमात्रे चैष समान-

श्चर्चः। बुद्धौ कर्मणि शब्दे च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं क्षणिकत्वं न पुनः क्षणिकवादिनामिव क्षणमात्रावस्थायित्वमिति ॥ १२ ॥

शङ्कते—

**"क्षीरविनाशे कारणानुपलब्धिवद्**
**दध्युत्पत्तिवच्च तदुपपत्तिः" ॥ १३ ॥**

क्षीरविनाशे=क्षीरस्य विनाशे कारणानुपलब्धिवत्=तत्कारणानुपलब्धिवत्, दध्युत्पत्तिवच्च=दध्युत्पत्तौ तत्कारणानुपलब्धिवच्च तदुपपत्तिः= तच्छब्देनोत्पत्तिविनाशकारणानुपलब्धिं परामृशति, स्फटिकोत्पत्तिविनाशकारणानुपलब्धेरुपपत्तिरुपपादनं सम्भवतीत्यर्थः।

**यद्यपि** शरीरवत् स्फटिके पूर्वपूर्वव्यक्तिविनाशस्योत्तरोत्तरव्यक्त्युत्पादस्य च कारणं किञ्चिन्नोपलभ्यते **तथापि** विद्यते तदित्यभ्यनुज्ञातुं शक्यते। अनुपलम्भस्य वस्तुनास्तित्वेऽहेतुत्वात्। **नहि** दधि पश्यन् कश्चित् क्षीरविनाशकारणं दध्युत्पत्तिकारणं च किञ्चिदुपलभते। न चैतन्नास्तीति सम्भवति। वस्तुविनाशोत्पादयोः सकारणकत्वनियमात्। **अतो** यथाऽनुपलभ्यमानमपि क्षीरविनाशकारणं दध्युत्पत्तिकारणं च किञ्चिदभ्यनुज्ञायते **तथा** स्फटिकेऽपि पूर्वापरव्यक्तिविनाशोत्पादकारणं किञ्चिदभ्यनुज्ञातव्यम्। अविशेषात्। अभ्यनुज्ञायमाने च तस्मिन्नुपपन्नं तावत् स्फटिकस्यापि क्षणिकत्वमिति भावः ॥ १३ ॥

समाधत्ते—

**"लिङ्गतो ग्रहणान्नानुपलब्धिः" ॥ १४ ॥**

अनुपलब्धिः=क्षीरविनाशे दध्युत्पत्तौ च कारणानुपलब्धिर्न=न विद्यते, **कुतः**? लिङ्गतः=अनुमानतो ग्रहणात्=तदुपलब्धेरित्यर्थः।

**सत्यं** तदानीं क्षीरविनाशकारणं दध्युत्पत्तिकारणं च किञ्चित् प्रत्यक्षेण नोपलभ्यते **तथापि** न तदनुपलब्धिर्वक्तुं शक्यते। लिङ्गतस्तदुपलब्धिसम्भवात्। यौ यौ हि विनाशोत्पादौ तौ तौ सर्वौ सकारणकौ दृष्टौ **यथा** कुम्भादीनां विनाशोत्पादौ। विनाशोत्पादौ च क्षीरदध्नोः।

**तस्माद्** भवत्यनुमानं नूनमेतावपि सकारणकाविति। न चैवं स्फटिके पूर्वापरव्यक्तिविनाशोत्पादकारणं किञ्चिदनुमातुं शक्यते। क्षीरदध्नोरिव तत्र पूर्वापरव्यक्तिभेदानुपलब्धेः। नचास्ति कश्चिदन्यस्तदुपलम्भोपायः। नच तदुपलम्भाभावे व्यक्तीनां विनाशोत्पादयोः कल्पना युज्यते। नच भावमात्रस्य विनाशोत्पादशीलत्वान्न तत्र कारणापेक्षेति युक्त भाषणम्। तत्स्वभावत्वेऽपि कारणापेक्षायाः आवश्यकत्वात्। नहि पचेलिमाः खलु तण्डुलाः क्वचिद् विनैव दहनसलिलसंयोगं पच्यन्ते, भिदेलिमानि वा काष्ठानि विनैव कुठाराभिघातं भिद्यन्ते। नच सर्वथाऽनुपलब्धिपराहतस्य तस्याभ्यनुज्ञानमुपपद्यते। **तस्माद्** न शरीरवत् क्षणिकः स्फटिक इति भावः॥ १४॥

अत्र गुणमात्रपरिणामवादी कश्चिदाशङ्कते—

**"न पयसः परिणामगुणान्तरप्रादुर्भावात्"** ॥ १५॥

न=क्षीरविनाशे दध्युत्पत्तिरिति न, **कुतः?** पयसः=निष्ठापष्ठीयं, क्षीरस्य सतः परिणामगुणान्तरप्रादुर्भावात्=परिणामेन पूर्वगुणनाशेनान्यस्य गुणस्योत्पत्तेरित्यर्थः।

**तदा** हि क्षीरविनाशे सति दध्युत्पद्येत **चेत्** क्षीरतो दधि व्यतिरिच्येत। नच दधि क्षीरतो व्यतिरिच्यते। **अपि च?** क्षीरमेवाम्लद्रव्यसंयोगेन पूर्वगुणनिवृत्त्या गुणान्तरोत्पत्तौ दधीति व्यपदिश्यते। यस्य तु क्षीरविनाशे दध्युत्पत्तिस्तस्य दध्युत्पत्तिवेलायां क्षीरस्य विनष्टत्वाद् न तद् दध्नः कारणमुपपद्यते। **नहि** कुम्भोत्पत्तिवेलायां विनष्टा मृत् कुम्भस्य कारणं सम्भवति। कारणस्य कार्य्यान्वयावश्यकत्वात्। नच विनष्टं कारणं कार्य्यमन्वेतुमर्हति। मामकीने गुणपरिणामवादे तु नायं दोषः। तत्र कथञ्चिद्गुणभेदेऽपि द्रव्यभेदाभावात्। **अतः** स एव ज्यायान् **न** क्षीरविनाशे दध्युत्पत्तिरिति भावः॥

अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरप्रादुर्भावः **"द्रव्यपरिणामः"**। अयमेव योगानां "धर्मपरिणामः" इति परिभाष्यते। सतो

धर्मस्य द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरोत्पत्तिः "गुणपरिणामः"। तत्राद्यः सिद्धान्तः, उत्तरः पूर्वपक्ष इति विवेकः ॥ १५ ॥

समाधत्ते—

"व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं
पूर्वद्रव्यनिवृत्तेरनुमानम्" ॥ १६ ॥

व्यूहान्तरात्=विलक्षणावयवसंस्थानकाद् द्रव्याद् द्रव्यान्तरोत्पत्तिदर्शनं= विलक्षणावयवसंस्थानकस्य द्रव्यान्तरस्योत्पत्तेर्दर्शनं ग्रहणं पूर्वद्रव्यनिवृत्तेः= पूर्वद्रव्यं कारणद्रव्यं तस्य निवृत्तेर्विनाशस्यानुमानं=लिङ्गमित्यर्थः।

न वयं सर्वथा कारणविनाशे कार्य्योत्पत्तिं ब्रूमो येनोक्तदोषः स्यात्। अपि च? कारणद्रव्यस्य सम्मूर्च्छनलक्षणो योऽवयवव्यूहः स कार्य्योत्पत्तिवेलायां निवर्तते व्यूहान्तरं चोत्पद्यत इति निगदामः। न चास्मिन् पक्षे भवति कश्चिद्दोषः। कारणे दृष्टस्य व्यूहस्यापेक्षया विलक्षणस्य व्यूहान्तरस्योत्पत्तावपि कार्य्ये तदन्वयस्याप्रतिहतत्वात्। प्रत्यक्षश्च कारणावयवव्यूहतो विलक्षणः कार्य्यावयवव्यूहः। नहि पयसोऽवयवव्यूहाद् दध्नोऽवयवव्यूहो मृदो वाऽवयवव्यूहाद् घटादेरवयवव्यूहो विलक्षणो न विद्यते। नच विलक्षणस्य तस्योत्पत्तिः पूर्वव्यूहनिवृत्तिमन्तरेणोपपद्यते। तत्र तस्य प्रतिबन्धकत्वात्। पूर्वव्यूहतो व्यूहान्तरोत्पत्तिश्च गृह्यते। ततो भवत्यनुमानं नूनं तदा निवर्तते पूर्वो व्यूह इति। पूर्वव्यूहनिवृत्तिरेव च कारणनिवृत्तिः, व्यूहान्तरोत्पत्तिरेव च कार्य्योत्पत्तिर्न जातु विलक्षणा काचित्। तस्माद् युक्तमुच्यते क्षीरविनाशे दध्युत्पत्तिरिति। गुणपरिणामवादे चाशक्यसमाधानः खलु विलक्षणोऽवयवव्यूह इति नासौ ज्यायानिति भावः॥ १६ ॥

ननु यथा विद्युदादीनां विनाशोत्पादौ निष्कारणौ तथा स्फटिकादीनामपि किं न स्यातां तत्राह—

"क्वचिद्विनाशकारणानुपलब्धेः
क्वचिच्चोपलब्धेरनेकान्तः" ॥ १७ ॥

अनेकान्तः=स्फटिकव्यक्तीनां विनाशोत्पादौ निष्कारणाविति नायमेकान्तः, **कुतः?** क्वचित्=विद्युदादौ विनाशकारणानुपलब्धेः=विनाशोनोत्पादमुपलक्षयति, विनाशोत्पादकारणस्यानुपलम्भात् क्वचिच्च=कुम्भादौ चोपलब्धेः=उपलम्भादित्यर्थः ।

**यद्यपि** विद्युदादीनामिव स्फटिकव्यक्तीनामपि विनाशोत्पादौ सकारणकौ नोपलभ्येते **तथापि** निष्कारणकौ ताविति न निश्चेतुं शक्यते । विनाशोत्पादत्वस्य हेतोर्निष्कारणकयोरिव सकारणकयोरपि तयोर्वर्तमानत्वात् । **यो** हि हेतुः साध्यवति साध्याभाववति चोभयत्र समानं वर्तते न तेन पक्षे साध्यं निर्धारयितुं पार्य्यते । विनाशोत्पादत्वं हि **यथा** निष्कारणकयोर्विद्युदादीनां विनाशोत्पादयोर्वर्तते **तथा** सकारणकयोः कुम्भादीनां विनाशोत्पादयोरपि वर्तते **तथा च** कथं प्रतिपद्येमहि स्फटिकव्यक्तीनां निष्कारणकौ विनाशोत्पादाविति । सकारणकौ च तौ कारणानुपलम्भपराहतौ न जात्वभ्युपगन्तुमर्हतः । **तस्माद**युक्तोऽयं स्फटिकदृष्टान्तो न तेन कस्यापि भावस्य क्षणिकत्वं सिध्यति । **बुद्धे**र्विनाशोत्पादौ च सकारणकौ तावदुपलभ्येते । तेनैषाऽनित्या तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात् क्षणिका चेति प्रतिपत्तुमीश्यते । **सा** च नात्मा **किन्तु** गुणः अनित्यत्वे सत्यचाक्षुषप्रत्यक्षत्वाद् शब्दवदिति भावः ॥ १७ ॥

**बुद्धिर्गुण** इति साधितम् । **इदानीं** तस्या आत्मगुणत्वं साधयितुमिन्द्रियार्थगुणत्वं प्रतिक्षिपति—

**"नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्"** ॥ १८ ॥

इन्द्रियार्थयोः=इन्द्रियस्य घ्राणादेरर्थस्य गन्धादेश्च न=बुद्धिर्गुणो न, **कुतः?** तद्विनाशेऽपि=इन्द्रियार्थयोर्विनाशेऽपि ज्ञानावस्थानात्=स्मृतिलक्षणा बुद्धिर्ज्ञानं, तस्यावस्थितिरवस्थानं, तस्मादित्यर्थः ।

**चेद्** बुद्धिरिन्द्रियार्थयोर्गुणो भवेत् **तदा** तयोर्विनाशे सति न जात्ववतिष्ठेत । **नहि** गुणिनि विनष्टे तद्गुणोऽवस्थातुमर्हति । बुद्धिस्त्विन्द्रियार्थयोर्विनाशेऽप्यवतिष्ठते **"अद्राक्षम्"** इति । **तस्माद्** भवति प्रतिपत्तिर्नेयमिन्द्रियार्थयोर्गुण इति भावः ॥ १८ ॥

ननु माभूदिन्द्रियार्थयोर्गुणो बुद्धिर्मनसो भविष्यति ? तत्राह—

"युगपज्ज्ञेयानुपलब्धेश्च न मनसः" ॥ १९ ॥

भिन्नक्रमश्चोऽप्यर्थः । मनसश्च=मनसोऽपि न=बुद्धिर्गुणो न, कुतः ? युगपत्=एकस्मिन् काले ज्ञेयानुपलब्धेः=गन्धादिनिखिलज्ञेयोपलम्भाभावादित्यर्थः ।

ज्ञानं चेद् मनसो गुणो भवेत् तदा तस्य मध्यमपरिमाणत्वेन घ्राणादिसर्वेन्द्रियसन्निकृष्टतया युगपद् गन्धादिनिखिलज्ञेयगोचरं तदुत्पद्येत । नहि ज्ञानाश्रयस्य ज्ञातुरिन्द्रियैरिन्द्रियाणां चार्थैः सन्निकर्षे सति किञ्चिदपरं ज्ञानकारणमवशिष्यते येन तन्नोत्पद्येत । नोत्पद्यते च । ततो भवत्यनुमानं न खल्वेषा बुद्धिर्मनोगुण इति भावः ॥ १९ ॥

अत्र शङ्कते—

"तदात्मगुणत्वेऽपि तुल्यम्" ॥ २० ॥

तत्=बुद्धेर्मनोगुणत्वे यद् दूषणमुक्तं तदात्मगुणत्वेऽपि=तस्याः आत्मगुणत्वेऽपि तुल्यं=समानमित्यर्थः ।

यथा हि मनसः सर्वेन्द्रियैः सन्निकर्षः तथाऽस्त्यात्मनोऽणुत्वेऽपि सर्वेन्द्रियैः सन्निकर्षः । आत्मनो मनसा मनसश्चेन्द्रियैरिति तत्क्रमाभ्युपगमात् । नहि यो मनसा संयुज्यते स तत्संयुक्तैरिन्द्रियैर्न संयुज्यते । न चाङ्गुलितरुसंयोगे हस्ततरुसंयोगो न भवति । सन्निकर्षाविशेषे च दोषेणाप्यविशेषेण भवितव्यम् । तथा च बुद्धेर्मनोगुणत्वे यो दोषः स आत्मगुणत्वेऽपि तुल्य इति भावः ॥ २० ॥

उक्ताशङ्कां निरस्यति—

"इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः" ॥ २१ ॥

इन्द्रियैः=घ्राणादिभिर्निखिलेन्द्रियैर्मनसः=आत्माधिष्ठितस्य मनसः सन्निकर्षाभावात्=युगपत्सम्बन्धाभावात् तदनुत्पत्तिः=गन्धादिनिखिलज्ञेयगोचरज्ञानस्य युगपदुत्पत्तिर्न भवतीत्यर्थः ।

न खलु वयमात्ममनसोर्मन इन्द्रियाणां च सन्निकर्षमात्रं ज्ञानोत्पत्ति-

कारणमभ्युपगच्छामो येनोक्तदोष आपद्येत **अपि च?** अदृष्टवदात्मनो मनसा, तादृगात्मप्रयत्नेन तत्तदिन्द्रियप्रदेशे लब्धवृत्तिकस्य मनसश्चेन्द्रियैः सन्निकर्षस्तत्कारणमभ्युपेमः। न चेदृक् सन्निकर्षो युगपत्सर्वेन्द्रियैरात्मनो विद्यते। कदाचित् केनचिदेकेनेन्द्रियेण विद्यमानश्च न सर्वेन्द्रियप्रयोज्यां निखिलज्ञेयगोचरां बुद्धिमुत्पादयितुमर्हति। मनसि च प्रयत्नाभावान्न तस्य सर्वेन्द्रियैः सन्निकर्षो वारयितुं शक्यते। प्रयत्नवान् हि वशी भवति कुर्य्यात् न वा कुर्य्यात् अन्यथा वा कुर्य्यात्, न जात्वप्रयत्नः कश्चित्। अप्रयत्नं च मनः, जडत्वात्। प्रयत्नवाँश्चात्मा, चेतनत्वात्। अतो न बुद्धेरात्मगुणत्वे मनोवद् युगपन्निखिलज्ञेयगोचरज्ञानोत्पादप्रसक्तिर्दोष इति भावः॥ २१॥

**नन्वा**त्ममनसोर्मन इन्द्रियाणां च सन्निकर्षमात्रं ज्ञानोत्पत्तिकारणं कुतो नाभ्युपगम्यते? **तत्राह**—

**"नोत्पत्तिकारणानुपदेशात्"** ॥ २२ ॥

उत्पत्तिकारणानुपदेशात्=ज्ञानोत्पत्तौ कारणत्वेनोपदेशाभावान्न=नाभ्युपगम्यत इत्यर्थः।

**न** खल्वात्ममनसोर्मनइन्द्रियाणां च सन्निकर्षमात्रं कुत्रापि ज्ञानोत्पत्तिकारणमुपदिश्यते **येन** तदभ्युपगम्येत। न चाचार्य्योपदेशाभावे तदभ्युपगमो युज्यते। नच **"आत्मेन्द्रियार्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत्"** (वै० ३।१।१९) इत्यस्ति तदुपदेश इति चारुभाषणम्। अस्यापि विशिष्टसन्निकर्षे तात्पर्य्यावधारणात्। नह्याचार्य्याः अयौक्तिकमवैदिकं वा किञ्चिदुपदिशन्ति। सन्निकर्षमात्रस्य ज्ञानकारणत्वं तु न यौक्तिकं प्रतिपद्यते। युगपन्निखिलज्ञेयगोचरज्ञानप्रसक्तेरवर्जनात्। नापि वैदिकम्। **"अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषम्"** (बृह० ३।५।३) इति स्पष्टं ज्ञानोत्पत्तौ सन्निकर्षविशेषस्य कारणत्वाभिधानात्। विशिष्टसन्निकर्षस्य कारणत्वे तु नास्ति कश्चिद्दोषः। **तस्मात्** स एवाभ्युपगम्यते न सन्निकर्षमात्रमिति भावः॥ २२॥

नतु माभूद् मनोगुणो बुद्धिः, आत्मगुणः सत्यपि नित्यैव सेत्स्यति नानित्येति पुनराशङ्कते—

"विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः" ॥ २३ ॥

चकारेण विनाशकारणानुपपत्तिं समुच्चिनोति। विनाशकारणानुपलब्धेश्च=गुणविनाशकारणस्य विरोधिगुणस्यानुपलब्धेराश्रयनाशस्य चानुपपत्तेरवस्थाने=अवस्थानावश्यम्भावे तन्नित्यत्वप्रसङ्गः=तस्याः बुद्धेर्नित्यताप्रसङ्गः इत्यर्थः।

द्वेधा हि गुणविनाशकारणं विरोधिगुण आश्रयनाशश्च। न च बुद्धेर्विरोधी गुणः कश्चिदुपलभ्यते, येन तद्विनाशः कल्प्येत। न वा तदाश्रयस्यात्मनोऽपि विनाश उपपद्यते। नित्यत्वात्। यस्य च गुणस्य विनाशकारणं नोपलभ्यते न वा कथञ्चिदुपपद्यते। तस्यावस्थानेनावश्यं भवितव्यम्। नहि न नश्यति च नावतिष्ठते चेति सम्भवति। न चावस्थितस्यानित्यत्वं सङ्गच्छते। अवस्थिता च बुद्धिः। अतस्तस्या आत्मगुणत्वे ध्रुवो नित्यत्वप्रसङ्ग इति भावः ॥ २३ ॥

समाधत्ते—

"अनित्यत्वग्रहाद् बुद्धेर्बुद्ध्यन्तराद् विनाशः शब्दवत्" २४

शब्दवत्=यथाऽऽकाशगुणस्य शब्दस्य विरोधिभूतात् स्वोत्तरवर्त्तिशब्दान्तराद् विनाशः तथा बुद्धेः=आत्मगुणस्य बुद्धेर्बुद्ध्यन्तरात्=उपलक्षणमेतत्, विरोधिभूतात् स्वोत्तरवर्त्तिबुद्ध्यादिविशेषगुणान्तराद् विनाशः=ध्वंसः कल्प्यते, कुतः? अनित्यत्वग्रहात्=तदनित्यत्वस्य ग्रहणादित्यर्थः। अनित्या खलु बुद्धिरिति सर्वैर्गृह्यते। को नु नामास्ति पुमान् यो घटबुद्धिरुत्पन्ना विनष्टा च पटबुद्धिरिति न गृह्णाति। नचानित्यायास्तस्याः अवस्थानं युज्यते। विनाशेन चावश्यं भवितव्यम्। नचाश्रयनाशस्तावत् तद्विनाशकारणमुपपद्यते। तदाश्रयस्यात्मनो नित्यत्वात्। परिशेषाद् विरोधिगुण एव तद्विनाशहेतुर्वक्तव्यः। न चास्ति तदनुपलब्धिः। शब्द-

सन्तानवद् बुद्धिसन्तानस्यापि परिग्रहात् । तत्र च पूर्वशब्दस्योत्तरः शब्दो **यथा** सहानवस्थानाद् विरोधी **तथा** बुद्धेरपि बुद्ध्यन्तरं विशेषगुणान्तरं च विरोधि सम्भवति । **ततो** भवतीयं कल्पना नूनमाकाशगुणस्य शब्दस्य **यथा** विरोधिभूतात् स्वोत्तरवर्त्तिशब्दान्तराद् विनाशः **तथा** बुद्धेरपि विरोधिभूतात् स्वोत्तरवर्त्तिबुद्ध्यन्तराद् वा विशेषगुणान्तराद् वा विनाश इति । **तथा च** तस्या आत्मगुणत्वेऽपि न नित्यत्वप्रसङ्ग इति भावः ॥ २४ ॥

**ननु** बुद्धिश्चेदात्मगुणो भवेत् **तदा** तदुत्पत्तिहेतोरात्ममनःसंयोगस्य संस्काराणां चात्मनि सत्त्वाद् युगपद् नानास्मृतिबुद्धयः प्रादुर्भवेयुरित्याशङ्क्य पूर्वं तावद् विभुवादिनः समाधानं दूषयितुमुपन्यस्यति—

**"ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः"** ॥ २५ ॥

मनसः=मनःसंज्ञकेन्द्रियस्य ज्ञानसमवेतात्मप्रदेशसन्निकर्षात्=ज्ञानसाधनः संस्कारोऽत्र ज्ञानं, हेतुमति हेतुप्रयोगात्, तत् समवेतं यस्मिन्नात्मप्रदेशे तेन सन्निकर्षः संयोगः, तस्मात् स्मृत्युत्पत्तेः=स्मृतिबुद्ध्युत्पत्तेर्युगपदुत्पत्तिः=युगपद् नानास्मृतिबुद्ध्युत्पत्तिर्न=न सम्भवतीत्यर्थः ।

**आत्मा** हि विभुः, स प्रत्येकस्मिन् विषयप्रदेशे विद्यते । नास्ति लोके कश्चित् तादृग्विषयप्रदेशः, यं खल्वेष न व्याप्नुयात् । विषयानुभवजनिताः स्मृतिहेतवः संस्काराश्चात्रैव तत्तद्विषयावच्छिन्नात्मप्रदेशे समवयन्ति न शरीरावच्छिन्नात्मप्रदेशे । यत्र विषयस्तद्गोचरसंस्कारस्यापि तत्रैवात्मप्रदेशे समवायस्यौचित्यात् । यदा चैतेन संस्कारसमवेतेनात्मप्रदेशेन मनः सन्निकृष्यते तदा स्मृतिबुद्धिरुत्पद्यते नान्यदेति नियमः । भिन्नप्रदेशाश्च विषयाः मनश्चाणु न तैः सर्वैः संस्कारसमवेतैरात्मप्रदेशैर्युगपत् सन्निकर्ष्टुमर्हति । युगपत् सन्निकर्षाभावे च न युगपद् नानास्मृतिबुद्ध्युत्पत्तिरुपपद्यते । कारणायौगपद्ये कार्य्ययौगपद्यासम्भवात् । **अतो** बुद्धेरात्मगुणत्वेऽपि न युगपत् स्मृतिबुद्धीनामुत्पत्तिरिति भावः ॥ २५ ॥

दूषयति—

"नान्तः शरीरवृत्तित्वात्" ॥ २६ ॥

मनस इत्यनुवर्तते । न=यदुक्तं तन्न, कुतः ? अन्तःशरीरवृत्तित्वात्= अन्तःशरीरे वृत्तिर्यस्य तदन्तःशरीरवृत्ति मनः, तस्य भावस्तत्त्वं, तस्मात् मनसः शरीरस्य मध्ये वर्तमानत्वादित्यर्थः ।

**मनो** ह्यन्तःशरीरे वर्तते न शरीरतो बहिः । नचान्तर्वर्तमानस्य तस्य बहिर्निर्गमनं विना ज्ञानसमवेतेन बाह्यविषयावच्छिन्नात्मप्रदेशेन सन्निकर्षः उपपद्यते । न च तस्य बहिर्निर्गमनं युक्तम् । मरणप्रसङ्गात् । नहि शरीरादिनिखिलसंघातनायके मनसि बहिर्निर्गते पुनरिदं शरीरं क्षणमपि जीवितुमर्हति । मनोनिर्गमनेनात्मनिर्गमनस्याप्यावश्यकत्वात् । अतो बुद्धेरात्मगुणत्वे युगपद् नानास्मृतिबुद्ध्युत्पत्तिप्रसक्तौ यत्समाधानमुक्तं तन्न समीचीनमिति भावः ॥ २६ ॥

अत्र शङ्कते—

"साध्यत्वादहेतुः" ॥ २७ ॥

अहेतुः="अन्तःशरीरवृत्तित्वात्" इत्ययमहेतुः, कुतः ? साध्यत्वात्= साधनीयत्वादित्यर्थः ।

**सिद्धो** हि हेतुर्भवति न साधनीयः । साध्यसमत्वात् । साध्यसमश्च न जातु हेतुः सम्पद्यते, अपि च ? हेत्वाभास इत्युक्तं पुरस्तात् । अन्तःशरीरवृत्तित्वमपि न तावदद्यापि सिद्धो विद्यते, अपि च ? साधनीयः । तस्मादहेतुरिति भावः ॥ २७ ॥

समाधत्ते—

"स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः" ॥ २८ ॥

अप्रतिषेधः=अहेतुरित्युक्तो हेतुप्रतिषेधो नोपपद्यते, कुतः ? स्मरतः= अध्ययतः प्रतिपत्तुः शरीरधारणोपपत्तेः=शरीरधारणेन मनसोऽन्तःशरीरवृत्तित्वसिद्धेरित्यर्थः ।

**न** तावदन्तःशरीरवृत्तित्वं हेतुः साधनीयो विद्यते । तस्य स्मृतिवे-

लायां दृष्टेन शरीरधारणलक्षणलिङ्गेन सिद्धत्वात् । **नहि** स्मरतोऽस्य शरीरं कचिदधृतं दृश्यते । न च तद्धारणमन्तरेण धारकं प्रयत्नं सम्भवति । धारकप्रयत्नश्चात्ममनःसन्निकर्षोत्पाद्यः शरीरान्तर्वर्तमाने मनसि सत्येवात्मना संयोगादुत्पत्तुमर्हति नान्यथा । न च यद्ध्रियते ततोऽन्यत्रात्ममनःसंयोगादुत्पद्यमानः प्रयत्नस्तद्धारक उपपद्यते । तदन्तस्तदुत्पत्तौ च **"अन्तःशरीरवृत्तित्वं"** मनसः सिद्धमेव न तावत् साध्यम् । **किमुक्तं ?** यदा खल्वयं सुस्मूर्षया मनः प्रणिदधानः कञ्चिदर्थं स्मरति तदाऽस्य शरीरधारणमुपलभ्यते । नच तद्धारकप्रयत्नादृते कथञ्चिद् युज्यते । प्रयत्नश्चात्ममनःसन्निकर्षजो धारकः प्रेरकश्चेति निर्विवादम् । **चेदिदं** मनो ज्ञानसंस्कारसंस्कृतेन विषयावच्छिन्नात्मप्रदेशेन सन्निकर्षार्थं शरीरतो बहिर्निर्गच्छेत् **तदा** धारकप्रयत्नानुत्पत्तौ नूनं स्मरतः शरीरमिदं निपतेत् । न निपतति ध्रियमाणश्च दृश्यते । **ततो** भवति प्रतिपत्तिर्नमनः शरीरतो बहिर्निर्गच्छति किन्त्वन्तरेव वर्तमानं सर्वं कार्य्यं कुरुत इत्यनुपपन्नस्तावत् **"साध्यत्वादहेतुः"** इति प्रतिषेध इति भावः ॥२८॥

**पुनः** शङ्कते—

**"न तदाशुगतित्वान्मनसः"** ॥ २९ ॥

तद्=शरीरधारणं न=मनसो बहिर्निर्गमनेऽप्यनुपपन्नं न भवति, **कुतः ?** मनसः=मनःसंज्ञकस्येन्द्रियस्याशुगतित्वात्=आशुगतित्वाभ्युपगमादित्यर्थः ।

**आ**शुगति हि मनोऽभ्युपगम्यते । ततश्चास्य शरीरतो बहिर्निर्गतस्य ज्ञानसमवेतेनात्मप्रदेशेन सन्निकर्षः, प्रत्यागतस्य चात्मना संयोगाद् धारकप्रयत्नोत्पादः, उत्पाद्य वा धारकं प्रयत्नं निर्गतस्य तत्र तत्र सन्निकर्षविशेष इत्येतदुभयं सूपपद्यते । नास्ति काचिदनुपपत्तिरिति भावः ॥ २९॥

**समाधत्ते**—

**"न स्मरणकालानियमात्"** ॥ ३० ॥

न=यदुक्तं तन्न, **कुतः ?** स्मरणकालानियमात्=स्मृतिकालस्य नियमाभावादित्यर्थः ।

इयति काले स्मृतिज्ञानेन भवितव्यमिति **चेत्** स्मृतिकालो नियम्येत **तदा** शीघ्रगतिकत्वान्मनसो वहिरात्मप्रदेशेन सन्निकर्षविशेषः शरीरमध्ये धारकप्रयत्नोत्पादश्चेत्येतदुभयं सूपपद्येत। न चासौ नियन्तुं शक्यते। कस्यचिदर्थस्य क्षिप्रं कस्यचिच्च चिरेण स्मृतिदर्शनात्। **यदा** च चिरेण स्मृतिः **तदा** शीघ्रं प्रत्यागत्यभावाद् धारकप्रयत्नानुत्पत्त्या न जातु शरीरधारणं घटते। तस्माद् युगपद् नानास्मृतिवुद्ध्युत्पत्त्यै यस्तावच्छरीरतो वहिर्निर्गतस्य मनसो ज्ञानसमवेतेनात्मप्रदेशेन सन्निकर्षविशेषः परिकल्प्यते स न युक्त इति भावः॥ ३०॥

नन्वयुक्तमपि किञ्चिद् नैमित्तिकत्वादभ्युपगन्तुं शक्यते? **तत्राह—**

**"आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः"॥३१॥**

चस्त्वर्थो निमित्तान्तरं व्यवच्छिनत्ति। मनस इति मण्डूकप्लुतिन्यायेनानुवर्तते। ज्ञानसमवेतेनात्मप्रदेशेनेति प्रकृतम्। आत्मप्रेरणयदृच्छाज्ञताभिश्च=आत्मा प्रत्यगात्मा, तस्य प्रेरणं नियोगः **आत्मप्रेरणम्**, आकस्मिकता **यदृच्छा**, ज्ञातृता **ज्ञता**, आत्मप्रेरणं च यदृच्छा च ज्ञता च, तास्तथा, ताभिस्तु संयोगविशेषः=मनसो ज्ञानसमवेतेनात्मप्रदेशेन सन्निकर्षविशेषो न=न सम्भवतीत्यर्थः।

ज्ञानसमवेतेन तत्तद्विषयावच्छिन्नात्मप्रदेशेन सन्निकर्षार्थं मनसः शरीरतो वहिर्निर्गमने खलु निमित्तत्रयमेव कल्पयितव्यम्—आत्मप्रेरणं यदृच्छा ज्ञता च। **तत्र** न तावदाद्यं तन्निमित्तमुपपद्यते। अमुष्यार्थस्य स्मृतिहेतुः संस्कारोऽमुष्मिन्नात्मप्रदेशे समवैति तेन मनः संयुज्यतामित्यात्मप्रेरणवेलायामेवार्थस्य ज्ञातत्वेन मनसो वहिर्निर्गमनस्य वैयर्थ्यात्। **नापि** द्वितीयम्। यदृच्छाप्रवृत्तेः कुत्राप्यनुपलम्भात्। **नापि** तृतीयम्। मनसोऽज्ञातृत्वात्। न चाज्ञातृ क्वचित् प्रवर्तितुमर्हति। निर्निमित्तं तस्य बहिर्निर्गमनं तु कल्पयितुमशक्यम्। अतिप्रसङ्गात्। नच बहिर्निर्गमनाभावे तत्तद्विषयावच्छिन्नात्मप्रदेशेन मनः सन्निकर्ष्टुं पारयति। व्यवहितयोस्तदयोगात्। **अतो**ऽनुपपन्नस्तस्यात्मप्रेरणादिभिर्निमित्तैरपि शरीरतोवहिस्तत्रतत्रात्मप्रदेशे संयोगविशेषस्याभ्युपगम इति भावः॥ ३१॥

**ननु** कथं तर्हि व्यासक्तमनसः पादव्यथनेन शरीरेऽपि तत्संयोगविशेषः ? **तत्राह—**

**"व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम्"** ॥ ३२ ॥

सन्निकर्षविशेष इत्यनुवर्तते । व्यासक्तमनसः=क्वचिद् दृश्ये सँल्लग्नचेतसः पादव्यथनेन=कण्टकादितः पादतलस्य पीडनेन यस्तदवच्छिन्नात्मना मनसः सन्निकर्षविशेषः संयोगविशेषस्तत्र संयोगविशेषेण=शरीरतो बहिस्तत्तद्विषयावच्छिन्नात्मना मनसः संयोगविशेषेण समानं=तुल्यं दूषणमित्यर्थः ।

**यथा** हि शरीराद् बहिस्तत्तद्विषयावच्छिन्नात्मप्रदेशेन मनसः संयोगविशेषो नोपपद्यते **तथा** शरीरस्य मध्येऽपि तत्तदवयवावच्छिन्नात्मना तस्य संयोगविशेषोनोपपद्यते । निमित्तानुपपत्तेरुभयत्राप्यविशेषात् । **अतो** मनोऽणुवादस्तत्पद्धत्या युगपन्नानास्मृतिबुद्ध्युत्पादसमाधिश्च सर्वथा परिहेय इति भावः ॥

**इदमत्र बोध्यम्**—यथा हि मनोऽणुवादो नाचार्य्यसम्मतस्तथा जीवात्मविभुवादोऽपि न तत्सम्मत इति वेदितव्यम् । मनोऽणुवादनिराकरणेन तस्यापि निराकृतत्वात् । प्रमाणानुपलम्भस्य चोभयत्रापि समानत्वात् । **नहि** नाना समानजातीयाश्च विभवः क्वचिदुपलभ्यन्ते, येनान्यत्रापि कल्प्येत । **"मधुसूदन"**—सरस्वतीप्रभृतिभिः **"अद्वैतसिद्धि"**—प्रभृतिग्रन्थेषूपन्यस्तानि विभुत्वानुमानानि तु **"तदभावादणु मनः"** (वै० ७।१।२३) इति सूत्रे **"वैशेषिकसूत्रवैदिकवृत्तौ"** समदूदुषाम । **"शङ्कराचार्य्य"**—प्रमुखैरुत्प्रेक्षिताँस्तर्काँस्तु **"वेदान्तसूत्रवैदिकवृत्तौ"** परीक्षयिष्यामः । अतो वैदिकैर्मनोऽणुवादवज्जीवात्मविभुवादोऽपि परिहेयः । **मनो**मध्यमवादो जीवात्माणुवादश्च प्रामाणिकत्वादुपादेय इति ॥ ३२ ॥

**ननु** सिद्धान्ते कथं बुद्धेरात्मगुणत्वे प्रसक्तो युगपन्नानास्मृतिबुद्ध्युत्पादः समाधीयते ? **तत्राह**—

**"प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम्"** ॥ ३३ ॥

प्रणिधानलिङ्गादिज्ञानानां=सुस्मूर्षितार्थभावनं सुस्मूर्षया चित्तैकाग्र्यमिति यावत् **प्रणिधानं**, व्याप्यं **लिङ्गम्**, आदिना निबन्धाभ्यासलक्षणसादृश्यादीनि गृह्यन्ते, **ज्ञानमुद्बोधकं**, ज्ञायत उद्बुध्यते स्मृतिजननाय कल्प्यते संस्कारोऽनेनेति तद्व्युत्पत्तेः, प्रणिधानं च लिङ्गादीनि च, तानि, तानि चेमानि ज्ञानानि च, तेषां—वक्ष्यमाणानां प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यप्रभृतीनां संस्कारोद्बोधहेतूनामयुगपद्भावात्=अयौगपद्याद् युगपदस्मरणं=युगपन्नानास्मृतिबुद्धयो न भवन्तीत्यर्थः ।

**यथा** ह्यात्ममनःसन्निकर्षः संस्कारश्च स्मृतिबुद्धिकारणं **तथा** प्रणिधानादीन्यपि संस्कारोद्बोधकत्वात् तत्कारणानि भवन्ति । **तत्र** चात्ममनःसन्निकर्षस्य संस्कारस्य च युगपद्भावभावेऽपि प्रणिधानादीनां तदभावान्न युगपद् नाना स्मृतिबुद्धयः सम्भवन्ति । **नहि** कारणेष्वयुगपद्भवत्सु तत्कार्य्याणि युगपदुद्भवितुमर्हन्ति । तस्माद् बुद्धेरात्मगुणत्वेऽपि न युगपद् नानास्मृतिबुद्ध्युत्पादप्रसङ्ग इति भावः ॥ ३३ ॥

**ननु** तदा हि बुद्धिरात्मगुण उपपद्येत चेदिच्छादयोऽपि तद्गुणाः सिध्येयुः, **लोके** तेषां सामानाधिकरण्येनोपलब्धेः ? **तत्राह**—

**"ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः"** ॥ ३४ ॥

इच्छादयो गुणा इति शेषः । ज्ञस्य=ज्ञोद्धुरिच्छादयो गुणाः भवन्ति, **कुतः?** आरम्भनिवृत्त्योः=तत्प्रवृत्तिनिवृत्त्योरिच्छाद्वेषनिमित्तत्वात्=इच्छाद्वेषपूर्वकत्वादित्यर्थः ।

**यदा** खल्वयम् "एतानि मम सुखसाधनानि, दुःखसाधनानि चैतानि" इति प्रतिपद्यते **तदा** सुखसाधनानि तावदिच्छति दुःखसाधनानि

च द्वेष्टि । इच्छँश्च तान्यवाप्तुं द्विषँश्च हातुं मनोवाक्कायैः प्रयतते । ततश्चास्यावेप्साप्रयुक्तस्य सुखसाधनेषु प्रवृत्तिर्जिहासाप्रयुक्तस्य च दुःखसाधनेषु निवृत्तिरुत्पद्यते । सेयमुत्पद्यमाना हिताहितप्राप्तिपरिहारानुकूलप्रवृत्तिनिवृत्तिलक्षणा क्रिया **यथा** स्वात्मनि ज्ञातुरिच्छाद्वेषपूर्विका दृष्टा **तथा** परत्राप्यनुमीयते । तादृश्यास्तस्याः सर्वत्र तत्पूर्वकत्वावश्यम्भावात् । नह्येषाऽज्ञातेष्वन्यज्ञातेषु वा सुखदुःखसाधनेषु कथञ्चिदुत्पत्तुमर्हति । न च यो यत्र प्रतिपद्यते स तदिच्छति च द्वेष्टि चेति युज्यते । **तथा च** यस्य ज्ञानं तस्यैवेच्छाद्वेषौ तस्यैव प्रयत्नस्तस्यैव प्रवृत्तिनिवृत्तिलक्षणा क्रियेति वक्तव्यम् । ज्ञानं चात्मनो गुण इत्युक्तम् । अतस्तत्समानाधिकरणाः इच्छादयोऽपि तस्यैव गुणा नान्यस्य शरीरादेरिति भावः ॥ ३४ ॥

अत्र शङ्कते—

**"तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः"** ॥ ३५ ॥

पार्थिवाद्येषु=पार्थिवं शरीरं **"पार्थिवं शरीरं तद्विशेषगुणोपलब्धेः"** (न्या० ३।१।२७) इत्युक्तत्वात्, तदाद्येषु शरीरेन्द्रियेष्विच्छाद्वेषयोः=इच्छाया द्वेषस्य चाप्रतिषेधः=प्रतिषेधो नोपपद्यते, **कुतः?** तल्लिङ्गत्वात्=तदाऽऽरम्भनिवृत्ती परामृशति, प्रवृत्तिरारम्भः, प्रवृत्तिनिवृत्तिलिङ्गकत्वादित्यर्थः ।

आरम्भनिवृत्तिलिङ्गकौ तावदिच्छाद्वेषौ, **यत्रारम्भनिवृत्ती स्तः, तत्र** ताभ्यामप्यवश्यं भवितव्यम् । **नहि** यत्र धूमस्तत्र वह्निर्न भवतीति सम्भवति । ते चारम्भनिवृत्ती शरीरादिषु प्रत्यक्षे । तस्मादिच्छाद्वेषावपि तेषामेव गुणौ भवतो नात्मनः । ज्ञानस्यापि शरीरादिगुणत्वाभ्युपगमान्न तयोस्तत्सामानाधिकरण्यस्याप्यनुपपत्तिरिति भावः ॥ ३५ ॥

समाधत्ते—

**"परश्वादिष्वारम्भनिवृत्तिदर्शनात्"** ॥ ३६ ॥

इच्छाद्वेषयोरप्रतिषेध इत्यनुवर्तते । प्रतिबन्धिसमाधानबलादपेर्लाभः । परश्वादिषु=परश्वधप्रभृतिषु छिदादिकरणविशेषेष्वप्यारम्भनिवृत्तिदर्शनात्=प्रवृत्तिनिवृत्त्योरुपलम्भादिच्छाद्वेषयोः प्रतिषेधो न स्यादित्यर्थः ।

**यत्रारम्भनिवृत्ती तत्र** चेदिच्छाद्वेषौ **तदा** तौ परश्वधप्रभृतिषु करणविशेषेष्वपि स्याताम्। शरीरादिवत् तत्राप्यारम्भनिवृत्त्योर्दर्शनात्। तेऽपि खलु क्वचिद् छिदादिक्रियामारभमाणाः क्वचिच्च ततो निवर्तमाना दृश्यन्ते। **तत्र** चेदन्यनिमित्तके ते **तदा** शरीरादिष्वप्यन्यनिमित्तके नानुवचे। **तथाच** परश्वादीनां करणविशेषाणामारम्भनिवृत्त्योः सत्त्वेऽपि यथेच्छाद्वेषौ न गुणौ **तथा** शरीरादीनामप्यारम्भनिवृत्त्योः सद्भावेऽपि न तौ गुणौ भवत इति भावः॥ ३६॥

नन्वारम्भनिवृत्त्योरन्यनिमिकत्वसाम्ये शरीरादीनि परश्वादीनि च समानानि प्रसज्येरन्, अस्ति च तेषामसमानत्वं प्रत्यक्षं? तत्राह—

**"नियमानियमौ तु तद्विशेषकौ"॥ ३७॥**

**"तु"** शब्देन समानत्वं प्रतिषेधति। नियमानियमौ=आरम्भनिवृत्तिजन्यतानियमानियमौ तद्विशेषकौ=तेषां शरीरादीनां परश्वादीनां च विशेषकौ भेदकौ भवत इत्यर्थः।

शरीरादिषु हि साक्षादात्मनाऽधिष्ठेयत्वादिच्छाद्वेषाभ्यां नियमेनारम्भनिवृत्ती जन्येते, परश्वादिषु च तदभावान्न नियमेनेत्यस्ति परश्वादिभ्यः शरीरादिषु विशेषः। अतोऽन्यनिमित्तकत्वसाम्येऽप्यारम्भनिवृत्त्योर्न तानि समानानि प्रसज्यन्त इति भावः॥ ३७॥

**ननु** मा सैद्धां तर्हि शरीरादीनामिच्छाद्वेषौ गुणौ, मनसः सेत्स्यतः? तत्राह—

**"यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः"॥ ३८॥**

इच्छाद्वेषाविति विपरिणम्यानुवर्तते। मनसः=मनःसंज्ञकस्यान्तरिन्द्रियस्येच्छाद्वेषौ गुणौ न भवतः, मनो नेच्छाद्वेषगुणवदिति यावत्, **कुतः?** यथोक्तहेतुत्वात्=यथोक्तहेतुकत्वात् ज्ञस्यारम्भनिवृत्त्योरिच्छाद्वेषपूर्वकत्वादिति यावत्, पारतन्त्र्यात्=वश्यत्वात् करणत्वादिति यावत्, अकृताभ्यागमाच्च=अकृतस्य कर्मणो भोगोऽभ्यागमः, तत्प्रसङ्गाच्चेत्यर्थः।

चेदिच्छाद्वेषौ मनसो गुणौ स्यातां तदा ज्ञानमपि तस्य गुणः स्यात् । यस्य ज्ञानं तस्येच्छाद्वेषौ, यस्येच्छाद्वेषौ तस्यारम्भनिवृत्तिकर्मेति नियमात् । नच ज्ञानं तस्य गुण इत्युक्तं पुरस्तात् । अतस्तत्समानाधिकरणाविच्छाद्वेषावपि न तद्गुणौ । परतन्त्रं च मनः करणत्वाद् वास्यादिवत् । यच्च परतन्त्रं न तस्येच्छाद्वेषौ गुणौ युज्येते । परतन्त्रस्य सर्वदा परप्रयत्नेन प्रवर्तमानत्वात् । इच्छाद्वेषप्रयत्नानां च सामानाधिकरण्यनियमात् । नच मनसो ज्ञानाभावेनेच्छाद्वेषनिमित्तकस्यारम्भनिवृत्तिकर्मणो भोगः उपपद्यते । सुखदुःखानुभवस्यैव भोगत्वाभ्युपगमात् । यस्य च भोगो ज्ञस्यात्मनस्तस्येच्छाद्वेषयोरभावेन तन्निमित्तकं कर्म न युज्यते । तथा च यस्य कर्म न तस्य भोगः, यस्य च भोगो न तस्य कर्मेति स्पष्टोऽकृताभ्यागमप्रसङ्गः । स चानिष्टः । शास्त्रोपदेशातिक्रमणात् । शास्त्रं हि यः कर्मणः कर्ता स एव तत्फलस्य भोक्तेति तत्र तत्रोपदिशति । कथमन्यथा "उपासीत, ध्यायीत, यजेतालभेत" इत्यात्मनेपदमुपाददीत । नह्यन्यकृतस्य कर्मणोऽन्यस्य भोगे तत् कथञ्चिदुपपद्यते । तस्य कर्त्रभिप्राये क्रियाफल एव स्मरणात् । अत एव चाहुस्तत्रभवन्तो दर्शनकृतः **"शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात्"** ( मी० ३।७।१८ ) **"कर्ता शास्त्रार्थवत्त्वात्"** ( वे० २ ।३ । ३३ ) **"आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात्"** ( वै० ६ । १ । ५ ) इति । नचास्तिकानां शास्त्रोपदेशमतिक्रम्यानिष्टाभ्युपगमः शोभते । तस्माद् यस्य ज्ञस्यात्मनो भोगस्तस्यैवेच्छाद्वेषौ गुणौ न मनस इति भावः ॥ ३८ ॥

उपसंहरति—

**"परिशेषाद् यथोक्तहेतूपपत्तेश्च" ॥ ३९ ॥**

आत्मगुणो बुद्धिरिति प्रकृतम् । परिशेषात्=प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेषस्तस्मात्, यथोक्तहेतूपपत्तेश्च=यथोक्तानां "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" इत्यादीनां हेतूनामात्मन्येवोपपन्नत्वाच्च बुद्धिरात्मगुण इत्यर्थः ।

शरीरेन्द्रियमनाँसि खलु प्रतिषिद्धानि न तद्गुणो बुद्धिर्भवितुमर्हति । द्रव्यान्तरं च न किञ्चित् प्रसज्यते यस्य गुणः कल्प्येत । शिष्यते च केवलमात्मा । तस्माद् विज्ञायते **नूनं** तस्यैव गुणो बुद्धिरिति । **"दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्"** (न्या० ३ । १ । १ ) इत्यादयो ये तावदात्मप्रतिपत्तिहेतवः पूर्वमुपन्यस्ताः, तेऽप्यात्मन्येवोपपद्यन्ते, न शरीरेन्द्रियमनस्सु । **ततो**ऽपि भवति प्रतिपत्तिरात्मन एव गुणो बुद्धिरिति भावः ॥ ३९ ॥

**ननु** भवतु बुद्धिरात्मनो गुणः, स्मृतिः कस्य गुणोऽस्ति ? **तत्राह**—

**"स्मरणं त्वात्मनोज्ञस्वाभाव्यात्"** ॥ ४० ॥

अप्यर्थस्तुः । स्मरणं तु=स्मृतिरप्यात्मनः=प्रत्यगात्मनो गुणो वेदितव्यः, **कुतः** ? ज्ञस्वाभाव्यात्=ज्ञस्य स्वभावः स्वीयो धर्मो ज्ञस्वभावः ज्ञानं, तस्य भावो ज्ञस्वाभाव्यं ज्ञानत्वं, तस्मात् ज्ञानत्वादित्यर्थः ।

**आत्मन** एव खलु त्रिकालविषयव्यापिनी ज्ञानशक्तिः "अज्ञासीत्, जानाति, ज्ञास्यति" चेति प्रत्ययादवगम्यते, नान्यस्य कस्यचित् । स्मृतिरपि भूतविषया ज्ञानशक्तिरेव न जातु ततो विशिष्यते । **तस्मात्** साऽपि तस्यैव गुणो वेदितव्या न शरीरेन्द्रियमनसाम् । **किमुक्तं** ? यत्तावज्ज्ञानं तदात्मनो गुण इति नियमः । स्मृतिरपि ज्ञानम् । **तस्मात्** साऽपि तस्यैव गुणोऽध्यवसातव्या नान्यस्य कस्यचिदिति भावः ॥ ४० ॥

नन्वात्ममनःसंयोगात् संस्काराच्च व्यतिरिक्तानि कानि तानि निमित्तानि सन्ति येषामयौगपद्याद् युगपदस्मरणमित्युक्तं पुरस्तात् ? **तत्राह**—

**"प्रणिधान-निबन्धाभ्यास-लिङ्ग-लक्षण-सादृश्य-परिग्रहाश्रयाश्रित-सम्बन्धानन्तर्य्य-वियोगैककार्य्य-विरोधातिशय-प्राप्ति-व्यवधान-सुख-दुःखेच्छा-द्वेष-भयार्थित्व-क्रिया-राग-धर्माधर्मनिमित्तेभ्यः"** ॥ ४१ ॥

स्मरणमित्यनुवर्तते । द्वन्द्वान्ते श्रूयमाणत्वान्निमित्तपदं प्रत्येकमभिसम्बध्यते । प्रणिधानं च निबन्धश्चाभ्यासश्च लिङ्गं च लक्षणं च सादृश्यं च परिग्रहश्चाश्रयश्चाश्रितं च सम्बन्धश्चानन्तर्य्यं च वियोगश्चैककार्य्यं च विरोधश्चातिशयश्च प्राप्तिश्च व्यवधानं च सुखं च दुःखं चेच्छा च द्वेषश्च भयं चार्थित्वं च क्रिया च रागश्च धर्मश्चाधर्मश्च, ते चेमानि निमित्तानि च, तेभ्यः स्मरणं स्मृतिबुद्धिरुत्पद्यत इत्यर्थः ।

सुस्मूर्षितार्थभावनं सुस्मूर्षया चित्तैकाग्र्यमिति यावत् **"प्रणिधानं"**। यदाऽयं चित्तैकाग्र्यं सम्पादयति, **किमुक्तं?** सुस्मूर्षितमर्थं भावयति तदा नूनमेनं स्मृतिबुद्धिरुपतिष्ठते । अतः संस्कारोद्बोधकत्वाद् भवत्येतत् तन्निमित्तम् । अर्थानामेकग्रन्थोपयमो **"निबन्धः"** । उपनिबन्धनमुपयमः । यथा वैशेषिके द्रव्यगुणकर्मप्रभृतीनाम् । अत्र च प्रमाणप्रमेयादीनाम् । सोऽयं संस्कारोद्बोधकत्वादानुपूर्व्येणेतरथा वा तत्तदर्थानां स्मृतिहेतुः । द्रव्ये स्मृते गुणो वा कर्म वा प्रमाणे स्मृते प्रमेयं वा निग्रहस्थानं वाऽवश्यं स्मर्य्यते । समाने विषये ज्ञानानामभ्यावृत्तिः **"अभ्यासः"** । तेनात्र ज्ञानजनितसंस्काराणां दार्ढ्यमुपलक्षयति । ततश्चोद्बुद्धे संस्कारे द्रागित्येव तत्तज्ज्ञानविषये स्मृतिरुपजायते । व्याप्यं **"लिङ्गम्"** । तच्च संयोग्यादिभेदाद् बहुविधं लिङ्गिनः स्मृतिकारणं यथा धूमो वह्नेः, रूपादिकं स्पर्शादेः । साङ्केतिकं चिह्नं **"लक्षणं"** यथा ब्रह्मदण्डं वैदिकोपदेशकानां, स्वस्तिकादिकं चार्य्यम्लेच्छानाम् । ब्रह्मदण्डं दृष्ट्वा खलु वैदिकोपदेशकः स्मर्य्यते । पश्चवयवस्थं स्वस्तिकादिकं च दृष्ट्वा येषामिदं चिह्नं ते स्मर्य्यन्ते म्लेच्छानामयम्, आर्य्याणामयमिति । गुणावयवकर्मसामान्यं, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति यावत् **"सादृश्यम्"** । तदेतद् ययोः परस्परं विद्यते, तयोरेकतरं दृष्ट्वाऽन्यतरं स्मरतीति संस्कारोद्बोधकत्वात् सादृश्यं स्मृतिनिमित्तम् । स्वीकारः **"परिग्रहः"** । येन परिगृह्यते यो वा परिगृह्यते, तयोरेकं दृष्ट्वाऽपरः स्मर्य्यते यथा स्वं दृष्ट्वा स्वामी, स्वामिनं वा दृष्ट्वा स्वः । अधिष्ठानम् **"आश्रयः"** । स च दृष्टिपथं प्राप्तः संस्कारमुद्बोधयन् भवत्यधिष्ठेयस्मृतिनिमित्तं **यथा**

प्रजाधिपः प्रजायाः । अधिष्ठेयम् "**आश्रितम्**" । तच्चाधिष्ठानस्मृतिनिमित्तं **यथा** प्रजा प्रजाधिपस्य । संयोगादिः "**सम्बन्धः**" यथा पर्वतादिना वह्न्यादेः । भवति हि वह्न्यादिदर्शनेन पर्वतादिस्मरणम् । अव्यवधानं नियतक्रम इति यावद् "**आनन्तर्य्यम्**" यथा ब्राह्मे महूर्त्ते प्रबोधानन्तरमुत्थानं, ततो मूत्रं, ततः शौचं, ततो मुखप्रक्षालनं, ततो दन्तधावनं, ततोऽभ्यञ्जनं, ततः स्नानमिति । तत्र पूर्वस्मिन् सम्पन्नेऽपरमानन्तर्य्यात् स्मर्य्यते । तेनेदं भवति तत्तत्स्मृतिनिमित्तम् । विरहो "**वियोगः**" तेन शोकमुपलक्षयति । सोऽयं शोकविषयस्य स्मारकः । समानं कार्य्यम् "**एककार्य्यम्**" यथा सप्तदशावराणामृद्धिकामानामेकं कार्य्यं सत्रं, यथा वा ब्रह्मदण्डानां भारते भारतादन्यत्र वा सर्वत्र वैदिकधर्मोपदेशः समानं कार्य्यम् । तत्रैकस्मिन् दृष्टे भवत्यपरस्मिन् स्मृतिरिति तदपि तन्निमित्तम् । असामानाधिकरण्यं "**विरोधः**" यथा पौरस्त्यैः पाश्चात्त्यानां, यत्रेदमुक्तं—

**विरोधं कुर्वते तावत्पाश्चात्त्याः विविधच्छलाः ।**
**यावत्पौरस्त्यशार्दूलाः नोत्तिष्ठन्ते महाबलाः ॥ १ ॥**

उभयेषां हि तेषामन्यतमस्य दर्शनादन्यतमः स्मर्य्यते । आधिक्यम् "**अतिशयः**" । स च येनोत्पादितस्तस्य स्मृतेर्हेतुः, यथोपनीय विद्याविनयादिलक्षणस्यातिशयस्योत्पादकं खल्वाचार्य्यं गुरुकुलब्रह्मचारी स्मरति । लाभः "**प्राप्तिः**" । सा च यतो जाता तस्य स्मृतौ निमित्तं, **यथा** प्रार्थको यतोऽनेन मिष्टमन्नं प्राप्तं प्राप्तव्यं वा, तमभीक्ष्णं स्मरति । व्यवधायकं "**व्यवधानं**" यथा कोषादिकं खड्गादेः । तेन हि दृष्टिपथमारोहता खड्गादि स्मर्य्यते । अनुकूलवेदनीयं "**सुखं**" प्रतिकूलवेदनीयं "**दुःखम्**" । ताभ्यां तद्धेतुः स्मर्य्यते । इदं मे भूयादित्यभिलाषः "**इच्छा**" । इदं मेऽनिष्टसाधनमितिज्ञानजन्यो रागप्रतिबन्धिगुणो "**द्वेषः**" । ताभ्यां यमिच्छति यं च द्वेष्टि तस्य स्मरति । भीतिः "**भ-**

(१) जापानिकाः.

**यम्"** । यतो बिभेति तस्य स्मृतेर्निमित्तम् । याचनम् **"अर्थित्वम्"** । येनार्थी तत् स्मरति, यथा भोजनेनार्थी भोजनम्, आच्छादनेनार्थी चाच्छादनम् । कार्य्यं **"क्रिया"** । तया कर्ता स्मर्य्यते **यथा** रथेन रथकारः । स्नेहो **"रागः"** । यत्र रज्यति तस्य स्मृतौ निमित्तं **यथा** स्त्रियां रक्तः स्त्रियं पुनः पुनः स्मरति । विहितक्रियाजन्यो गुणो **"धर्मः"**। स च पूर्वजात्यादिस्मृतिनिमित्तम् । वेदाभ्यासजनितेन हि तेन पूर्विका जातिः स्मर्य्यते । निषिद्धक्रियाजन्यो गुणो **"अधर्मः"** । स च प्रागनुभूतदुःखसाधनस्मरणे निमित्तम् । अनेन हि प्रागनुभूतानां दुःखानां साधनानि स्मर्य्यन्ते, **अतएव** कृमिरपि जातमात्रो मारकं वस्तु पश्यन् बिभेति । नचैतानि निमित्तानि युगपद् भवन्ति । न चायुगपद्भवत्सु तेषु नैमित्तिकानि स्मृतिज्ञानानि युगपद् भवितुमर्हन्ति । निमित्तायौगपद्ये नैमित्तिकयौगपद्यासम्भवात् । अत एवोक्तं निमित्तायौगपद्यात् युगपदस्मरणमिति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि संस्कारोद्बोधकत्वाद् निद्रोन्मादप्रभृतीनि निमित्तान्तराण्यपि लोकसिद्धानि वर्तन्ते **तथापि** ज्ञातेषु प्रणिधानादिष्ववशिष्टानि स्वयमेव ज्ञास्यन्ति तर्करसिकाः शिष्या इति न तान्युपन्यास्थत् । एतेष्वपि कानि चिज्ज्ञातानि कानि चिच्च स्वरूपसन्ति निमित्तानि नाविशेषेण सर्वाणीति स्वेनोह्यमिति ॥ ४१ ॥

**ननु** येयं बुद्धिरात्मगुणः परीक्षिता, सा किमवस्थायिनी व्योमवत्, आहोस्विदनवस्थायिनी कर्मवदिति जिज्ञासायामाह—

**"कर्मानवस्थायिग्रहणात्"** ॥ ४२ ॥

कर्मणोऽनवस्थायिनो ग्रहणाद् उपलम्भादवगम्यते नूनं कर्मवदनवस्थायिनी बुद्धिरित्यर्थः ।

**यथा** हि कर्म जातिमदसदादिप्रत्यक्षं निरवयवं च भवद् द्रव्यमाश्रयति **तथा** बुद्धिरपि जातिमत्यसदादिप्रत्यक्षा निरवयवा च सती द्रव्यमाश्रयति । कर्म च तथाभूतमनवस्थायि गृह्यते । **तस्माद्** भवति

प्रतिपत्तिर्नूनमेषाऽपि कर्मवदनवस्थायिनी । **कर्मवदि**त्युपलक्षणं शब्दवत् सुखवदित्यपि द्रष्टव्यम् । **किमुक्तं ?** यत् खलु जातिमदसदादिप्रत्यक्षं च भवद् नित्यं द्रव्यं समवैति तदनवस्थायि गृह्यते **यथा** शब्दः । बुद्धिरपि जातिमत्यस्मदादिप्रत्यक्षा च सती नित्यं द्रव्यं समवैति । तस्मादेषाऽपि शब्दवदनवस्थायिनी । **यत्तावद्** गुणत्वे सत्यबाह्यकरणप्रत्यक्षं, तदनवस्थायि गृह्यते **यथा** सुखम् । बुद्धिरपि गुणत्वे सत्यबाह्यकरणप्रत्यक्षा । तस्मादियमपि सुखवदनवस्थायिनीति भावः ॥

**यद्वा** यथा कर्मानवस्थायि तथा बुद्धिरप्यनवस्थायिनी, **कुतः ?** ग्रहणात्=तथोपलम्भादित्यर्थः ।

**यथा** हि कर्मानवस्थायि गृह्यते **तथा** बुद्धिरप्यनवस्थायिनी गृह्यते । को नु नाम पूर्वस्याः बुद्धेरुत्तरस्माद् बुद्ध्यन्तराद् विनाशं न गृह्णाति । **नहि** सन्निकर्षोत्पन्ना घटबुद्धिः पटबुद्धिवेलायामवतिष्ठते । **यदा** नावतिष्ठते **तदा**ऽनवस्थायिनी सा निश्चेतव्या । अवस्थायित्वेऽनवस्थानासम्भवात् । अनवस्थायित्वं च क्षणिकत्वम् । तच्चेह तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमिति भावः ॥ ४२ ॥

**अत्र शङ्कते—**

**"अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत्"** ॥ ४३ ॥

विद्युत्सम्पाते=विद्युत् **तड़ित्**, तस्याः सम्पातः **पतनं**, तस्मिन् सति रूपाव्यक्तग्रहणवत्=प्रकाश्यं घटादिविषयजातमत्र **रूपं**, रूप्यते निरूप्यत इति तद्व्युत्पत्तेः, तस्याव्यक्तग्रहणं—योग्याशेषविशेषगुणविशिष्टग्रहणं **व्यक्तग्रहणं**, तद्भिन्नं सामान्यधर्मविशिष्टग्रहणमिति यावद् यथा भवति तथाऽव्यक्तग्रहणं=बुद्ध्याऽपि बोद्धव्यस्य घटादिविषयजातस्याव्यक्तग्रहणं स्यात्, **कुतः ?** अनवस्थायित्वात्=विद्युत्प्रकाशवदचिरस्थायित्वादित्यर्थः ।

**यथा** हि विद्युत्सम्पाते जायमानेन वैद्युतप्रकाशेन घटादिविषयजातं व्यक्तं न गृह्यते **तथा** बुद्ध्याऽपि न गृह्येत । तस्याः अपि वैद्युतप्रकाशवद-

नवस्थायित्वात् । गृह्यते च तया व्यक्तं विषयजातम् । **अतो** विज्ञायते नानवस्थायिनी बुद्धिरिति भावः ॥ ४३ ॥

**समाधत्ते—**

**"हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा" ॥ ४४ ॥**

हेतूपादानात्=अनवस्थायित्वहेतुग्रहणात् प्रतिपद्यते 'प्रतिषेद्धव्याभ्यनुज्ञा=बुद्धौ प्रतिषेद्धव्यस्यानवस्थायित्वस्य तेऽभ्यनुज्ञाऽनुमतिर्विद्यत इत्यर्थः।

**यत्** खल्वभ्यनुज्ञायते **तदेव** स्वार्थसिध्या उपादीयते नान्यदिति नियमः। भवता च "बुध्या व्यक्तं न गृह्येतानवस्थायित्वाद् वैद्युतप्रकाशवत्" इति प्रयुञ्जानेन "अनवस्थायित्वं" हेतुरुपादीयते। न च तदुपादानमृते तदभ्यनुज्ञानादुपपद्यते। तच्च नासिद्धे तस्मिन्। **अतो** भवति प्रतिपत्तिरनवस्थायिनी तावद् बुद्धिर्नावस्थायिनीति भावः ॥ ४४ ॥

नन्वसाभिर्भवद्बुध्या हेतुरुपादीयते नात्मबुध्या ? **तत्राह—**

**"प्रदीपार्चिः सन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम्" ॥४५॥**

प्रदीपार्चिः सन्तत्यभिव्यक्तग्रहणवत्=यथा प्रदीपार्चिः सन्तत्या—सन्तत्या वर्तमानेनानवस्थायिना प्रदीपार्चिषेति यावद् विषयस्याभिव्यक्तग्रहणं भवति तथाऽनवस्थायिन्या बुध्याऽपि तद्ग्रहणं=विषयस्याभिव्यक्तग्रहणं प्रतिपत्तव्यमित्यर्थः।

**यस्तावदनवस्थायी** प्रकाशः, तेन विषयस्य व्यक्तग्रहणं न भवतीति नायं नियमः। अनवस्थायिनाऽपि प्रदीपार्चिषा व्यक्तग्रहणदर्शनात्। **नहि** प्रदीपार्चिस्त्वयाऽनवस्थायि नाभिमन्यते। न च तेन दृष्टं वा व्यक्तग्रहणं कथञ्चिद् निह्नोतुं शक्यते। **तथा** चानवस्थायिनाऽपि प्रदीपार्चिषा **यथा** विषयस्याभिव्यक्तग्रहणं सम्भवति **तथा**ऽनवस्थायिन्या बुध्याऽपि तस्याभिव्यक्तग्रहणं सम्भवति नास्ति कश्चिद्दोषः। **तस्माद**नवस्थायिनी बुद्धिरिति भावः ॥ ४५ ॥

**ननु** भवतु बुद्धिरनवस्थायिनी **तथापि** सा शरीरगुण एव सेत्स्यति

नात्मगुण इत्याशङ्कां सामान्यतो निरस्तामपि पुनर्विशेषतो निरसितुमुपक्रममाणः पूर्वन्तावत् संशयमुपन्यस्यति—

**"द्रव्ये स्वगुण-परगुणोपलब्धेः संशयः" ॥ ४६ ॥**

द्रव्ये=अबादौ स्वगुणपरगुणोपलब्धेः=स्वगुणस्य रूपादेः परगुणस्य चौष्ण्यादेरुपलम्भात् संशयः=किं शरीरे **"गौरोऽहं जानामि"** इत्युपलभ्यमाना बुद्धिः स्वगुण आहोस्वित् परगुण इति संशय इत्यर्थः ।

द्रव्ये खलु स्वगुणस्य परगुणस्य चोपलब्धिर्दृश्यते, **यथा** जलादौ स्वगुणस्य रूपादेः परगुणस्य चौष्ण्यादेः । शरीरमपि द्रव्यम् । **अतस्त**त्रोपलभ्यमानया "गौरोऽहं जानामि" इति बुद्ध्या स्वगुणेन परगुणेन वाऽवश्यं भवितव्यम् । नचान्यतरनिर्धारणेऽस्ति किञ्चित् प्रमाणम् । **अतः** संशयः किमयं स्वगुण आहोस्वित् परगुण इति भावः ॥

**तत्र** स्वगुण इति पूर्वः पक्षः । परगुणः न स्वगुण इति यावदिति सिद्धान्तः । शरीरं स्वम् । आत्मा पर इति विवेकः ॥ ४६ ॥

**अथ** सिद्धान्तमाह—

**"यावद्द्रव्यभावित्वाद् रूपादीनाम्" ॥ ४७ ॥**

रूपादीनां=स्वगुणानां रूपादीनां यावद्द्रव्यभावित्वात्=यावत्स्वाश्रयद्रव्यं भवितुं वर्तितुं शीलं येषां ते यावद्द्रव्यभाविनस्तेषां भावस्तत्त्वं, तस्मात् यावत्स्वाश्रयद्रव्यवर्तित्वादवगम्यते न शरीरगुणो बुद्धिरित्यर्थः ।

**ये** खलु द्रव्याणां स्वगुणास्ते यावद्द्रव्यभाविनो दृष्टाः, यथा जलादीनां रूपादयः । बुद्धिरपि **चेत्** शरीरस्य स्वगुणः स्यात् **तदा** यावच्छरीरभाविनी स्यात् । नचेयं तथोपलभ्यते । **तस्माद्** भवति प्रतिपत्तिर्न शरीरस्य स्वगुणो बुद्धिरिति भावः ॥

**तत्र** बुद्धिर्न स्वगुणः, अयावच्छरीरभावित्वात्, व्यतिरेके रूपादिवत् । शरीरनाशजन्यनाशप्रतियोगित्वं यावच्छरीरभावित्वं, तन्नाशाजन्यनाशप्रतियोगित्वमयावच्छरीरभावित्वम् । **एवं** द्रव्यनाशजन्यनाशप्रतियोगित्वं यावद्द्रव्यभावित्वं, तन्नाशाजन्यनाशप्रतियोगित्वं चायावद्द्रव्यभावित्वमिति विवेकः ॥ ४७ ॥

**अत्र** शङ्कते—

**"न पाकजगुणान्तरोत्पत्तेः"** ॥ ४८ ॥

रूपादीनां यावद्द्रव्यभावित्वमिति विपरिणम्यानुवर्तते। न=रूपादीनां यावद्द्रव्यभावित्वं न, **कुतः** ? पाकजगुणान्तरोत्पत्तेः=ततोऽन्येषां पाकजगुणानामुत्पत्तेरित्यर्थः।

**चेद्** रूपादयो गुणाः यावद्द्रव्यभाविनो भवेयुः, **तदा** पाकेन ततोऽन्येषां पाकजगुणानामुत्पत्तिर्न स्यात्। भवति चोत्पत्तिः। **अतो**ऽवगम्यते न यावद्द्रव्यभाविनो रूपादयो गुणाः। **किमुक्तं** ? रूपादिपरावृत्तिफलको विजातीयतेजःसंयोगः खलु **"पाकः"** इति व्यपदिश्यते। तेन ये रूपादयो गुणाः परावर्तन्ते ते **"पाकजा"** इत्याख्यायन्ते, पाकेन जाताः परावृत्ताः पाकजा इति तद्व्युत्पत्तेः। ते च पूर्वगुणेभ्योऽर्थान्तरभूता अभ्युपगन्तुं शक्यन्ते नानर्थान्तरभूताः। पाकवैयर्थ्यप्रसङ्गात्। न च तेषामर्थान्तरभूतत्वे रूपादीनां यावद्द्रव्यभावित्वमुपपद्यते। पूर्वगुणनाशाभावेऽर्थान्तरभूतगुणोत्पत्त्यसम्भवात्। **नहि** श्यामादिषु सत्सु रक्तादयः पाकेनोत्पत्तुमर्हन्ति। भवति च तेषामुत्पत्तिः। **तस्मात्** प्रतिपद्यते नास्ति रूपादीनां यावद्द्रव्यभावित्वम्। **तथा** **चा**यावद्द्रव्यभाविनो रूपादयो **यथा** शरीरगुणाः **तथा**ऽयावद्द्रव्यभाविनी बुद्धिरपि भवति तद्गुण इति भावः ॥ ४८ ॥

**समा**धत्ते—

**"प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः"** ॥ ४९ ॥

रूपादीनामित्यनुवर्तते। अप्रतिषेधः=रूपादीनां यावद्द्रव्यभावित्वप्रतिषेधो नोपपद्यते, **कुतः** ? पाकजानां=पाकजगुणानां प्रतिद्वन्द्विसिद्धेः=तत्प्रतिद्वन्द्वितयोत्पत्तेरित्यर्थः।

**ये** खलु पाकेन पाकजाः गुणा उत्पद्यन्ते, ते पूर्वगुणप्रतिद्वन्द्वितयोत्पद्यन्ते **यथा** रूपस्य प्रतिद्वन्द्वितया रूपं, रसस्य रसो, गन्धस्य गन्धः, स्पर्शस्य च स्पर्श इति। न चैवमुत्पद्यमानेषु तेषु रूपादीनां यावद्द्रव्यभावित्व-

प्रतिषेधः उपपद्यते । तेषां यावत्स्वाश्रयद्रव्यमनुवृत्तेरव्याहतत्वात् । **नहि** स्वाश्रयद्रव्येष्वनुवर्तमानेषु रूपादयो नानुवर्तन्ते । न च पाकेन परावर्तमानं रूपं रूपं रसो रसो गन्धो गन्धः स्पर्शो वा स्पर्शो न भवति । न चात्यन्तोपरमाभावे कश्चिदपि गुणोऽयावद्द्रव्यभावी सेद्धुमर्हति । न च बुद्ध्यादिवद् रूपादीनामत्यन्तोपरमः कदाचिदुपलभ्यते । न चोपलम्भाभावे कल्पना युक्ता । **तस्माद**वगम्यते न तावद्रूपादयोऽयावद्द्रव्यभाविनोगुणाः **किन्तु** यावद्द्रव्यभाविनः । **तथा च** बुद्धिरपि चेद्रूपादिवत् शरीरगुणः स्यात् यावच्छरीरभाविनी स्यात् । अयावच्छरीरभाविनी च बुद्धिः । **अतो** न शरीरगुण इति भावः ॥ ४९ ॥

**अत्रैव** हेत्वन्तरमाह—

**"शरीरव्यापित्वात्" ॥ ५० ॥**

रूपादीनामित्यनुवर्तते । शरीरव्यापित्वात्=रूपादीनां यावच्छरीरव्यापित्वादवगम्यते न शरीरगुणो बुद्धिरित्यर्थः ।

रूपादयः खलु शरीरगुणाः यावच्छरीरव्यापिनो दृष्टाः । बुद्धिरपि चेच्छरीरगुणः स्यात् **तदा** रूपादिवद् यावच्छरीरव्यापिनी स्यात् । अस्ति च शरीरैकदेशहृदयमात्रव्यापिनी । प्रत्यगात्मनोऽणुत्वेन तत्रैव तदुत्पत्तेरभ्युपगमात् । **अतो** न शरीरगुणो बुद्धिरिति भावः ॥ ५० ॥

शङ्कते—

**"न केशनखादिष्वनुपलब्धेः" ॥ ५१ ॥**

रूपादीनां शरीरव्यापित्वमिति च विपरिणम्यानुवर्तते । न=रूपादीनां शरीरव्यापित्वं न, **कुतः** ? केशनखादिषु=शरीरसम्बन्धिकेशनखप्रभृतिष्वनुपलब्धेः= तदुपलम्भाभावादित्यर्थः ।

रूपादयश्चेद् यावच्छरीरव्यापिनो भवेयुस्तदा केशनखादीनपि व्याप्नुयुः । न च तेषां तत्र व्याप्तिरुपलभ्यते । **नहि** यादृशं रूपं यादृशो रसो यादृशो गन्धो यादृशः स्पर्शः शरीरसम्बन्धिहस्तपादादिषूपलभ्यते तादृशं रूपं तादृशो रसः तादृशो गन्धः तादृशः स्पर्शः केशनखादिषूपलभ्यते । न

चोपलम्भाभावे तेषां यावच्छरीरव्यापित्वमभ्युपगन्तुं शक्यते । **अतो** भवत्यनुमानं न खलु यावच्छरीरव्यापिनो रूपादयो गुणा इति भावः॥५१॥

समाधत्ते—

**"त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः"॥५२॥**

रूपादीनां, न, इति द्वयमनुवर्तते । केशनखादिषु=केशनखप्रभृतिष्व-प्रसङ्गः=रूपादीनामव्याप्तिर्दोषाय न भवति, **कुतः?** शरीरस्य=देहस्य त्वक्पर्यन्तत्वात्=त्वगिन्द्रियान्तत्वादित्यर्थः ।

यावत्पर्यन्तं ह्यस्मिन् देहे त्वगिन्द्रियसम्बन्धो विद्यते, तावत्पर्यन्तमेव शरीरग्रहणेन गृह्यते नाधिकं नापि न्यूनम् । चेष्टेन्द्रियार्थाश्रयस्यैव शरीरत्वाभ्युपगमात् । न च केशनखादिषु त्वगिन्द्रियसम्बन्धो विद्यते । हस्तपादादिष्विव छिन्नेषु तेषु वेदनाऽदर्शनात् । न च त्वगिन्द्रियसम्बन्धाभावे तेषां शरीरत्वमुपपद्यते । अशरीरेषु च तेषु रूपादीनामव्याप्तेः शरीरव्यापित्वं न व्याहन्यते । **तथा च** बुद्धिरपि चेच्छरीरगुणः स्यात् रूपादिवद् यावच्छरीरव्यपिनी स्यात् । नचास्ति यावच्छरीरव्यापिनी । **तस्माद**वगम्यते न सा शरीरगुण इति भावः ॥ ५२ ॥

अत्रैव हेत्वन्तरमाह—

**"शरीरगुणवैधर्म्यात्"** ॥ ५३ ॥

शरीरगुणानां यो धर्मः, ततो विरुद्धधर्मकत्वादवगम्यते न शरीरगुणो बुद्धिरित्यर्थः ।

ये खलु रूपादयः शरीरगुणाः ते सर्वे बहिरिन्द्रियग्राह्यत्वधर्माणो दृष्टाः । बुद्धिरपि चेच्छरीरगुणःस्यात् **तदा**ऽवश्यं बहिरिन्द्रियग्राह्यत्वधर्मा स्यात् । अस्ति च तद्विरुद्धमनोग्राह्यत्वधर्मा बुद्धिः । **तस्मात्** प्रतिपद्यते नेयं शरीरगुण इति भावः ॥ ५३ ॥

शङ्कते—

**"न रूपादीनामितरेतरवैधर्म्यात्"** ॥ ५४ ॥

शरीरगुणवैधर्म्यमिति विपरिणम्यानुवर्तते । न=शरीरगुणत्वाभावे

शरीरगुणवैधर्म्यं प्रयोजकं न, **कुतः?** रूपादीनां=रूपप्रभृतीनामितरेतरवैधर्म्यात्=शरीरगुणत्वेऽपि परस्परविरुद्धधर्मकत्वादित्यर्थः।

**विभिन्नेन्द्रियग्राह्याः** खलु रूपादयो गुणाः न कर्हिचिदेकेनेन्द्रियेण गृह्यन्ते। **नहि** येनेन्द्रियेण रूपं गृह्यते, तेनैव रसो गन्धः स्पर्शो वा गृह्यते। चक्षुषा हि रूपं गृह्यते, तेन चक्षुरिन्द्रियग्राह्यत्वं रूपस्य, रसनेन रसो गृह्यते, तेन रसनेन्द्रियग्राह्यत्वं रसस्य, घ्राणेन गन्धो गृह्यते, तेन घ्राणेन्द्रियग्राह्यत्वं गन्धस्य, स्पर्शनेन स्पर्शो गृह्यते तेन स्पर्शनेन्द्रियग्राह्यत्वं स्पर्शस्य धर्मः। **तथा च** विधर्मणामपि रूपादीनां **यथा** शरीरगुणत्वं **तथा** विधर्मणो बुद्धेरपि तद्गुणत्वं सेत्स्यति। नास्ति कश्चिद्दोष इति भावः ॥५४॥

**समाधत्ते**—

**"ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः"** ॥ ५५ ॥

अप्रतिषेधः="शरीरगुणत्वाभावे शरीरगुणवैधर्म्यं प्रयोजकं न" इत्युक्तः प्रतिषेधो नोपपद्यते, **कुतः?** रूपादीनां=शरीरगुणानां रूपादीनामैन्द्रियकत्वात्=विभिन्नेन्द्रियग्राह्यत्वेऽपि बहिरिन्द्रियग्राह्यत्वसामान्यात् परस्परविरुद्धधर्मकत्वाभावादिति यावदित्यर्थः।

**यद्यपि** विभिन्नेन्द्रियग्राह्याः खलु रूपादयो गुणाः, **तथापि** ते बहिरिन्द्रियग्राह्यत्वं नातिवर्तन्ते। न च तदतिवर्तनाभावे तेषामितरेतरवैधर्म्यमुपपद्यते। अतिवर्तते च बुद्धिः। तस्मादेषा विधर्मा। वैधर्म्याच्च न सा शरीरगुणः किन्त्वात्मगुण इति भावः ॥ ५५ ॥

परीक्षिता बुद्धिः, **सम्प्रति** क्रमप्राप्तं **मनः** परीक्षणीयं, **तत्र** सिद्धान्तमाह—

**"ज्ञानायौगपद्यादेकं मनः"** ॥ ५६ ॥

मनः=मनःसंज्ञमन्तरिन्द्रियमेकं=प्रतिशरीरमेकमभ्युपगन्तव्यं, **कुतः?** ज्ञानायौगपद्यात्=इन्द्रियार्थसन्निकर्षे सत्यपि ज्ञानानां युगपद्भावाभावादित्यर्थः।

**आत्मना**ऽधिष्ठितं मनः खलु येनेन्द्रियेण संयुज्यते, तेन तदर्थगोचरं

ज्ञानमुत्पद्यते, नेन्द्रियान्तरेणेति नियमः। चेदिदं मनः प्रतिशरीरमनेकं स्यात् **तदा** यावन्तीन्द्रियाणि तावन्ति मनांसीति प्रत्येकमस्य सन्निकर्षस्य सद्भावात् सर्वैः सर्वार्थगोचराणि ज्ञानानि युगपदुत्पद्येरन्। न चेन्द्रियार्थ-सन्निकर्षे सत्यपि तानि युगपदुत्पद्यन्ते। **तस्मा**द्विज्ञायते न प्रतिशरीरम-नेकं मनः **किन्त्वेकं**, यस्यायुगपत्संयोगाद् ज्ञानायौगपद्यमिति भावः॥५६॥

शङ्कते—

**"न युगपदनेकक्रियोपलब्धेः ॥ ५७ ॥**

एकं मन इत्यनुवर्तते। न=प्रतिशरीरमेकं मनो न, **कुतः?** युगपद-नेकक्रियोपलब्धेः=एकदा—दीर्घशष्कुलीभक्षणवेलायामनेकेषां ज्ञानाना-मुपलम्भादित्यर्थः—

**यदा** खल्वयं दीर्घशष्कुलीं हस्ताभ्यां परिगृह्य भक्षयति, **तदा**ऽस्य चाक्षुषरासनघ्राणजस्पर्शनानि ज्ञानानि युगपदुत्पद्यन्ते। नह्येष भक्षयन् तां न चक्षुषा पश्यति, न रसनेन रसयति, न घ्राणेन जिघ्रति, न स्पर्शनेन स्पृ-शति। चेदिदं मनः प्रतिशरीरमेकं स्यात् **तदा** नैतानि ज्ञानानि युगपदुत्प-द्येरन्। एकस्य मनसो युगपदनेकत्र ज्ञानप्रयोजकसम्बन्धासम्भवात्। उत्पद्यते च। **अतो**ऽवगम्यते न प्रतिशरीरमेकं मन इति भावः ॥ ५७ ॥

**स**माधत्ते—

**"अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात्" ॥ ५८ ॥**

मनस इति विपरिणम्यानुवर्तते। अलातचक्रदर्शनवत्=अर्द्धदग्धकाष्ठ-मलातं, तस्याशुसञ्चाराच्चक्रवद् दर्शनमुपलब्धिर्यथा भवति, तथाऽऽशुसञ्चा-रात्=तत्तदिन्द्रियप्रदेशे ज्ञानप्रयोजकसम्बन्धार्थं मनसो झटिति वृत्तिला-भात्तदुपलब्धिः=युगपदनेकज्ञानोपलब्धिर्भवतीत्यर्थः।

यथा भ्रमति खल्वलाते विद्यमानस्यापि क्रमस्याशुसञ्चारदोषेणाग्रहणाद् भवति चक्रवदुपलब्धिः **तथा** दीर्घशष्कुलीभक्षणवेलायां जायमानानां ज्ञा-नानां क्रमस्य विद्यमानत्वेऽपि मनसस्तत्तदिन्द्रियप्रदेशेन सम्बन्धार्थमाशुवृ-त्तिलाभाद् दोषाद् ग्रहणं न भवति। तदग्रहणाच्च युगपदनेकज्ञानोपलब्धि-

भ्रमो न यथार्थज्ञानम्। **अतः** प्रतिपत्तव्यमेकं प्रतिशरीरं मनो नानेकमिति भावः ॥ ५८ ॥

**ननु** किंपरिमाणं मनः? तत्राह—

"यथोक्तहेतुत्वाच्चाणु" ॥ ५९ ॥

मन इत्यनुवर्तते। चकारेणैकत्वसाधक एव हेतुः परिमाणसाधको न हेत्वन्तरमित्यवधारयति। यथोक्तहेतुत्वाच्च=यथोक्तहेतु मनः, तस्य भावस्तत्त्वं ज्ञानायौगपद्यं, तस्मादेवावगम्यते मनोऽणु=कार्य्ये कारणप्रयोगः, अणूनि भूतसूक्ष्माणि, तत्कार्य्यत्वादणु अणुपरिमाणकम्—अणूनां भूतसूक्ष्माणां परिमाणमस्य तत्तथा मध्यमपरिमाणमिति यावदित्यर्थः।

**यथा** हि ज्ञानायौगपद्याद्धेतोः प्रतिशरीरमेकं मनः सिध्यति **तथा** मध्यमपरिमाणमपि सिध्यति। तदभावे तस्य हेतुत्वासम्भवात्। नहि परमाणुपरिमाणस्य मनसोऽतीन्द्रियतया तदाश्रितज्ञानादिगुणानामप्रत्यक्षताप्रसक्तौ ज्ञानायौगपद्यस्य हेतुत्वं सम्भवति। नच सामान्यतः प्रत्यक्षं विशेषतः प्रत्यक्षञ्च परित्यज्य सर्वथाऽप्रत्यक्षं क्वचिद्धेतुरभ्युपगम्यते। ज्ञानादिगुणानां चात्मनो निर्विकारत्वेन मनसश्च जड़त्वेनाश्रयत्वानुपपत्त्या विशिष्टाश्रयत्वाभ्युपगमेन तदाश्रयत्वमुपपद्यते। विशिष्टवृत्तिधर्मस्य विशेषणवृत्तित्वनियमात्। मध्यमपरिमाणस्य च तस्य घ्राणादिभिः समस्तेन्द्रियैर्युगपत् सम्बन्धसामान्ये सत्यपि ज्ञानप्रयोजकसम्बन्धविशेषासत्त्वाद् न ज्ञानायौगपद्यमनुपपन्नम्। न चेहाणुशब्देनाणुपरिमाणमेव विवक्षितं न मध्यमपरिमाणमिति युक्तं भाषणम्। अग्रिमसूत्रेऽभिधास्यमानायास्तदुत्पत्तेरसाङ्गत्यप्रसङ्गात्। **नहि** उत्पद्यमानञ्चाणुपरिमाणञ्चेति कथञ्चित्सङ्गच्छते। न चासङ्गतं किञ्चिदभ्युपगच्छन्ति वैदिकाः। **तस्मात्** प्रतिपद्यते यथोक्तहेतुत्वाद् मध्यमपरिमाणं मन इति भावः ॥ ५९ ॥

**ननु** नोत्पत्त्यभावे मनो मध्यमपरिमाणं सेद्धुमर्हति, तस्मात्तदुत्पत्तिर्वक्तव्या? तत्राह—

**"पूर्वकृतफलानुबन्धात्तदुत्पत्तिः" ॥ ६० ॥**

भूतेभ्य इत्यग्रिमसूत्रादाकृष्यते । पूर्वकृतफलानुबन्धात्=पूर्वस्मिन् सर्गे कृतानि—मनोवाक्कायैरनुष्ठितानि यानि शुक्लाशुक्लकर्माणि तज्जन्यं सुखदुःखानुभवलक्षणफलजनकत्वात् फलमदृष्टं, तस्यानुबन्धः सम्बन्धः, तस्मात् पूर्वसर्गानुष्ठितशुभाशुभकर्मजन्यादृष्टसम्बन्धाद् भूतेभ्यः=भूतसूक्ष्मेभ्यस्तदुत्पत्तिः=तस्य मनस उत्पत्तिर्जन्म भवतीत्यर्थः ।

यत्तावत्प्राकृतिकं तत्प्रलयवेलायां प्रकृतिसाम्यमुपगच्छति । नोचेदुपगच्छेत् न प्राकृतिकं स्यात् । मनश्च प्राकृतिकम् । प्रकृतिपुरुषेश्वरेभ्यो व्यतिरिक्तस्य भावमात्रस्य प्राकृतिकत्वाभ्युपगमात् । न च प्रकृतिसाम्यमुपगतस्य पुनः सर्गारम्भे भूतेभ्यः सहसोत्पत्तिः सम्भवति । तेषां सर्वान् प्रत्यविशिष्टत्वेन विचित्रकार्यजननसामर्थ्याभावात् । मनोवैचित्र्यञ्च प्रत्यक्षम् । **नहि** सर्वेषामेकरसं मनो भवति । कस्यचित्सात्त्विकं कस्यचिद्राजसं कस्यचित्तामसमिति को नु नाम न जानीते । न च तदन्तरेण कारणमुपपद्यते । कारणं च न कर्मणोऽन्यत्सम्भवति । तस्यैव विचित्रत्वेन विचित्रकार्यजनकत्वसम्भवात् । **तथा** चोक्तं दर्शनान्तरे **"कर्मवैचित्र्यात् सृष्टिवैचित्र्यम्"** ( सां०—६।४१ ) इति । **तस्मात्** पूर्वसर्गानुष्ठितशुक्लाशुक्लकर्मजन्यादृष्टसहकृतेभ्यो भूतेभ्यो भवति तदुत्पत्तिरिति भावः ॥

**इदमत्र बोध्यम्**—ये खलु **"यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु"** ( यजुः ३४।३ ) इति मन्त्रेऽमृतविशेषणोपादानाद् मनसो नित्यत्वमाचक्षते । ते नूनमनभिज्ञाः । तात्पर्यानवबोधात् । **नहि** "अमृतम्" इत्यस्य मनसो नित्यत्वे तात्पर्यम्, **अपि च ?** आऽपवर्गात् चिरस्थायित्वे । न ब्रह्मदर्शनादृते मृतं मरणं भवति यस्य तदमृतमिति तद्व्युत्पत्तेः । आऽपवर्गञ्च तस्य स्थायित्वमिष्टमेव नानिष्टमिति युक्तं विशेषणम् । चेदमृतं नित्यमित्यभिप्रायो भगवतो वेदस्य स्यात् **तदा** प्रलयवेलायां **"स्वधया तदेकं"** ( ऋ०।१०।१२९ ) इति मन्त्रे प्र-

कृत्या सहैकाकिनो जगत्पितुः परमात्मनः स्थितिं न ब्रूयात्, **अपि च?** मनसोऽपि स्थितिमाचक्षीत। **नहि** नित्यस्य सतो विजातीयस्य तस्य प्रकृतौ वा परमात्मनि वा लयः सम्भवति। न च परस्परं व्याहन्यमानमर्थं भगवान् वेदो ब्रूते। अनृतव्याघातपुनरुक्तदोषाणां गन्धस्यापि तत्र घ्रातुमशक्यत्वात्। **ननूपलभ्यमानेषु** वेदेषु बहुशो मन्त्रपौनरुक्त्यं दृश्यते? **सत्यं** वेदसंरक्षकाणामार्याणामेष दोषो न भगवतो वेदस्येति प्रगटमुत्तरम्। जीवात्मानस्तु नित्याः सन्तोऽपि पित्रोरङ्के निषण्णत्वाद् बाला इव न ताभ्यां पृथग् गण्यन्ते। **अतो** न कश्चिद्दोष इति॥ ६०॥

**ननूदाहरणाभावे**ऽदृष्टसहकृतेभ्यो भूतेभ्यस्तदुत्पत्तेरुपादानं न सम्भवति तस्मादुदाहरणं वक्तव्यं? **तत्राह**—

**"भूतेभ्योमूर्त्युपादानवत्तदुपादानम्"॥ ६१॥**

भूतेभ्यः=अदृष्टसहकृतेभ्यः स्थूलभूतेभ्यो मूर्त्युपादानवत्=जायमानायाः शरीरलक्षणायाः मूर्तेर्यथाऽस्त्युपादानं तथा तदुपादानम्=अदृष्टसहकृतेभ्यो भूतसूक्ष्मेभ्यस्तदुत्पत्तेरुपादानं ग्रहणं कर्तव्यमित्यर्थः।

**यथा** ह्यदृष्टसहकृतेभ्यः स्थूलभूतेभ्यः शरीरलक्षणायाः मूर्तेरुत्पत्तिरुपादीयते **तथा**ऽदृष्टसहकृतेभ्यो भूतसूक्ष्मेभ्यो मनसस्तावदुत्पत्तिरप्युपादातव्या। समानत्वादिति भावः॥ ६१॥

**शङ्कते**—

**"न साध्यसमत्वात्"॥ ६२॥**

न=अदृष्टसहकृतेभ्यः स्थूलभूतेभ्यः शरीरस्योत्पत्तिवदित्युदाहरणं नोपपद्यते, **कुतः?** साध्यसमत्वात्=सन्दिग्धं साध्यं तत्समत्वात् सन्दिग्धत्वादिति यावदित्यर्थः।

**निश्चितं** ह्युदाह्रियते न सन्दिग्धम्। सन्दिग्धा चादृष्टसहकृतेभ्यः स्थूलभूतेभ्यः शरीरस्यास्योत्पत्तिः। नहि मातापित्रोर्लोहितरेतसी विहायादृष्टं केनचिदुपलभ्यते, येन तत् सहकारिकारणमुपादीयेत। नचोपलम्भाभावे तदुपादानं युज्यते। **तस्मा**देतदनुदाहरणमिति भावः॥ ६२॥

समाधत्ते—

**"नोत्पत्तिनिमित्तत्वान्मातापित्रोः" ॥ ६३ ॥**

न=अनुदाहरणं न, कुतः? मातापित्रोः=कार्यं कारणप्रयोगः' अदृष्टसहकृतयोरेव मातापितृलोहितरेतसोरुत्पत्तिनिमित्तत्वात्=शरीरोत्पत्तिहेतुत्वादित्यर्थः।

यद्यपि मातापित्रोर्लोहितरेतसी विहायादृष्टं न केनचिदुपलभ्यते तथापि तत्सत्ताऽभ्युपगन्तव्या। केवलयोस्तयोस्तदुत्पत्तावहेतुत्वादिति भावः ॥ ६३ ॥

ननु मातापितृलोहितरेतसोरिवास्ति कस्यचिदन्यस्यापि तन्निमित्तत्वं? तत्राह—

**"तथाऽऽहारस्य" ॥ ६४ ॥**

मातापित्रोरुत्पत्तिनिमित्तत्वमिति विपरिणम्यानुवर्तते। तथा=यथा मातापितृलोहितरेतसोः शरीरोत्पत्तिनिमित्तत्वं तथाऽऽहारस्य=मात्रा भुक्तं पीतमाहारः, तस्याप्यस्ति तदुत्पत्तिनिमित्तत्वमित्यर्थः।

रेतःसेकानन्तरं स्थिते गर्भे मात्रा यद्यद् भुज्यते पीयते च, तेन तेन गर्भाशयस्थं शरीरं प्रतिक्षणमुपचीयते। नास्त्यत्र कस्यचिद्विमतिः। अतो मातापितृलोहितरेतसोरिव मातृकृतस्याहारस्यापि भवति तन्निमित्तत्वमिति भावः ॥ ६४ ॥

नन्वदृष्टसहकृतयोरेव मातापितृलोहितरेतसोः शरीरोत्पत्तौ निमित्तत्वं न केवलयोरिति कुतोऽवगम्यते? तत्राह—

**"प्राप्तौ चानियमात्" ॥ ६५ ॥**

मातापित्रोरित्यनुवर्तते। चोऽप्यर्थः। प्राप्तौ च=मातापितृलोहितरेतसोर्नक्तं नक्तं गर्भाशये प्राप्तौ सत्यामप्यनियमात्=शरीरोत्पादनियमाभावादित्यर्थः।

स्त्रीपुरुषौ तावत्पुत्रकामनया प्रतिरात्रि प्रयत्नेन गर्भाशये लोहितरे-

तसी प्रापयतः । तत्र तत्प्राप्तौ सत्यामपि न सर्वत्र नियमेन गर्भो जायते । न चैतत्केवलयोस्तयोः शरीरोत्पत्तिहेतुत्वे कथञ्चिदुपपद्यते । **अतो** भवति प्रतिपत्तिर्नूनमदृष्टसहकृतयोरेव तयोस्तदुत्पत्तौ निमित्तत्वं न केवलयोरिति भावः ॥ ६५ ॥

उपसंहरति—

**"शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म"॥६६॥**

शरीरोत्पत्तिनिमित्तवत्=यथा शरीरोत्पत्तौ निमित्तमदृष्टं तथा संयोगोत्पत्तिनिमित्तं=संयोगो मनः, कारणे कार्यप्रयोगात्, संयुज्यते प्रत्यात्ममिति वा व्युत्पत्तेः, उपक्रान्तस्यैवोपसंहारौचित्यात्, तदुत्पत्तौ निमित्तं कर्म=अदृष्टं वेदितव्यमित्यर्थः ।

**तथा** चादृष्टसहकृतेभ्यो भूतेभ्यो यथा शरीरमुत्पद्यते **तथा** तत्सहकृतेभ्यो भूतसूक्ष्मेभ्यो मनोऽप्युत्पद्यते । नास्ति किञ्चिद्वैलक्षण्यम् । **अतो** युक्तमुदाहरणमिति भावः ॥ ६६ ॥

अतिदिशति—

**"एतेनानियमः प्रत्युक्तः" ॥ ६७ ॥**

एतेन=अदृष्टस्य निमित्तत्वकथनेनानियमः=गर्भाशये प्राप्ताभ्यामपि लोहितरेतोभ्यां शरीरोत्पादानियमः प्रत्युक्तः=प्रत्याख्यातो वेदितव्य इत्यर्थः । यत्रादृष्टं तत्र लोहितरेतोभ्यां शरीरोत्पादो नान्यत्रेति व्यवस्थानात् क्वचिच्छरीरानुत्पादेऽपि नास्ति कश्चिद्दोषः । अदृष्टाभावस्य तत्र वक्तुं शक्यत्वादिति भावः ॥ ६७ ॥

अदृष्टनिमित्ता खलु शरीरादिकार्यजातस्योत्पत्तिरिति व्यवस्थापितम् । अदृष्टं चोत्पादविनाशि मनोविशिष्टस्य प्रत्यगात्मनो गुणः । तेनैव मनोवाक्कायैः सम्पादितत्वादिति राद्धान्तः । भूतानां मनसश्च तत् स्वाभाविको धर्मः, तन्निमित्तश्च शरीरारम्भः शरीरे च मनःसंयोग इति **केचित्** । तानाशङ्क्य निराचष्टे—

**"तदृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे" ॥६८॥**

अप्यर्थः पुनःशब्दो भिन्नक्रमः । तददृष्टकारितं=तदा भूतानि परामृशति, तेषां भूतानां यददृष्टं, तेन कारितं सम्पादितं शरीरमिति चेत्=यदि मन्यसे ? तदाऽपवर्गे पुनः=मोक्षेऽपि तत्प्रसङ्गः=तस्य शरीरस्य प्रसङ्गः प्रसक्तिः स्यादित्यर्थः ।

ये तावद् भूतानां मनसश्चादृष्टं स्वाभाविकं धर्मं मन्यन्ते तेषामेष सिद्धान्तः—चेतनाः खलु जीवात्मानः स्वकर्मवशेन बध्यन्ते तपश्चरणादिभिश्च क्षीणे तस्मिन् मुच्यन्ते । तेषामुपभोगार्थं स्वाभाविकात् स्वादृष्टात् प्रेरितानि भूतानि शरीरमारभन्ते । मनश्च स्वाभाविकात् स्वादृष्टादारब्धे तस्मिन् समाविशति । शरीरारम्भे भूतानां समावेशे च मनसः स्वाभाविकं स्वादृष्टं परित्यज्य न जीवात्मकर्मापेक्षा । शरीरारम्भपरम्परा चैषा तावन्न परिसमाप्यते यावदयं न विमुच्यत इति । वर्तमानकाले तु **"जैनाः"** एवं मन्यन्ते । ते च भूतगतं मनोगतं चादृष्टं स्वशास्त्रे "पर्य्याय" इति संज्ञया सङ्गिरन्ते । भवतु । नायं साधीयान् । बन्धवेलायामिव मोक्षवेलायामपि शरीरारम्भप्रसङ्गात् । नहि येन स्वाभाविकेन स्वादृष्टेन प्रेरितानि भूतानि बन्धवेलायां शरीरमारभन्ते तद् मोक्षवेलायां कथञ्चिदपैति । स्वभावस्यानपायत्वात् । न चानपायं तत् कदाचिच्छरीरारम्भाय कल्पते कदाचिन्नेति सम्भवति । न च मोक्षवेलायां शरीरारम्भोऽभीष्टः । **तस्माद्** भूतादृष्टकारितः शरीरारम्भो नाभ्युपगमाय युज्यत इति भावः ॥ ६८ ॥

दूषणान्तरमाह—

**"मनः कर्मनिमित्तत्वाच्च संयोगाविच्छेदः"** ॥ ६९ ॥

दूषणान्तरपरश्चकारः । मनःकर्मनिमित्तत्वाच्च=मनोनिष्ठमदृष्टं मनःकर्म, तन्निमित्तकत्वाच्च संयोगाविच्छेदः=संयोगस्य मनःशरीरसंयोगस्य विच्छेदो विनाशो न स्यादित्यर्थः ।

यत्खलु नैमित्तिकं तन्निमित्तविच्छेदे विच्छिद्यते नान्यथेति नियमः । मनःकर्मनिमित्तं च ते मनःशरीरसंयोगः । मनःकर्म च मनसो नित्यत्वान्नित्यम् । न च नित्यं च विच्छिद्यते चेति सम्भवति । व्याघातात् । **तथा**

च निमित्तस्याविच्छेदे प्राप्तस्तावन्मनःशरीरसंयोगस्याप्यविच्छेदः। सचानिष्टः इति भावः॥ ६९॥

ननु मा विच्छिद्यतां संयोगः का क्षतिः? तत्राह—

"नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः" ॥ ७०॥

भिन्नक्रमश्चः। प्रायणानुपपत्तेश्च=प्रायणं मरणं विच्छेदः, तस्यानुपपत्तेरसिद्धेरभावाच्च नित्यत्वप्रसङ्गः=संयोगस्य नित्यत्वं प्रसज्येतेत्यर्थः। यन्न विच्छिद्यते तन्नित्यम्। न विच्छिद्यते च संयोगः। निमित्तस्याविच्छेदात्। तस्मादेषोऽपि नित्यः। तथा च मोक्षानुपपत्तिरिति भावः॥ ७०॥

अत्र शङ्कते—

"अणुश्यामतानित्यत्ववदेतत्स्यात्" ॥ ७१॥

अणुश्यामतानित्यत्ववत्=यथा परमाणुश्यामतागुणस्य नित्यत्वं तथैतत्=संयोगस्य नित्यत्वं स्यात्=भवेदित्यर्थः।

यथा हि परमाणुश्यामतागुणस्य नित्यत्वेऽपि भवति विनाशः तथा संयोगस्य नित्यत्वेऽपि विनाशो भविष्यति नास्ति काचिदनुपपत्तिरिति भावः॥

इदमत्र बोध्यम्—यद्यपि परमाणुगुणा अपि न नित्याः प्रभवशीलत्वात् तथापि लोहितादिवत् प्रयत्नपूर्वकं न प्रभवन्तीत्येतावन्मात्रेण न्यायवैशेषिकयोरनादयो नित्याश्च ते व्यपदिश्यन्त इति॥ ७१॥

समाधत्ते—

"नाकृताभ्यागमप्रसङ्गात्" ॥ ७२॥

न=यदुक्तं तन्न, कुतः? अकृताभ्यागमप्रसङ्गात्=न केनचित्कृतस्य संयोगविनाशस्याभ्यागमः स्वीकारस्तत्प्रसङ्गादित्यर्थः।

परमाणुश्यामतागुणस्य विनाशो हि नैमित्तिकः। न च स कथञ्चिदपह्नोतुं शक्यते। निमित्तञ्च तत्र पाकः प्रसिद्धः। नचैवं संयोगस्य विनाशे किञ्चि-

न्निमित्तं प्रसिध्यति । न च निर्निमित्तकस्य स्वीकारो युज्यते । अतिप्रसक्तेः । तस्माद् भूतादृष्टनिमित्तो यथा शरीरारम्भो न साधीयान् तथा मनोऽदृष्टनिमित्तो मनःशरीरसंयोगोऽपि न साधीयानिति दूरतः परित्यक्तव्यं वैदिकैरेतदुभयमिति भावः ॥ ७२ ॥

**बुद्धिरात्मगुणोऽनित्या मनो मध्यममानकम् ।**
**विस्तरेण द्वितीयेऽस्मिन् द्वयमेतत्परीक्षितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ तृतीयाध्यायस्य द्वितीयमाह्निकम् ।

**समासश्चायमात्मादिप्रमेयषट्कपरीक्षाध्यायस्तृतीयः**

---





# चतुर्थोऽध्यायः

## आद्यमाह्निकम्

अथ क्रमप्राप्तां प्रवृत्तिं परीक्षयिष्यन्नाह—

"प्रवृत्तिर्यथोक्ता" ॥ १ ॥

यथोक्ता=यथा पुरस्तादुक्ता लक्षिता प्रवृत्तिस्तथैव परीक्षिता वेदितव्येत्यर्थः ।

लक्षणेनैव पर्याप्ता खलु प्रवृत्तेः परीक्षा न पुनरधुना सा परीक्षितुमर्हति । **किमुक्तं?** संशयपूर्विका हि परीक्षा प्रवर्तते । न च **"प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः"** (न्या० १ । १ । १७) इति लक्षणे वागादीनां विस्तरेण परीक्षितत्वात् आरम्भस्य च प्रसिद्धत्वात् कश्चिदंशः संशय्यते । न च संशयं विना परीक्षाप्रवृत्तिर्युज्यते । **तस्मात्** प्रवृत्तिर्यथा पुरस्तादुक्ता **तथैव** परीक्षिता विज्ञातव्येति भावः ॥ १ ॥

अतिदिशति—

"तथा दोषाः" ॥ २ ॥

यथोक्ताः इति विपरिणम्यानुवर्तते । तथा=यथा प्रवृत्तिस्तथा दोषाः= दोषा अपि यथोक्ता एव परीक्षिता वेदितव्या इत्यर्थः ।

प्रवृत्तिवत् तत्परीक्षाया अपि लक्षणेनैव पर्य्याप्तत्वादिति भावः ॥ २ ॥

**ननु** कतिविधा दोषाः ? **तत्राह—**

**"तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्"** ॥ ३ ॥

तत्त्रैराश्यं=तदा दोषाः परामृश्यन्ते, तेषां दोषाणां त्रैराश्यं त्रिराशिकत्वं त्रिविधत्वं वेदितव्यं, **कुतः?** रागद्वेषमोहार्थान्तरभावात्=सुखत-

त्साधनविषयोऽभिलाषविशेषो रागः, दुःखतत्साधनविषयः क्रोधविशेषो द्वेषः, अविवेकोऽविद्या मिथ्याज्ञानं मोहः, रागश्च द्वेषश्च मोहश्च ते तथा, तेषां रागद्वेषमोहानामर्थान्तरभावो भिन्नार्थत्वं भिन्नत्वमिति यावत्, तस्मात् रागद्वेषमोहभेदेन भिन्नत्वादित्यर्थः ।

**यद्यपि** वहवो दोषाः **तथापि** ते सर्वे त्रैविध्यं नातिवर्तन्ते । काम–मत्सर–स्पृहा–तृष्णा–लोभ–माया–दम्भानां रागे, क्रोधेर्ष्यासूयाद्रोहामर्षाभिमानानां द्वेषे, विपर्य्यय–संशय–मान–प्रमादानां मोहे चान्तर्भावात् । न चैभ्योऽन्योऽस्ति कश्चिद्दोषः । अतो रागद्वेषमोहभेदात् त्रिविधाः दोषा इति भावः ॥

**तत्र** रागद्वेषौ स्वरूपतो दोषौ, मोहः कारणतः । रिरंसा **कामः**, स्वप्रयोजनानुसन्धानं विना पराभिमतनिराचिकीर्षा **मत्सरः**, अस्वपरस्वादित्सा **स्पृहा**, अप्राप्ताभिलाषः **तृष्णा**, प्रमाणविरुद्धपरद्रव्यापजिहीर्षा **लोभः**, विप्रलिप्सा **माया**, छद्मना स्वोत्कर्षविख्यापयिषा **दम्भः**, शरीरेन्द्रियाधिष्ठानविकृतिहेतुद्वेषविशेषः **क्रोधः**, साधारणवस्तुनि पराभिनिवेशप्रतिषेधहेतुद्वेष **ईर्ष्या**, परगुणाक्षमताऽ**सूया**, पापकरणेच्छा **द्रोहः**, अपकाराक्षमताऽ**मर्षः**, अपकारिण्यकिञ्चित्करः स्वात्मनि द्वेषोऽ**भिमानः**, भ्रान्तिज्ञानं **विपर्य्ययः**, एकस्मिन् धर्मिणि विरुद्धनानाधर्मावगाहिज्ञानं **संशयः**, विद्यमानाविद्यमानगुणाध्यारोपेणात्मन्युत्कर्षप्रत्ययो **मानः**, कर्तव्याकरणं **प्रमाद** इति विवेकः ॥ ३ ॥

**शङ्कते**—

**"नैकप्रत्यनीकभावात्"** ॥ ४ ॥

तत्त्रैराश्यमित्यनुवर्तते । न=तत्त्रैराश्यं न, **कुतः ?** एकप्रत्यनीकभावात्=एक आत्मतत्त्वबोधः प्रत्यनीको विरोधी निवर्तको येषां ते तथा, तेषां भावस्तस्मात् एकनिवर्तकनिवर्त्यत्वादित्यर्थः ।

**ये** खलु परस्परं भिन्नाः पदार्थाः, नच **ते** कदाचिदेकेन निवर्तकेन निवर्त्यन्ते । **चेद्** निवर्त्त्येरन् **तदा** घटपटादयोऽपि निवर्त्त्येरन् । न च

ते क्वचिदेकनिवर्तकनिवर्त्याः उपलभ्यन्ते । रागादयो दोषास्त्वेकनिवर्तकनिवर्त्याः सर्वसम्प्रतिपन्नाः । उत्पन्ने तावदात्मतत्त्वज्ञाने न मोहोऽवतिष्ठते न रागद्वेषौ । तस्मात् प्रतिपद्यते ननूमेषां न त्रैराश्यमिति भावः ॥ ४ ॥

समाधत्ते—

"व्यभिचारादहेतुः" ॥ ५ ॥

अहेतुः="एकप्रत्यनीकभावात्" इत्ययमहेतुः, कुतः? व्यभिचारात्=अनैकान्तिकत्वादित्यर्थः ।

ये खल्वेकेन निवर्तकेन निवर्त्यन्ते ते परस्परं न भिद्यन्त इति नायं नियमः । रूपादीनामेकनिवर्तकनिवर्त्यत्वेऽपि भिन्नत्वात् । रूपादयो ह्येकेन निवर्तकेन पाकेन निवर्त्यन्ते भिद्यन्ते च । तस्मादेकप्रत्यनीकभावादित्ययमसद्धेतुरिति भावः ॥ ५ ॥

नन्वेषां दोषाणामतिशयी को विद्यते यन्निवृत्त्या सर्वे निवर्त्येरन् ? तत्राह—

"तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः" ॥ ६ ॥

तेषां=रागादिदोषाणां मध्ये मोहः=मोहलक्षणो दोषः पापीयान्=अतिशयेन पापः बलवद्द्वेष्य इति यावद् वेदितव्यः, कुतः? नामूढस्य=न मूढोऽमूढः, नामूढो नामूढो मूढः, तस्य मुह्यत इति यावदितरोत्पत्तेः=इतरौ रागद्वेषौ, तदुत्पत्तेरित्यर्थः ।

यत्र मोहस्तत्र रागद्वेषौ भवतो यत्र न तत्र न । तेनावगम्यते निमित्तं मोहः, नैमित्तिकौ च रागद्वेषौ । तद्भावे भावात् तदभावे चाभावात् । तौ च द्वौ संसारहेतुशुभाशुभप्रवृत्तिनिमित्तत्वात् पापौ । तन्निमित्तत्वाच्च निखिलानर्थकारणं मोहः पापीयान् । नैमित्तिकापेक्षया निमित्ते तस्मिन्नतिशयस्यौचित्यात् । अतः स एव पुरस्तादात्मतत्त्वज्ञानेन निवर्तनीयः । तन्निवृत्त्या शिष्टानां तेषां स्वयमेव निवृत्त्युपपत्तेरिति भावः ॥ ६ ॥

शङ्कते—

"निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः" ॥७॥

मोहस्येति विपरिणम्यानुवर्तते । दोषेभ्यः=रागादिभ्यो दोषेभ्योऽर्थान्तरभावः=मोहस्य भिन्नार्थत्वं भिन्नत्वमिति यावत् स्यात्, **कुतः?** निमित्तनैमित्तिकभावात्=निमित्तं मोहः, नैमित्तिकौ रागद्वेषौ, तेषां भावो निमित्तनैमित्तिकभावः, तस्मात् निमित्तनैमित्तिकभावाश्रयत्वादित्यर्थः ।

**यत्र** खलु निमित्तनैमित्तिकभावः **तत्रा**न्यन्निमित्तं नैमित्तिकं चान्यदिति दृष्टं, **यथा** चाक्षूपज्ञाने निमित्तमालोकोऽन्यः, नैमित्तिकं च चाक्षुषं ज्ञानमन्यदिति । दोषाणां च निमित्तं मोहः । तस्मादेषोऽपि दोषेभ्योऽन्यः स्यादिति भावः ॥ ७ ॥

**समाधत्ते**—

**"न दोषलक्षणावरोधान्मोहस्य"** ॥ ८ ॥

अर्थान्तरभावो दोषेभ्य इत्यनुवर्तते । मोहस्य=मिथ्याज्ञानादिनामभाजो मोहस्य न=दोषेभ्योऽर्थान्तरभावो न सम्भवति, **कुतः?** दोषलक्षणावरोधात्=दोषलक्षणेनावरुद्धत्वादित्यर्थः ।

**"प्रवर्तनालक्षणा दोषाः"** (न्या० १।१।१८) इति हि दोषलक्षणम् । तेन च यथा रागद्वेषाववरुध्येते तथा मोहोऽप्यवरुध्यते । चेदस्य दोषेभ्योऽर्थान्तरभावो भवेत् **तदा** नायं दोषलक्षणेनावरुध्येत । नह्यन्यस्य लक्षणेनान्योऽवरुध्यते । मोहश्चावरुध्यते । **तस्माद्** भवति प्रतिपत्तिर्नास्त्यस्य दोषेभ्योऽर्थान्तरभाव इति भावः ॥ ८ ॥

**ननु** मोहस्य दोषेभ्योऽर्थान्तरभावाभावे तेषां निमित्तनैमित्तिकभावो नोपपद्यते, समानजातीयानां तदनुपपत्तेः? **तत्राह**—

**"निमित्तनैमित्तिकभावोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः"** ॥ ९ ॥

मोहस्येत्यनुवर्तते । अप्यर्थश्चो भिन्नक्रमः । अप्रतिषेधः=मोहस्य दोषत्वप्रतिषेधः दोषेभ्योऽर्थान्तरभाव इति यावन्नोपपद्यते, **कुतः?** तुल्यजातीयानां च=समानजातीयानामपि तेषां निमित्तनैमित्तिकभावोपपत्तेः=निमित्तनैमितिकभावस्योपपन्नत्वादित्यर्थः ।

**ये** खलु समानजातीयाः **तेषां** निमित्तनैमित्तिकभावो न भवतीति नायं नियमः। द्रव्याणां गुणानां च समानजातीयत्वेऽपि निमित्तनैमित्तिकभावदर्शनात्। नहि घटपटादयो दण्डादयश्च द्रव्यत्वजातीयकाः चाक्षुषज्ञानादयो मनःसंयोगादयश्च गुणत्वजातीयकाः न भवन्ति। विद्यते च तेषां परस्परं निमित्तनैमित्तिकभावः। **किं बहुना**—यथा द्रव्यत्वाविशेषेऽपि घटादीनां दण्डादीनां च गुणत्वाविशेषेऽपि ज्ञानादीनां मनःसंयोगादीनां चावान्तरवैजात्यादस्ति निमित्तनैमित्तिकभावः, **तथा** दोषत्वाविशेषेऽपि रागादीनामवान्तरवैजात्याद् निमित्तनैमित्तिकभाव उपपद्यते नास्ति कश्चिद्दोषः। **अतो** न मोहस्य दोषेभ्योऽर्थान्तरभाव इति भावः॥ ९॥

**दोषाः** परीक्षिताः सम्प्रति **प्रेत्यभावः** परीक्षणीयः, **तत्राह**—

**"आत्मनित्यत्वे प्रेत्यभावसिद्धिः"** ॥ १०॥

आत्मनित्यत्वे=आत्मा प्रत्यगात्मा, तस्य नित्यत्वं नित्यभावः, तस्मिन् सिद्धे प्रेत्यभावसिद्धिः=प्रेत्यभावस्य सिद्धिर्भवतीत्यर्थः।

पुनरुत्पत्तिर्हि **"प्रेत्यभावः"** इत्युच्यते। पुनरुत्पत्तिश्च मृत्वा पुनरुत्पादः। स च पूर्वशरीरं हित्वा शरीरान्तरोपग्रहः। न चायं प्रत्यगात्मनोऽनित्यत्वे कथञ्चिदुपपद्यते। तस्य पूर्वशरीरहानेनैव हानाच्छरीरान्तरोपग्रहानुपपत्तेः। न च प्रत्यगात्मनो नित्यत्वमसिद्धमस्ति। तस्य **"पूर्वाभ्यस्त"** (न्या० ३।१।१८) इत्यादिभिर्विस्तरेण साधितत्वात्। नित्यं सिध्यतश्च तस्य सिद्ध एव प्रेत्यभावो न पुनर्विशेषतः परीक्षितुमर्हतीति भावः॥ १०॥

प्रेत्यभावेन भावजातस्योत्पत्तिस्तावदुपस्थिता **"पुनरुत्पत्तिः प्रेत्यभावः"** (न्या० १।१।१८) इति तल्लक्षणात्। न चोपस्थिताया उपेक्षा युज्यते। **तस्मात्** साऽपि परीक्षणीया। **तत्र** पूर्वन्तावत् सिद्धान्तमाह—

**"व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात्"** ॥ ११॥

उत्पत्तिरित्युपस्थितम्। व्यक्तात्=एकवचनेन मूलकारणस्य भावस्यै-

कत्वं सूचयति, व्यज्यते गुणकर्मस्वभावैरिति व्यक्तो भावः, तस्मात् भावात् सतो व्यक्तानां=भावानां सतामुत्पत्तिरभ्युपगम्यते, कुतः ? प्रत्यक्षप्रामाण्यात्=प्रत्यक्षमित्युपलक्षणं, प्रत्यक्षादिसर्वप्रमाणसिद्धत्वादित्यर्थः ।

यत् खलु प्रत्यक्षप्रमाणेन सिध्यति तदकामेनाप्यभ्युपगन्तव्यम् । अन्यथा व्यवहारमात्रलोपप्रसङ्गात् । प्रत्यक्षप्रमाणेन सिध्यति च भावाद् भावानामुत्पत्तिः । नहि बीजादेरङ्कुरादीनां मृदादेश्च कुम्भादीनामुत्पत्तिर्न प्रत्यक्षायते । प्रत्यक्षप्रमाणपूर्विका चानुमानप्रमाणप्रवृत्तिः । तेनाप्यमीषां सर्वभावानां कुतश्चिददृष्टात् सतो भावादुत्पत्तिरनुमीयते "यद्यत् कार्य्यं तत्सर्वं भावकारणकं यथाऽङ्कुरादि, कार्य्यं चेदं जगत्, तस्मादनेनापि भावकारणकेन भवितव्यम्" इति । यश्चासौ भावः, स एव जगतो मूलकारणं प्रकृतिः, यस्य लक्षणार्थं **"सदकारणवन्नित्यम्"** (वै० ४।१।१ ) इति सूत्रं प्रववृते । सतश्च सदुत्पत्तिरिति वैदिको राद्धान्तः । अत एवामनन्ति छान्दोगाः **"सदेव सोम्येदमग्र आसीत्"** ( छां० ६। २।१ ) इति । तदेवं प्रत्यक्षादिसर्वप्रमाणसिद्धत्वादभ्युपगम्यते व्यक्ताद् व्यक्तानामुत्पत्तिरिति भावः ॥

तत्र गुणकर्मणी प्रसिद्धे, स्वभावोऽसाधारणो धर्म इति विवेकः॥११॥

शङ्कते—

**"न घटाद् घटानिष्पत्तेः"** ॥ १२ ॥

व्यक्ताद् व्यक्तानामित्यनुवर्तते । उत्पत्तिरित्युपस्थितम् । न=व्यक्ताद् व्यक्तानामुत्पत्तिर्न घटते, कुतः ? घटात्=व्यक्ताद् घटाद् घटानिष्पत्तेः=व्यक्तस्य घटान्तरस्यानुत्पत्तेरित्यर्थः ।

चेद् व्यक्ताद् व्यक्तानामुत्पत्तिर्भवेत् तदा घटोऽपि घटादुत्पद्येत । व्यक्तत्वाविशेषात् । न च घटो घटादुत्पद्यते । तस्माद् भवति प्रतिपत्तिर्न व्यक्ताद् व्यक्तानामुत्पत्तिरिति भावः ॥ १२ ॥

समाधत्ते—

**"व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः"** ॥ १३ ॥

अप्रतिषेधः=व्यक्ताद् व्यक्तोत्पत्तेः प्रतिषेधो नोपपद्यते, **कुतः**? व्यक्तात्=भावात् कपालद्वयाद् घटनिष्पत्तेः=व्यक्तस्य भावस्य घटस्योत्पत्तेरित्यर्थः।

**न** खलु वयं व्यक्ताद्भावाद् व्यक्तस्य भावस्योत्पत्तिं ब्रूमः, **अपि च**? व्यक्ताद् भावात् कारणाद् व्यक्तस्य भावस्य कार्य्यस्योत्पत्तिम्। न च व्यक्तोऽपि घटो घटस्य कारणं विद्यते, येन घटो घटादुत्पद्येत। नह्यकारणात् किञ्चिदुत्पद्यते। यच्चास्य व्यक्तस्य कार्य्यस्य घटस्य कारणं कपालद्वयं तदस्ति व्यक्तं न जात्वव्यक्तम्। अतोऽनुपपन्नो व्यक्ताद् भावाद् व्यक्तानां भावानामुत्पत्तेः प्रतिषेध इति भावः॥ १३॥

**अत्र** शून्यवादी नास्तिकस्तावत् प्रत्यवतिष्ठते—

**"अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्"** ॥१४॥

अभावात्=असतः शून्याद् भावोत्पत्तिः=सदुत्पद्यते, **कुतः**? नानुपमृद्य=कारणमुपमृद्य विनाश्य प्रादुर्भावात्=कार्य्यस्य प्रादुर्भावात् उत्पत्तेरित्यर्थः।

**चेत्** सतः सदुत्पद्येत **तदा** न कारणमुपमृद्य कार्य्यं प्रादुर्भवेत्। उपमृद्य च कारणं कार्य्यं प्रादुर्भवदुपलभ्यते **यथा** बीजादङ्कुरः। कारणोपमर्दश्चाभावो न जातु भावः। **तस्मात्** प्रतिपद्यते नूनमसतः सदुत्पद्यते न सतः सदिति भावः॥ १४॥

**गूढाभिसन्धिः** समाधत्ते—

**"व्याघातादप्रयोगः"** ॥ १५॥

अप्रयोगः="नानुपमृद्य प्रादुर्भावात्" इत्ययमयुक्तः प्रयोगः, **कुतः**? व्याघातात्=विरुद्धार्थकत्वादित्यर्थः।

**यत्** तावदुपमृद्नाति न **तत्** प्रादुर्भवितुमर्हति। विद्यमानत्वात्। अन्यथा तस्योपमर्दकत्वानुपपत्तेः। यच्च प्रादुर्भवति न तेनोपमर्दितुं शक्यते। अविद्यमानत्वात्। अन्यथा तस्य प्रादुर्भावानुपपत्तेः। **किमुक्तम्**? उपमर्दकं खलु कार्यं तच्चेदुपमर्द्यात् कारणात् पूर्वं विद्यते तदा

तस्य प्रादुर्भावो विरुध्यते। प्रादुर्भूतस्य प्रादुर्भावायोगात् । नो चेद्विद्यते तदा तस्य कारणोपमर्दकभावो विरुध्यते। अप्रादुर्भूतस्य तद्भावायोगात्। सोऽयं परस्परविरुद्धोऽर्थः, यत्रेदं प्रयुज्यते "नानुपमृद्य प्रादुर्भावात्" इति। **तस्माद्**षोऽयुक्तः प्रयोग इति भावः॥ १५॥

पुनः शङ्कते—

**"नातीतानागतयोः कारकशब्दप्रयोगात्"॥ १६॥**

अप्रयोग इत्यनुवर्तते। न="नानुपमृद्य प्रादुर्भावात्" इत्ययमप्रयोगो-न, **कुतः?** अतीतानागतयोः=कारणकार्य्यलक्षणयोरतीतानागतयोरर्थयोः कारकशब्दप्रयोगात्=कर्मकारकशब्दस्य कर्तृकारकशब्दस्य च भक्त्या प्रयुज्यमानत्वादित्यर्थः।

**यथा** हि "ऋणत्रयमपाकृत्य परिव्राजको भवति" इत्यादौ शान्तेऽनागते चार्थे कर्मकारकशब्दः कर्तृकारकशब्दश्च प्रयुज्यते **तथा** "नानुपमृद्य प्रादुर्भावात्" इत्यत्रापि शान्तेऽनागते चार्थे कर्मकारकशब्दः कर्तृकारकशब्दश्च प्रयुज्यते। मुख्यया वृत्त्येव क्वचिद् भक्त्याऽपि प्रयोगाभ्युपगमात्। आनन्तर्य्यं हि भक्तिः। तच्च **यथा** ऋणत्रयापाकरणपरिव्राजकभवनयोर्विद्यते **तथा** कारणोपमर्दकार्य्यप्रादुर्भावयोरपि विद्यते। तस्य विद्यमानत्वाच्च युक्तो भाक्तः प्रयोगः। न चैष निमित्ताद् भवन् कथञ्चिद् दुष्यति। नहि मुख्यप्रयोगेनैव सर्वत्र भवितव्यं न भाक्तप्रयोगेणेति नियमे हेतुरस्ति। **तस्माद्** "नानुपमृद्य प्रादुर्भावाद्" इति नायमयुक्तः प्रयोगः इति भावः॥ १६॥

अभिसन्धिमुद्घाटयन् समाधत्ते—

**"न विनष्टेभ्योऽनिष्पत्तेः"॥ १७॥**

न=यदुक्तं तन्न, **कुतः?** विनष्टेभ्यः=विनाशं गतेभ्यः कारणेभ्योऽनिष्पत्तेः=कार्य्यानुत्पत्तेरित्यर्थः।

**विद्यमानानि** खलु कारणानि कार्य्यमुत्पादयितुं शक्नुवन्ति न विनष्टानि। **चेद्** विनष्टान्यपि तानि कार्य्यमुपजनयितुं शक्नुयुः **तदा** विनष्टाः

पित्रादयोऽपि पुत्रमुपजनयितुमर्हेयुः। न च विनष्टास्ते किञ्चिदुपजनयन्तो दृश्यन्ते। न च कृषीवलाः अपि विनष्टानि बीजानि क्षेत्रे वप्तुमुपाददते। तत् कथमवगच्छेमहि विनष्टानि कारणानि कार्य्यमुत्पादयन्तीति। कारणविनाशश्च सर्वत्राविशिष्टः तत् कस्य हेतोः शालिबीजादेव शाल्यङ्कुरो जायते न यवबीजात्। नहि शालिबीजविनाशो यवबीजविनाशाद् विशिष्यते। न चेदृक् कार्य्यभेदः कारणे विशिष्टशक्त्यभ्युपगममन्तरा कथञ्चिद् युज्यते। विशिष्टा शक्तिश्च भावस्य कारणस्य धर्मो भवितुमर्हति नाभावस्य। सोपाख्यत्वप्रसङ्गात्। निरुपाख्यश्चायमभ्युपगम्यते। **किमुक्तं?** माभूद् भाक्तत्वादयुक्तः प्रयोगः **तथापि** न विनष्टेभ्यः कारणेभ्यः कार्य्यमुत्पत्तुमर्हति। तदन्वयस्य तत्रावश्यकत्वात्। न च कारणे विनष्टे कार्य्ये तदन्वय उपपद्यते। नहि विनष्टास्तन्तवः पटमन्वेतुं पारयन्ति। नच कार्य्ये कारणान्वयो निह्नोतुं शक्यते। प्रामाणिकत्वात्। न हि प्रमाणनिर्वृतं क्वचित् प्रमाणविदो निह्नुवते। **तस्माद्** नाभावाद्भावोत्पत्तिर्युक्ता किन्तु भावादिति भावः॥ १७॥

**ननु** बीजोपमर्दस्त्वयाऽपि यत्र तत्र निर्दिश्यते तत्कथं भावादपि भावोत्पत्तिर्युज्येत? **तत्राह**—

**"क्रमनिर्देशादप्रतिषेधः" ॥ १८ ॥**

अप्रतिषेधः=भावाद्भावोत्पत्तेः प्रतिषेधो न सम्भवति, **कुतः?** क्रमनिर्देशात्=बीजस्य पूर्वापरावस्थयोः पूर्वापरीभावः क्रमः, तस्योपमर्दपदेन निर्देशादित्यर्थः।

**न** खलु वयं बीजोपमर्दं बीजविनाशं निर्दिशामः **अपि च?** बीजस्य पूर्वापरावस्थयोः पूर्वापरीभावम्। यं किल क्रमविदः क्रममाचक्षते। द्वे दले हि प्रत्येकस्मिन् बीजे भवतः। तयोर्यः सर्वतः संयोगः सा बीजस्य पूर्वावस्था, यश्च भूमिसलिलसंयोगाद् मध्यभागतो विभागः सा तस्यापरावस्था। तयोश्च यः पूर्वापरीभावः स एव तदुपमर्दः। न च तन्निर्देशेन भावाद् भावोत्पत्तिर्दुष्यति। नहि भूमिसलिलसंयोगात् पूर्वव्यूहं हित्वा

व्यूहान्तरमापद्यमानं बीजमबीजं सम्पद्यते। न च भूमिं निर्भिद्य निःसृतमङ्कुरं संयुक्ताभ्यां बीजदलाभ्यामवनद्धं क्षेत्रकाः न पश्यन्ति। न च साक्षात् पश्यद्भिर्बीजाभावादङ्कुरोत्पत्तिरभ्युपगन्तुं पार्य्यते। समानश्चैष चर्चः सर्वेषु जनिमत्सु भावेषु। **तस्माद्** युक्ता भावाद्भावोत्पत्तिर्न जात्वभावात्। **यश्चासौ** सर्वेषां भावानामुत्पत्तिकारणं भावः **स** एवास्माकं भगवती **"प्रकृतिः"** इति भावः॥ १८॥

**ननु** कथमयमचेतनो भावो विचित्रमिदं भोग्यं जगन्निर्मिमीते? **तत्राह—**

**"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्"** ॥ १९॥

ईश्वरः=क्लेशकर्मविपाकाशयैरपरामृष्टो निरतिशयज्ञानक्रियाशक्तिः पुरुषविशेषः कारणं=परमकारणमधिष्ठातृकारणमिति यावदभ्युपगम्यते, **कुतः?** पुरुषकर्माफल्यदर्शनात्=जीवात्मानः पुरुषाः, कुशलाकुशलानि तत्कर्माणि, तेषां नैष्फल्यमफल्यं, तस्य दर्शनमुपलम्भः, तस्मात्—तदभावे पुरुषानुष्ठितकर्मनैष्फल्योपलम्भादित्यर्थः।

**यत्र** हि कश्चिदधिष्ठाता न विद्यते **तत्र** पुरुषैरनुष्ठितानि कर्माणि विफलानि तावदुपलभ्यन्ते। नह्यराजके राज्ये कश्चित् पुण्यः पुण्यफलमुपलभते पापश्च पापफलमुपभुङ्क्ते। न चैवं जगति पुरुषैरनुष्ठितानां कर्मणां नैष्फल्यं क्वचिद् दृश्यते। पुण्यानां पुण्यफलस्य सुखस्य पापानां च पापफलस्य दुःखस्य नियमेनोपभोगदर्शनात्। नह्याजन्मनः केचित्सुखभाजः केचिद् दुःखभाजः सुखदुःखोभयभाजश्च केचिदन्तरेण कर्म सम्भवन्ति। नचेदृशः फलारम्भः प्रकृत्याख्येन जगतो मूलकारणेन भावेन पुरुषाणां कर्मभिर्वा कथञ्चिद् विधातुं शक्यते। जड़त्वात्। न चाकस्मिकोऽयं फलारम्भ इति युक्तं भाषणम्। अतिप्रसङ्गात्। न च चेतनाः पुरुषाः स्वयं स्वं स्वं कर्मफलमारभन्त इत्यभ्युपगमो युज्यते। अल्पशक्तित्वात्। अव्यवस्थाप्रसङ्गाच्च। दृश्यते च व्यवस्था। **तस्मादस्य** सर्वस्योच्चावचस्य भोक्तृभोग्यस्य जगतोऽधिष्ठातृकारणं सर्वज्ञः सर्वशक्तिरीश्वरोऽभ्युपगम्यते। य एष यथापुरुषकर्म शाश्वतीभ्यः समाभ्यः प्रकृत्याख्यमनादिभावमधिष्ठाय

दृश्यमानमेतदखिलं जगन्निर्मिमीते। भोक्तारश्च पुरुषाः निर्मिते तस्मिन् लब्धजन्मानः स्वं स्वं कर्मफलं यथासमयमुपभुञ्जते। सोऽयमीश्वरो यथा वर्तमानमिदं विविधमुच्चावचं जगदधितिष्ठति तथा भूतं भविष्यदपि तदधितिष्ठति। स हि चराचरस्यास्य विश्वस्य जगतो जीवनहेतुत्वात् प्राणः प्रशासकत्वाच्च राजा। न तत्प्रशासनं कश्चिद्भावः स्वप्नेऽप्युल्लङ्घयितुमुत्सहते। वज्रमिवोद्यतं हि महद्भयं सर्वदा तत्प्रशासनम्। तद्यथाम्नातं भगवति वेदे—

अथर्व० ११।२।४।१।

**प्राणाय नमो यस्य सर्वमिदं वशे।**
**यो भूतः सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम्॥**

अथर्व० १०।८।४।१।

**यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति।**
**स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः॥**

ऋ० ८।७।१२१।३।

**यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।**
**य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥**

ऋ० १।७।१०१।५।

**यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत॥**

ऋ० १।७।१००।१२।

**स वज्रभृद् दस्युहा भीम उग्रः सहस्रचेता शतनीथ ऋभ्वा॥** इति।

तदिदमुपनिषत्स्वपि सविस्तरं व्याख्यातम्। तद्यथा—

बृह० २।५।१५।

**स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा॥**

बृह० ३।८।९।

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः ॥

बृह० ४।४।२२।

एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय ॥

बृह० ५।६।१।

सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥

माण्डू०–६।

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्य्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥

कठो० ६।२।३।

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति ॥
भयादस्याग्निस्तपति भयात् तपति सूर्य्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥

श्वेता० १।३।

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥

श्वेता० ६।११।

एको देवः सर्वभूतेषु गूढः, सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः, साक्षी चेताः केवलो निर्गुणश्च ॥ इति ।

दर्शनान्तरेऽप्युक्तम् । तद्यथा—"स हि सर्ववित् सर्वकर्ता"

(सां० ३। ५६) "स्वोपकारादधिष्ठानं लोकवत्" (सां० ५। ६) "फलमत उपपत्तेः" (वे० ३। २। ३८) इति। न चैवंविधे भवति फलप्रदातरि भगवति जगदधिपतौ किञ्चिदनुपपन्नं नाम यत् प्रकृतिसमाख्यो भावः पुरुषाणामुपभोगाय न जातु निर्मिमीतेति भावः ॥ १९ ॥

शङ्कते—

**"न पुरुषकर्माभावे फलानिष्पत्तेः" ॥ २० ॥**

ईश्वरः कारणमित्यनुवर्तते। न=ईश्वरः कारणं न, **कुतः**? पुरुषकर्माभावे=पुरुषकर्मासत्त्वे फलानिष्पत्तेः=फलस्य सुखदुःखतद्धेतोर्भोग्यस्य जगतोऽनुत्पत्तेरित्यर्थः।

अन्वयव्यतिरेकौ हि सर्वत्र कार्य्यकारणभावं नियच्छतः। तौ च पुरुषकर्मणि गृह्येते न जात्वीश्वरे। यदा हि पुरुषकर्म भवति तदेश्वराज्जगदुत्पद्यते, यदा न भवति तदा नोत्पद्यते। नहि पुरुषकर्माभावे कथञ्चिदीश्वरो विचित्रमिदं भोग्यं जगदुत्पादयितुं शक्नोति। वैषम्यनैर्घृण्यदोषप्रसङ्गात्। **अतः** पुरुषकर्मैव जगतःकारणं न खल्वीश्वर इति भावः ॥२०॥

**समाधत्ते—**

**"तत्कारितत्वादहेतुः" ॥ २१ ॥**

अहेतुः=ईश्वरो जगतः कारणं न" इत्यत्र "पुरुषकर्माभावे फलानिष्पत्तेः" इत्ययमहेतुः, **कुतः**? तत्कारितत्वात्=तच्छब्देनेश्वरं परामृशति, कर्मसत्त्वेऽपि तेनैव कारितत्वादुत्पादितत्वादित्यर्थः।

**सत्यमस्ति** जगदुत्पत्तौ निमित्तं पुरुषकर्म **तथापि** न तत् स्वतन्त्रं निमित्तं भवितुमर्हति। जड़त्वात्। नहि जड़ं चेतनाधिष्ठानाभावे स्वतन्त्रं किञ्चिन्निर्मातुं पर्य्याप्नोति। **यदा** च प्रकृतिरेव जगदुत्पत्तौ खल्वपर्य्याप्ता जड़त्वात् **तदा** का कथा वराकस्य पुरुषकर्मणः। जगतां पतिरीश्वरस्तु सर्वदा सर्वथा विचित्रमिदं भोग्यं जगन्निर्मातुं शक्नोति। निरतिशयज्ञानक्रियाशक्तित्वात्। न हि तस्य सर्वज्ञस्य सर्वशक्तेः सतः किञ्चिदनुपपन्नं

नाम यत्र स्वातन्त्र्यात् निर्मिमीते । केवलं वैषम्यनैर्घृण्यदोषौ न स्यातामिति तदुत्पत्तौ पुरुषकर्मापेक्षते । तद्यथोक्तं दर्शनान्तरे **"वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति"** ( वे०२ । १ । ३४ ) इति । **तस्माद्** जगदुत्पत्तौ निमित्तमात्रं भवदपि पुरुषकर्म न तत्कर्तृ सम्पद्यते । कर्ता चेह विवक्षितः । स च जगदधिपतिरीश्वर एव सम्भवति स्वतन्त्रत्वात् नान्यः कश्चिदिति स एवाभ्युपगन्तव्य इति भावः ॥२१॥

**प्रकृतिर्जगतो हेतुरीश्वरो जगतः पतिः ।**
**पुरुषास्तस्य भोक्तार इति दार्शनिकी मतिः ॥ १ ॥**

**सम्प्रति** स्वमतं द्रढयितुं स्वभाववादिनमुत्थापयति—

**"अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्" ॥ २२ ॥**

अनिमित्ततः=ऋते निमित्तात् कारणात् स्वभावत इति यावद् भावोत्पत्तिः=भावमात्रस्योत्पत्तिर्भवतीति मन्तव्यं, **कुतः ?** कण्टकतैक्ष्ण्यादिदर्शनात्=आदिना मयूरचित्रादि परिगृह्यते, **तैक्ष्ण्यं** संस्थानविशेषः, अनिमित्ततः कण्टकतैक्ष्ण्याद्युत्पत्तेर्दृष्टत्वादित्यर्थः ।

**यत्तावदुत्पद्यते तद**निमित्तत उत्पद्यत इति दृष्टं **यथा** कण्टकतैक्ष्ण्यादिकम् । उत्पद्यते चैतद्भावजातम् । **अतो**ऽनेनाप्यनिमित्ततोऽवश्यमुत्पत्तव्यम् । नह्येकमनिमित्तत उत्पद्यते नापरमिति सम्भवति । **तस्माद्**निमित्ततो भावोत्पत्तिर्न जातु प्रकृत्यादिनिमित्तत इति भावः ॥ २२ ॥

**पूर्वं** छलेन समाधत्ते—

**"अनिमित्तनिमित्तत्वान्नानिमित्ततः" ॥ २३ ॥**

भावोत्पत्तिरित्यनुवर्तते । अनिमित्ततः=विना निमित्तं न=भावोत्पत्तिर्न, **कुतः ?** अनिमित्तनिमित्तत्वात्=अनिमित्तस्यैव तत्र निमित्तत्वादित्यर्थः ।

**अनिमित्ततो** भावोत्पत्तिरिति ब्रुवता खल्वनिमित्तस्य तत्र निमित्तत्वमवश्यं वक्तव्यम् । **अन्यथा** पञ्चम्युपादानानुपपत्तेः । नह्यनिमित्तस्य

निमित्तत्वाभावे तत्तद्व्यावृत्तिका पञ्चमी विभक्तिरुपादातुं शक्यते । तथा च कुतोऽनिमित्ततो भावोत्पत्तिरिति भावः ॥ २३ ॥

वास्तवं समाधानमाह—

"निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः" ॥ २४ ॥

अप्रतिषेधः=भावोत्पत्तौ निमित्तप्रतिषेधो नोपपद्यते, कुतः? निमित्तानिमित्तयोः=निमित्तस्यानिमित्तस्य चार्थान्तरभावात्=इदमस्य निमित्तमनिमित्तं चेदमिति प्रतीत्या भिन्नार्थत्वावगमात् प्रतिभावकार्य्यं भेदेन सिद्धत्वादिति यावदित्यर्थः ।

यत् तावन्निश्चितप्रमाणभावया प्रत्यक्षप्रतीत्या सिध्यति न तत् कश्चिदपह्नोतुं शक्नोति । प्रमाणसिद्धस्यापलापासम्भवात् । प्रतिभावकार्य्ये च निमित्तानिमित्ते भेदेन तथाभूतया प्रत्यक्षप्रतीत्या सिध्यतः । तत्कथं निमित्तापह्नवः स्यात् । न च यत्रैतत् प्रत्यक्षेण नोपलभ्यते तत्र तन्नास्ति । प्रत्यक्षेणानुपलब्धस्यानुमानेनोपलब्धुं शक्यत्वात् । नहि क्वचिन्नैमित्तिकं कार्य्यमनैमित्तिकं च क्वचिदिति युज्यते । कार्य्यमात्रस्य नैमित्तिकत्वनियमात् । न च स्वभावेन सिद्धे व्यर्थो निमित्ताभ्युपगम इति चारु भाषणम् । कस्यैष स्वभाव इति प्रश्ने स्वभावाश्रयस्य निमित्तस्यावश्यं वक्तव्यत्वात् । नहि निमित्ताश्रयणाभावे केवलादेकरसात् स्वभावाद् विचित्रकार्य्योत्पत्तिः कथञ्चित् समाधातुं शक्यते । तस्मादनिमित्ततो भावोत्पत्तिरित्ययुक्तोऽभ्युपगमः, युक्तश्च यथापुरुषकर्म निरतिशयज्ञानक्रियाशक्तिना पुरुषविशेषेणेश्वरेण कारिता प्रकृत्याख्यादनादिभावाद् भावमात्रस्योत्पत्तिरित्यभ्युपगमः इति भावः ॥ २४ ॥

प्रसङ्गाज्जगदुत्पत्तिविषयो वैदिकः सिद्धान्तो मध्येऽसद्वादमाशङ्क्य सम्यक् परीक्षितः । स एव चान्ते स्वभाववादमाशङ्क्य दृढीकृतः । सम्प्रति पुनस्तस्यैव द्रढिम्ने वादान्तराणि दूषयितुमुपक्रममाणः सर्वतः पुरस्तात् सर्वानित्यवादं तावदुपन्यस्यति—

"सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात्" ॥ २५ ॥

सर्वं=भावमात्रमनित्यम्=अनित्यत्वधर्मकं वेदितव्यं, **कुतः?** उत्पत्ति-विनाशधर्मकत्वात्=उत्पत्तिश्च विनाशश्च तौ धर्मौ यस्य तस्य भावस्तत्त्वं, तस्मात्—उत्पत्तिविनाशाश्रयत्वादित्यर्थः ।

**यो** यो भावः **स** सर्वः उत्पत्तिविनाशधर्मकः । यश्चोत्पत्तिविनाशधर्मकः सोऽनित्यो **यथा** घटादिरिति दृष्टम् । उत्पत्तिविनाशधर्मकं च सर्वं भावत्वाद् घटादिवत् । **तस्माद्**नित्यमिति भावः ॥

**तत्र** कदाचिद्भावोऽनित्यत्वम् । यदनुत्पन्नं न भवति तदुत्पत्तिधर्मकम् । यच्चाविनष्टं न भवति तद् विनाशधर्मकमिति विवेकः ॥ २५ ॥

**समाधत्ते—**

**"नानित्यतानित्यत्वात्" ॥ २६ ॥**

सर्वमनित्यमित्यनुवर्तते । न=सर्वमनित्यं न, **कुतः?** अनित्यता-नित्यत्वात्=सर्वानुगतायाः अनित्यतायाः नित्यत्वादित्यर्थः ।

**सर्व**मनित्यमिति वदता सर्वानुगताऽनित्यता तावदनित्याऽऽहोस्विन्नित्येति वक्तव्यम् । अनित्येति चेत्? न सर्वमनित्यमुपपद्यते । सर्वानुगतायाः अनित्यताया अनित्यत्वेन तदाश्रयस्य सर्वस्य नित्यतापातात् । नित्येति चेत्? सुतरां सर्वमनित्यं नोपपद्यते । सर्वान्तःपातिन्याः अनित्यतायाः नित्यत्वादित्यर्थः ॥ २६ ॥

**आशङ्कते—**

**"तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत्" ॥ २७ ॥**

अग्नेः=वह्नेर्दाह्यं=दाहार्हं काष्ठादिकं विनाश्य=दग्ध्वाऽनुविनाशवत्=पश्चाद् विनाशाद् यथाऽनित्यत्वं तथा तदनित्यत्वं=तस्याः अनित्यतायाः सर्वं विनाश्य विनाशादनित्यत्वमित्यर्थः ।

**यथा** ह्यग्निः स्वाश्रयं दाह्यं विनाश्य पश्चात् स्वयं विनश्यति **तथा**ऽनित्यताऽपि स्वाश्रयं सर्वमनित्यं विनाश्य पश्चात् स्वयं विनश्यति । यच्च विनश्यति तदनित्यम् । अतोऽग्निवदनित्यताऽप्यनित्या । न च तस्याः अनित्यत्वादाश्रयस्य सर्वस्य नित्यतापातः । तस्य दाह्यवत् पूर्वमेव विनष्टत्वात् । **तथाचो**पपन्नं सर्वमनित्यमिति भावः ॥ २७ ॥

समाधत्ते—

**"नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्था-नात्" ॥ २८ ॥**

नित्यस्य=नित्यभावस्याप्रत्याख्यानं=प्रत्याख्यानं न सम्भवति, **कुतः?** यथोपलब्धि=यथाप्रमाणं व्यवस्थानात्=व्यवस्थितत्वादित्यर्थः ।

**यत्** खलु प्रमाणेनोत्पत्तिविनाशधर्मकं नोपलभ्यते तन्नित्यं, यच्चोपलभ्यते तदनित्यमिति व्यवस्थितम् । न च यथाप्रमाणं व्यवस्थितस्य प्रत्याख्यानं सम्भवति । नहि यत् प्रमाणेनोत्पत्तिविनाशधर्मकं नोपलभ्यते तदनित्यं यच्चोपलभ्यते तन्नित्यमिति सङ्गच्छते । न च प्रकृतिपुरुषेश्वराणामुत्पत्तिविनाशधर्मकत्वमद्यावधि प्रमाणेनोपलब्धम् । न चोपलम्भाभावे नित्यानां तेषां कथञ्चित् प्रत्याख्यानं युज्यते । तस्मादयुक्तः सर्वमनित्यमित्यभ्युपगमः, युक्तश्च प्रकृतिः पुरुष ईश्वर इत्येतत् त्रयं नित्यं तदितरत् सर्वमनित्यमिति वैदिकोऽभ्युपगम इति भावः ॥ २८ ॥

वादान्तरमुपन्यस्यति—

**"सर्वं नित्यं पञ्चभूतनित्यत्वात्" ॥ २९ ॥**

सर्वं=विवादास्पदं गोघटादिभावमात्रं नित्यं=नित्यत्वधर्मकं वेदितव्यं, **कुतः?** पञ्चभूतनित्यत्वात्=तदात्मनां पञ्चभूतानां नित्यत्वादित्यर्थः ।

**पञ्चभूतमयं** खलु सर्वं गोघटादिभावमात्रम् । नास्ति तादृक् किञ्चिद् भावान्तरं यद् भूतमयं न स्यात् । पञ्चभूतानि च नित्यानि । तस्मादेतत् सर्वं गोघटादिभावमात्रमपि नित्यमिति भावः ॥

**तत्र** सततभावो नित्यत्वमिति विवेकः ॥ २९ ॥

दूषयति—

**"नोत्पत्तिविनाशकारणोपलब्धेः" ॥ ३० ॥**

सर्वं नित्यमित्यनुवर्तते । न=सर्वं नित्यं न, **कुतः?** उत्पत्तिविनाशकारणोपलब्धेः=उत्पत्तिकारणस्य विनाशकारणस्य चोपलम्भादित्यर्थः ।

यस्य ह्युत्पत्तिकारणं विनाशकारणं च प्रमाणतः उपलभ्यते न तन्नित्यं

भवितुमर्हति । नित्यस्योत्पत्तिविनाशकारणयोरनुपलम्भात् । व्याघाताच्च । नहि नित्यं चोत्पत्तिविनाशकारणकं चेति न व्याहन्यते । गोघटादेश्चोत्पत्तिकारणं विनाशकारणं चोभयं प्रमाणेनोपलभ्यते **तस्मात्** सर्वं नित्यमित्ययुक्तमिति भावः ॥ ३० ॥

आक्षिपति—

**"तल्लक्षणावरोधादप्रतिषेधः" ॥ ३१ ॥**

अप्रतिषेधः=सर्वनित्यत्वप्रतिषेधो नोपपद्यते, **कुतः**? तल्लक्षणावरोधात्=तदा भूतानि परामृशति, गोघटादिभावमात्रस्य भूतलक्षणेन भूतस्वभावेन भूतत्वेनावरुद्धत्वादित्यर्थः ।

**चेदु**त्पद्यमानं विनश्यद्वा गोघटादिकं भूतलक्षणं नावरुन्ध्यात् **तदाऽ**वश्यं तदनित्यं स्यात् । न च भूतलक्षणं न तत् कर्हिचिदवरुणद्धि । नह्युत्पद्यमानं विनश्यद्वा गोघटादि कदाचिदभूतं सम्पद्यते । न चाभूतत्वाभावे तदनित्यं युज्यते । **तस्माद्** युक्तं सर्वं नित्यमिति भावः ॥३१॥

दूषयति—

**"नोत्पत्तितत्कारणोपलब्धेः" ॥ ३२ ॥**

न=यदुक्तं तन्न, **कुतः**? उत्पत्तितत्कारणोपलब्धेः=उत्पत्त्या विनाशमुपलक्षयति, गोघटादेरुत्पत्तेर्विनाशस्य तत्कारणस्य च प्रत्यक्षत उपलम्भादित्यर्थः ।

**यस्य** ह्युत्पत्तिर्विनाशस्तत्कारणं चेति त्रितयं प्रत्यक्षमुपलभ्यते न तन्नित्यं भवितुमर्हति । नित्यस्य कुत्रापि तथा तदनुपलब्धेः । गोघटादेश्चैतत् त्रितयं प्रत्यक्षमुपलभ्यते । तस्मादेतन्न नित्यं किन्त्वनित्यम् । **तथा चायुक्तं** सर्वं नित्यमिति भावः ॥

**पूर्व**त्रोत्पत्तिविनाशकारणोपलब्धिर्हेतुः, अत्र तूत्पत्तिविनाशोपलब्धिस्तत्कारणोपलब्धिश्च हेतुरुपन्यस्त इत्यपौनरुक्त्यम् ॥ ३२ ॥

**ननू**त्पत्तितत्कारणोपलब्धिः स्वप्नोपलब्धिवद् भ्रमः किं न स्यात्? **तत्राह**—

"न व्यवस्थानुपपत्तेः" ॥ ३३ ॥

न=उत्पत्तितत्कारणोपलब्धिः स्वप्नोपलब्धिवद् भ्रमो न, कुतः? व्यवस्थानुपपत्तेः="इदं कार्य्यं कारणमिदम्" इतिलोकसिद्धायाः व्यवस्थायाः अनुपपत्तेरित्यर्थः।

न तावत् स्वप्ने काचित् कार्य्यकारणव्यवस्था विद्यते। तत्र सर्वभावानां युगपत् प्रतीयमानत्वात्। लोके चेदं कार्य्यं कारणं चेदमिति व्यवस्था प्रत्यक्षमुपलभ्यते। न च सा सर्वनित्यत्वे कथञ्चिदुपपद्यते। तदुपपत्तिश्च युक्ता। तस्मादुत्पत्तितत्कारणोपलब्धिः स्वप्नोपलब्धिवद् न भ्रमः। तथा चायुक्तः सर्वनित्यत्वाभ्युपगम इति भावः॥ ३३ ॥

वादान्तरमाह—

"सर्वं पृथग् भावलक्षणपृथक्त्वात्" ॥ ३४ ॥

सर्वं=गोघटादिभावजातं प्रत्येकं भाव इति यावत् पृथक्=नाना, कुतः? भावलक्षणपृथक्त्वात्=भावानां लक्षणानि भावलक्षणानि. लक्ष्यन्ते समाख्यायन्ते भावाः एभिरिति व्युत्पत्तेरवयवाः, तेषां पृथक्त्वं नानात्वं, तस्मादित्यर्थः।

एवं हि पृथग्वादी मन्यते रूपादिभ्यो व्यतिरिक्तं नास्ति किञ्चिद् द्रव्यम्, अवयवेभ्यश्च व्यतिरिक्तो नास्ति कश्चिदवयविलक्षणो भावः। नाना च रूपादिलक्षणा अवयवाः। तस्मात् तत्समुदायात्मकोऽवयविलक्षणो भावोऽपि नाना, नास्ति कश्चिदेको भाव इति भावः॥ ३४ ॥

दूषयति—

"नानेकलक्षणैरेकभावनिष्पत्तेः" ॥ ३५ ॥

सर्वं पृथगित्यनुवर्तते। न=सर्वं पृथग् न, कुतः? अनेकलक्षणैः=नानाऽवयवैरेकभावनिष्पत्तेः=एकस्यावयविलक्षणस्य भावस्य निष्पत्तेरुत्पत्तेरित्यर्थः।

चेदवयवेभ्यो व्यतिरिक्तः कश्चिदवयविलक्षणो भावो न स्यात् तदा नासौ विलक्षणकार्य्यकारी स्यात्। अस्ति चैषोऽवयवेभ्यो विलक्षणकार्य्य-

कारी। नह्यवयविलक्षणया गवा यत्कार्य्यं विधीयते तत् तदवयवैः कथञ्चिद् विधातुं शक्यते। घटादिना वाऽवयविलक्षणेन भावेन यत्कार्य्यं क्रियते तत् तदवयवैः कर्तुं पार्य्यते। तस्माद् भवति प्रतिपत्तिर्नूनमवयवेभ्यो व्यतिरिक्तस्तदारब्धोऽस्ति कश्चिदवयविलक्षणो भावः, स चैको न जातु नानेति भावः ॥ ३५ ॥

ननु विलक्षणकार्य्यकारित्वमात्रादवयवेभ्यो व्यतिरिक्तः कश्चिदेको भावो न सिध्यति, समुदायिभ्यः समुदायस्य विलक्षणकार्य्यकारित्वसम्भवात्? तत्राह—

**"लक्षणव्यवस्थानादेवाप्रतिषेधः" ॥ ३६ ॥**

एवकारेण प्रतिभावं लक्षणाव्यवस्थानं व्यवच्छिनत्ति। अप्रतिषेधः= अवयवव्यतिरिक्तस्यावयविलक्षणस्य भावस्य प्रतिषेधो नोपपद्यते, कुतः? लक्षणव्यवस्थानात्=प्रतिभावं लक्षणानां व्यवस्थितत्वादित्यर्थः।

अवयवाः खलु प्रतिभावं व्यवस्थिताः अवगम्यन्ते गोरवयवाः अमी घटावयवाः अमी। चेदवयवेभ्यो व्यतिरिक्तः कश्चिदेकोऽवयविलक्षणो भावो न स्यात् तदा नामी प्रतिभावं व्यवस्थिता अवगम्येरन्। अवगम्यन्ते च। तस्मात् प्रतिपद्यते नूनमस्ति कश्चिदवयवेभ्यो व्यतिरिक्तोऽवयविलक्षणो भावः यत्रामी सर्वे व्यवस्थिताः। स चैको विद्यते न नानेति भावः ॥ ३६ ॥

वादान्तरं दर्शयति—

**"सर्वमभावो भावेष्वितरेतराभावसिद्धेः" ॥ ३७ ॥**

सर्वं=गोघटादिभावजातमभावः=अभावात्मकं विद्यते, कुतः? भावेषु= प्रत्येकभावेष्वितरेतराभावसिद्धेः=अन्योऽन्याभावात्मकत्वसिद्धेरित्यर्थः।

यस्य हि येन सामानाधिकरण्यमुपलभ्यते तस्य तेनास्ति तादात्म्यमित्यभ्युपगन्तव्यम्। मृद्घटः सुवर्णं कुण्डलमित्यादौ घटादीनां मृदादिना तादात्म्ये सत्येव सामानाधिकरण्यस्य दर्शनात्। उपलभ्यते च प्रत्येकभावस्याभावेन सामानाधिकरण्यं यथाऽनश्वा गौरपटो घट इत्यादि। न

चेदं गोघटादीनामश्वाभावादिना तादात्म्याभावे कथञ्चिदुपपद्यते । तादात्म्याभ्युपगमे च प्रत्येकं गोघटादिभावोऽभाव इति निष्प्रत्यूहं सिध्यति । किमुक्तं ? यथाप्रतीति खलु सर्वे भावाः व्यवस्थातुमर्हन्ति नान्यथाप्रतीति । भवति च प्रत्येकभावप्रतिषेधगोचराऽसती गौरश्वात्मनाऽसन् घटः पटात्मनेत्यादिका प्रतीतिः । न चैषा भ्रमः । बाधकानुपलब्धेः । न च तदपह्नवो युक्तः । सर्वभावाव्यवस्थाप्रसङ्गात् । प्रमाणभूतया च तया प्रत्येकं गोघटादिभावोऽभाव इति सुतरां व्यवतिष्ठते । **तथा च** सिद्धं सर्वमभावः इति भावः ॥ ३७ ॥

दूषयति—

**"न स्वभावसिद्धेर्भावानाम्" ॥ ३८ ॥**

सर्वमभाव इत्यनुवर्तते । न=सर्वमभावो न, कुतः? भावानां=गोघटादिसर्वभावानां स्वभावसिद्धेः=असाधारणो धर्मः स्वभावः, तेन सिद्धेरित्यर्थः।

**यदि** गोघटादयः सर्वे भावाः अभावात्मकाः भवेयुः **तदा** न ते स्वभावेन सिध्येयुः। स्वभावेन च सिध्यन्ति। नहि सिध्यन्ती गौर्गोत्वेन सिध्यन् वा घटो घटत्वेन न सिध्यति। न च गोत्वेन सिध्यन्ती गौः घटत्वेन च सिध्यन् घटः कथञ्चिदभावः सम्पद्यते। तस्य निरुपाख्यत्वेन गोत्वादिधर्माश्रयत्वासम्भवात् । न चानश्वा गौरपटो घट इत्यादिसामानाधिकरण्योपलब्ध्या गोघटादीनामभावत्वं सेद्धुमर्हति । सामानाधिकरण्यस्याश्वादिभ्यः पृथग् गोघटादय इत्यर्थं पुरस्कृत्याप्युपपत्तेः । पृथक्त्वस्य च गुणत्वेन गोघटादिभिर्द्रव्यैस्तादात्म्यसम्भवात् । न चासती गौरश्वात्मनाऽसन् घटः पटात्मनेत्यादिप्रतीत्याऽपि गोघटादयोऽभावाः सिध्यन्ति । तस्या अश्वत्वयोगो गवि पटत्वयोगश्च घटे नास्ति **किन्तु** गोत्वयोगो गवि घटत्वयोगश्च घटेऽस्तीत्याद्यर्थविषयत्वेनाभावात्मकत्वाविषयत्वात् । **अतो** न सर्वमभाव इति भावः ॥ ३८ ॥

आक्षिपति—

**"न स्वभावसिद्धिरापेक्षिकत्वात्" ॥ ३९ ॥**

भावानामित्यनुवर्त्तते । स्वभावसिद्धिः=भावानां स्वभावेन सिद्धिर्न=नास्ति, **कुतः?** आपेक्षिकत्वात्=परापेक्षसिद्धिकत्वादित्यर्थः ।

भिन्नस्वभावाः खल्वमी सर्वे गोघटादयो भावाः न जातु परमनपेक्ष्य स्वभावतः सेद्धुमर्हन्ति । लोके भिन्नस्वभावानां भावानां परमनपेक्ष्य स्वभावतः सिद्धेरदर्शनात् । नहि भिन्नस्वभावं नीलं पीतं पीतं वा नीलं ह्रस्वं दीर्घं दीर्घं वा ह्रस्वं पिता पुत्रं पुत्रो वा पितरमनपेक्ष्य स्वभावतः सिध्यतीति क्वचिद् दृश्यते । न चादृष्टस्य कल्पनं न्याय्यम् । **यथा** चामी नीलादयो भावा आपेक्षिकाः परापेक्षसिद्धिका इति यावत् **तथा** गोघटादयो भावा अप्यापेक्षिकाः वेदितव्याः । अश्वादिकमनपेक्ष्य तत्सिद्धेरप्यसम्भवात् । आपेक्षिकं च सर्वमवास्तवं दृष्टं **यथा** जवाकुसुमापेक्षं स्फटिकलौहित्यम् । आपेक्षिकाश्चेमे गोघटादयो भावाः । **तस्मात्** तेऽप्यवास्तवाः । **तथा च** सिद्धं सर्वमभाव इति भावः ॥ ३९ ॥

दूषयति—

**"व्याहतत्वादयुक्तम्"** ॥ ४० ॥

भावानामापेक्षिकत्वमिति विपरिणम्यानुवर्त्तते । अयुक्तं=भावानामापेक्षिकत्वं न युक्तं, **कुतः?** व्याहतत्वात्=अन्योऽन्याश्रयेण व्याहतत्वादित्यर्थः ।

चेदश्वादिभावापेक्षाः खलु गोघटादयो भावाः **तदा**ऽश्वादयो भावाः न जातु गोघटादिभावापेक्षा इति मन्तव्यम् । **लोके** स्फटिकलौहित्यस्य कुसुमलौहित्यापेक्षत्वेऽपि कुसुमलौहित्यस्य तदनपेक्षत्वदर्शनात् । अथाश्वादयो भावा अपि गोघटादिभावापेक्षा इति मन्यसे? **तदा**ऽन्योऽन्याश्रयः प्रसज्येत । न चान्योऽन्याश्रयाः भावाः क्वचित् प्रकल्प्यन्ते । न च नीलादिभाववददोष इति युक्तं वचः । नीलादिभावानां ग्रहणमात्रे परापेक्षायाः सत्त्वेऽप्युत्पत्तौ तदभावात् । नहि नीलमुत्पद्यमानं पीतं, पीतमुत्पद्यमानं वा नीलमपेक्षते । परिमाणभेदौ च ह्रस्वत्वदीर्घत्वे भावानामौत्पत्तिकौ नात्मोत्पत्तौ किञ्चिदपेक्षेते, केवलं तदतिशयानतिशयौ परस्परम-

पेक्ष्य गृह्येते। पितापुत्रयोरपि जन्यजनकभाव एव परस्परमपेक्ष्य गृह्यते न च तौ परस्परमपेक्ष्य भवतः। तस्मादयुक्तं भावानामापेक्षिकत्वम्। तथा च सिद्धं न सर्वमभाव इति भावः॥ ४०॥

सम्प्रति संख्यैकान्तवादं दूषयितुमुपक्रमते—

**"संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्"॥ ४१॥**

संख्यैकान्तासिद्धिः=सर्वमेकमेककारणकत्वादिति सर्वत्रैकत्वसंख्यानियमः संख्यैकान्तः, तस्यासिद्धिः सिद्धिर्नभवति, कुतः? कारणानुपपत्त्युपपत्तिभ्यां=निःसहायस्यैकाकिनः कारणस्यानुपपत्तेः ससहायस्य चोपपत्तेरित्यर्थः।

यस्य खल्वेकस्य तत्त्वस्य कारणत्वादेकमिदं सर्वमित्यास्थीयते तत् किं निःसहायं कारणम्, आहोस्वित् ससहायम्। निःसहायमिति चेत्? तदा न तदस्य नानाविधस्य जगतः कारणमुपपद्यते। निःसहायादेकाकिनः कारणाद् नानाविधविजातीयकार्य्योत्पत्त्यदर्शनात्। न हि कुतश्चिदेकाकिनो निःसहायात् कारणाद् विजातीयनानाविधकार्य्योत्पत्तिर्दृश्यते। न चादृष्टस्य कल्पनं न्याय्यमित्येककारणकत्वाभावान्नैकं सर्वम्। अथ ससहायमिति चेत्? तदा कस्तत्सहाय इति वक्तव्यं किं पदार्थो वाऽपदार्थो वा। अपदार्थ इति चेत्? व्यर्थः परिश्रमः। यः खलु स्वयं नास्ति स किमपरस्य साहाय्यमाचरिष्यति। पदार्थ इति चेत्? तदाऽऽगतं द्वितीयेनेत्येककारणकत्वाभावान्नैकं सर्वमितिभावः॥ ४१॥

अत्र संख्यैकान्तवादी शङ्कते—

**"न कारणावयवभावात्"॥ ४२॥**

संख्यैकान्तासिद्धिरित्यनुवर्त्तते। न=संख्यैकान्तासिद्धिर्न, कुतः? कारणावयवभावात्=एकं तत्त्वं कारणं, तदवयवानां सद्भावो भावः, तस्मादित्यर्थः।

यत्तावदेकं तत्त्वमस्य नानाविधस्य जगतः कारणं ब्रूमो न तत् ससहायं कारणम्, अपि च? निःसहायम्। निःसहायस्यापि च तस्य विजा-

तीयनानाविधकार्य्यजननपर्य्याप्तान् बहुविधानवयवानभ्युपगच्छामः । सत्सु च तेषु न तस्य किञ्चिदनुपपन्नं नाम यन्न कुर्य्यात् । अतो न संख्यैकान्तासिद्धिरिति भावः ॥ ४२ ॥

**समाधत्ते—**

**"निरवयवत्वादहेतुः" ॥ ४३ ॥**

अहेतुः="कारणावयवभावात्" इत्ययमहेतुः, **कुतः** ? निरवयवत्वात्= सर्वकारणस्य निरवयवत्वनियमादित्यर्थः ।

**यत्** खलु सावयवं **तत्** कार्य्यमिति नियमः । चेदेकं तत्त्वमपि सावयवमभविष्यत् तदाऽवश्यं कार्य्यमसेत्स्यत् । न च तत् कार्य्यं भवत् सर्वस्यास्य कारणमुपपद्यते । सर्वकारणस्य निरवयवत्वनियमात् । निरवयवस्य च निःसहायस्य तस्य सुतरां तत्कारणत्वमनुपपन्नम् । ससहाये च तस्मिन्नेककारणकत्वाभावान्नैकं सर्वमिति संख्यैकान्तासिद्धिरिति भावः ॥ ४३ ॥

समाप्ता **"प्रेत्यभाव"**–परीक्षा । **"फलम्"** इदानीं परीक्षणीयम् । **तत्र** पूर्वं तावत्परीक्षाङ्गभूतं संशयमाह—

**"सद्यः कालान्तरे च फलनिष्पत्तेः संशयः" ॥ ४४ ॥**

सद्यः=पाकादिकर्मणां सद्यः कालान्तरे च=कृष्यादिकर्मणां कालान्तरे च फलनिष्पत्तेः=ओदनसस्यप्रभृतिफलस्य निष्पत्तेर्निष्पत्तिदर्शनादिति यावत् संशयः=किमग्निहोत्रादीनि कर्माणि सद्यःफलान्याहोस्वित् कालान्तरफलानीति भवति संशय इत्यर्थः ।

**कानिचित्** कर्माणि सद्यःफलानि दृष्टानि **यथो**दनादिफलानि पाकादीनि कर्माणि । **कानिचिच्च** कालान्तरफलानि दृष्टानि **यथा** सस्यादिफलानि कृष्यादीनि कर्माणि । विहितानि प्रतिषिद्धानि चाग्निहोत्रसुरापानादीन्यपि कर्माणि । तस्मात् संशयः किमिमानि पाकादिकर्मवत् सद्यःफलानि, कृष्यादिकर्मवदाहोस्वित् कालान्तरफलानीति भावः ॥

**तत्र** कर्माव्यवहितोत्तरकालत्वं **सद्यस्त्वं**, कर्मनाशोत्तरकालत्वं **कालान्तरत्वं**, किंबहुना साक्षात् कर्मणा फलनिष्पत्तिकालः **"सद्यः**

कालः" अदृष्टद्वारा कर्मणा फलनिष्पत्तिकालः "**कालान्तरम्**" इति विवेकः ॥ ४४ ॥

तत्र सद्य इति पूर्वपक्षे समाधानमाह—

**"न सद्यः कालान्तरोपभोग्यत्वात्"** ॥ ४५ ॥

फलनिष्पत्तिरिति विपरिणम्यानुवर्तते । विहितप्रतिषिद्धकर्मणामिति फलपरीक्षासामर्थ्यात् सम्बध्यते। सद्यः=विहितप्रतिषिद्धकर्मणां सद्यः फलनिष्पत्तिर्न=नोपपद्यते, **कुतः**? कालान्तरोपभोग्यत्वात्=तस्य कालान्तरेणोपभोक्तुं योग्यत्वादित्यर्थः ।

अग्निहोत्रादीनि कर्माणि तावद् विहितानि, सुरापानादीनि च प्रतिषिद्धानि । विहितानां तेषां फलं **स्वर्गः**, प्रतिषिद्धानां च तेषां फलं **नरकः** । सुखदुःखविशेषौ च स्वर्गनरकौ । न च तयोर्निष्पत्तिः सद्यो भवितुमर्हति । सर्वत्र फलविशेषनिष्पत्तेर्देशकालविशेषापेक्षानियमात् । नहि लोके कश्चित् फलविशेषो देशकालविशेषापेक्षामन्तरेण निष्पद्यमानो दृश्यते । न वा शास्त्रे क्वचित् तदनपेक्षा फलविशेषनिष्पत्तिः श्रूयते । न च कालान्तरे निष्पद्यमानयोः सुखदुःखविशेषयोरुपभोगः सद्यो युज्यते यस्य यदोत्पत्तिस्तस्य तदैवोपभोक्तुं शक्यत्वात् । अतो न विहितप्रतिषिद्धकर्मणां सद्यः फलनिष्पत्तिः, **अपि च**? कालान्तर इति भावः॥४५॥

अत्र शङ्कते—

**"कालान्तरेणानिष्पत्तिर्हेतुविनाशात्"** ॥ ४६ ॥

कालान्तरेण=कालान्तरेऽनिष्पत्तिः=फलनिष्पत्तिर्न युज्यते, **कुतः**? हेतुविनाशात्=फलहेतुकर्मणस्तदानीं विनष्टत्वादित्यर्थः ।

विद्यमाने खलु कारणे कार्य्यं निष्पद्यते नाविद्यमाने । फलं प्रति कारणं च कर्म । तच्च कालान्तरे न विद्यते । विनष्टत्वात् । न च विनष्टात् तस्मात् कार्य्यनिष्पत्तिर्युज्यते। लोके विनष्टे कारणे कार्य्यनिष्पत्त्यदर्शनात् । अतोऽयुक्ता कालान्तरे फलनिष्पत्तिरिति भावः ॥ ४६ ॥

समाधत्ते—

**"प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात्"** ॥ ४७ ॥

वृक्षफलवत्=यथाहि फलनिष्पत्तेः प्राग् विनष्टादपि मूलसेकादिलक्षणात् कर्मणो वृक्षफलं भवति तथा प्राङ्निष्पत्तेः=फलनिष्पत्तेः प्राग् विनष्टादपि विहितप्रतिषिद्धकर्मणस्तत्=स्वर्गादिलक्षणं फलं स्यात्=भविष्यतीत्यर्थः ।

**यथा** हि विनष्टादपि फलार्थिना क्रियमाणाद् वृक्षमूलसेकादिलक्षणात् कर्मणो रसद्रव्योत्पत्त्या कालान्तरे फलं निष्पद्यते **तथा** विनष्टादपि विहितप्रतिषिद्धकर्मणो धर्माधर्मलक्षणादृष्टोत्पत्त्या कालान्तरे स्वर्गादिलक्षणं फलं निष्पत्तुमर्हति । **किमुक्तं ?** यथा हि रागादितः प्रवृत्तेन पुरुषेण वृक्षमूलसेकादिलक्षणं कर्म क्रियते । विनष्टे च तस्मिन्नब्धातुना सङ्गृहीतः पृथिवीधातुराभ्यन्तरतेजसा पच्यमानो रसद्रव्यं निर्वर्तयति । तच्च वृक्षानुगतं पच्यमानं कालान्तरे फलं निष्पादयति । तथा रागादितः प्रवृ-त्तेन पुरुषेण विहितनिषिद्धलक्षणं कर्म क्रियते । तच्च विनश्यत् सदा[illegible] धर्माधर्मलक्षणमदृष्टं निर्वर्तयति, यत्किल **"मीमांसकाः"** अपूर्वमि[illegible]ङ्गिरन्ते । तच्चात्मानुगतं पच्यमानं कालान्तरे सुखदुःखलक्षणं फलं [illegible]यति । न चादृष्टेन निष्पाद्यं फलं कर्मनिष्पाद्यं न भवतीति वक्तुं काला-व्यापारेण व्यापारिणोऽन्यथासिद्धेरसम्भवात् । अन्यथा व्या[illegible]नादिति निष्पद्यमानं वह्निज्ञानमपि लैङ्गिकं न स्यात् । अस्ति च [illegible]त् का- **तस्मात्** कर्मणा कालान्तरे फलनिष्पत्तौ नास्ति कश्चिद्दोष इति भावः ॥ ४७ ॥

**ननु** कर्मणा यदिदं फलं निष्पद्यते तत्किं निष्पत्तेः प्रागसद् भवति किंवा सदिति जिज्ञासायां पूर्वं तावत् पूर्वपक्षमाह—

**"नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात्"** ॥ ४८ ॥

प्राङ्निष्पत्तेरित्यनुवर्तते । फलमिति प्रकरणाल्लभ्यते, तच्च कार्य्यमात्रोपलक्षणम् । नासदिति प्रतिज्ञायाम् "उपादाननियमात्" न सदिति प्रतिज्ञायाम् "उत्पत्त्यसम्भवात्" इति च हेतुद्वयशेषः । असत्=निष्पत्तेः प्राक् फलमसत् न=न भवति, **कुतः ?** उपादाननियमात्=कार्य्यविशेष-

निष्पत्त्यै कारणविशेषोपादानस्य नियमात् । सत्=निष्पत्तेः प्राक् फलं सत् न=न भवति, **कुतः** ? उत्पत्त्यसम्भवात्=सत उत्पत्तेः सम्भवाभावात् । सदसत्=निष्पत्तेः प्राक् फलं सदसत् न=न भवति, **कुतः** ? सदसतोः=सतोऽसतश्च द्वयोर्वैधर्म्यात्=विरुद्धधर्मकत्वात् मिथो विरोधादिति यावदित्यर्थः ।

चेदुत्पत्तेः प्राक् कार्य्यमसद् भवेत् **तदा** कार्य्यविशेषोत्पत्त्यर्थं कारणविशेषोपादाननियमो न स्यात् । असत्त्वस्य सर्वत्राविशिष्टत्वेन नियमहेतोरभावात् । नहि घटासत्त्वं **यथा** मृत्तिकायां वर्तते **तथा** तन्त्वादिषु न वर्तते । तैलासत्त्वं च **यथा** तिलेषु वर्तते **तथा** सिकतादिषु न वर्तते । वृत्तित्वाविशेषेऽपि मृत्तिकैव तु घटोत्पत्यर्थमुपादीयते न तन्त्वादयः । तिला एव तु तैलोत्पत्त्यर्थमुपादीयन्ते न सिकतादयः । अतोऽवगम्यते नोत्पत्तेः प्रागस्ति कार्य्यमसत् । **न** च तदा सतोऽपि कार्य्यस्योत्पत्तिः सम्भवति । सत्तासम्बन्धस्यैवोत्पत्तिपदार्थत्वात् । तस्य चोत्पत्तेः प्रागपि विद्यमानत्वात् । अन्यथा न तत् तदा सत् स्यात् । न च सत्तासम्बन्धे विद्यमाने पुनस्तत्सम्बन्धो घटते । भवति च कारणव्यापारेण तत्सम्बन्धः । अतो विज्ञायते नास्ति तावदुत्पत्तेः प्राक् कार्य्यं सत् । नापि सदसदिति वक्तुं पार्य्यते । तयोः परस्परविरोधेन सहभावासम्भवात् । नहि यद् यदा सत् तत् तदैवासदिति सम्भवति । तस्मान्नोत्पत्तेः प्रागस्ति सदसदपि कार्य्यमिति भावः ॥ ४८ ॥

**सिद्धान्तमाह—**

**"उत्पादव्ययदर्शनात्" ॥ ४९ ॥**

प्राङ् निष्पत्तेः सदसदिति चानुवर्तते । फलसम्बन्धः पूर्ववत् । निष्पत्तेः प्राक् फलं कार्य्यं सदसदिति वेदितव्यं, **कुतः** ? उत्पादव्ययदर्शनात्=तदुत्पत्तिविनाशयोरुपलम्भादित्यर्थः ।

चेदुत्पत्तेः प्राक् कार्य्यमसद्भवेत् ? न जातूत्पद्येत । असतः शशशृङ्गादेरुत्पत्त्यदर्शनात् । सच्चेत् ? न कदाचिद् विनश्येत । पुरस्तात्सतः पश्चा-

दपि सत्त्वनियमेन विनाशासम्भवात् । उत्पद्यते विनश्यति च कार्य्यम् । **तस्माद्** भवति प्रतिपत्तिर्नूनमेतदुत्पत्तेः प्राक् नासदस्ति नापि सत् **किन्तु** सदसदिति भावः ॥ ४९ ॥

**ननु** सदसतोर्वैधर्म्यात् सहभावासम्भवः ? **तत्राह**—

**"बुद्धिसिद्धं तु तदसत्" ॥ ५० ॥**

अबुद्धिसिद्धं तुना व्यवच्छिनत्ति । तदसत्=सदसतोर्यदसदित्युक्तं तदसत् बुद्धिसिद्धं=बुद्ध्या सिद्धं बुद्धिसहमिति यावत् परिग्रहीतव्यमित्यर्थः ।

उत्पत्तेः प्राग् येन रूपेण कार्य्यं सद् वर्त्तते तेनैव रूपेण चेदसदिति ब्रूयाम **तदा** स्याद् विरोधात् तयोः सहभावासम्भवः । न च वयं तेनैव रूपेणासदिति ब्रूमः **किन्तु** येन रूपेण सत् ततो रूपान्तरेणासदिति निगदामः । तच्च बुद्धिं सहते । कारणरूपेण सतः कार्य्यरूपेणासत्त्वस्योत्पत्तेः प्रागुपपन्नत्वात् । नह्युत्पत्तेः प्राक् कार्यरूपेणासत्त्वं बुद्ध्या न सिध्यति । न च बुद्ध्या सिद्धं विरोधः कथञ्चिदुपतिष्ठते । **तस्मादुत्पत्तेः** प्राक् कार्य्यस्य सदसत्त्वे नास्ति सहभावासम्भव इति भावः ॥ ५० ॥

**ननु** फलवदिति दृष्टान्तो न युज्यते शरीरस्य नश्वरत्वेन फलपर्य्यन्तं वृक्षवन्नियमेनावस्थानासम्भवादित्याशङ्कते—

**"आश्रयव्यतिरेकाद् वृक्षफलवदित्यहेतुः" ॥ ५१ ॥**

वृक्षफलवदित्यहेतुः=हेतुरत्र दृष्टान्तः, हेतुमति हेतूपचाराद्, वृक्षफलवदित्ययं दृष्टान्तो न युज्यते, **कुतः?** आश्रयव्यतिरेकात्=वृक्षस्येव कर्माश्रयस्य शरीरस्य फलपर्य्यन्तं नियमेन सत्त्वाभावादित्यर्थः ।

**यथा** हि कर्माश्रयो वृक्षः फलपर्य्यन्तमवतिष्ठते **तथा** कर्माश्रयस्य शरीरस्य फलपर्य्यन्तमवस्थाने नास्ति कश्चिन्नियमः । नश्वरं हि तत् । को जानीतेऽद्यास्ति श्वोऽपि भविष्यतीति । न चानाश्रयं फलं युक्तम् । **तस्मात्** वृक्षफलवदित्ययमदृष्टान्त इति भावः ॥ ५१ ॥

**समाधत्ते**—

**"प्रीतेरात्माश्रयत्वादप्रतिषेधः" ॥ ५२ ॥**

अप्रतिषेधः=वृक्षफलवदिति दृष्टान्तप्रतिषेधो नोपपद्यते, **कुतः?** प्रीतेः=अप्रीतेरुपलक्षणमेतत्, प्रीतिः सुखम्, अप्रीतिर्दुःखम्, तदात्मकस्य फलस्यात्माश्रयत्वात्=आत्मनिष्ठत्वादित्यर्थः ।

**वि**हितनिषिद्धकर्मजन्यमदृष्टं तावदात्मानमधितिष्ठति । तज्जन्यं सुखदुःखलक्षणं फलमपि तमेवाश्रयति । वृक्षवदात्मा च फलपर्य्यन्तमवतिष्ठते । नित्यत्वात् । **अतो** न "वृक्षफलवत्" इत्ययमदृष्टान्त इति भावः ॥ ५२ ॥

**शङ्कते—**

**"न पुत्र-पशु-स्त्री-परिच्छद-हिरण्यान्नादि-फलनिर्देशात्" ॥ ५३ ॥**

न=प्रीत्यप्रीती सुखदुःखे फलं न, **कुतः?** पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात्=**पुत्रः** सन्ततिः **पशु**र्गोहस्त्यश्वादिः, **स्त्री** धर्मपत्नी, **परिच्छदः** परिजनः, **हिरण्यं** धनम्, **अन्न**मन्नाद्यम्, आदिना भूमिरारोग्यं चिरजीवितं च परिगृह्यते, पुत्रश्च पशुश्च स्त्री च परिच्छदश्च हिरण्यं चान्नं च, तान्यादीनि येषां, तेषां फलत्वेन निर्देशः कथनं, तस्मादित्यर्थः ।

**शास्त्रे** तावत् पुत्रादयोऽपि कर्मफलं निर्दिश्यन्ते न केवलं सुखदुःखे । निर्दिश्यमानाश्च ते सर्वे शरीराश्रयाः प्रत्यक्षाः न खल्वात्माश्रयाः । **किमुक्तं?** केवलं सुखदुःखे चेत् कर्मफलं भवेतां तदा न जातु शास्त्रे पुत्रादयः कर्मफलं निर्दिश्येरन् । नहि यत्कर्मफलं न भवति तत् कर्मफलं क्वचिन्निर्दिश्यते । निर्दिश्यन्ते च पुत्रादयः । ते च शरीरमधिशेरते नात्मानम् । **अतो** यदुक्तं "प्रीतेरात्माश्रयत्वात्" इति, तदयुक्तमिति भावः ॥ ५३ ॥

**समाधत्ते—**

**"तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः" ॥ ५४ ॥**

तेषु=पुत्रादिषु फलवदुपचारः=फलवन्निर्देश औपचारिको वेदितव्यः,

कुतः ? तत्सम्बन्धात्=पुत्रादिसम्बन्धात् फलनिष्पत्तेः=फलस्योत्पत्ते-रित्यर्थः ।

**यथा** हि "अन्नं वै प्राणः, आयुर्वै घृतं, लाङ्गलं मे जीवनम्" इत्यत्र प्राणादिसाधनेष्वन्नघृतलाङ्गलेषु प्राणायुर्जीवननिर्देशः साध्यसाधनभाव-सम्बन्धादौपचारिकः **तथा** फलसाधनेषु पुत्रादिषु फलवन्निर्देशः साध्य-साधनभावसम्बन्धादौपचारिको वेदितव्यो न मुख्यः । **अतो** न "प्रीते-रात्माश्रयत्वात्" इत्युक्तमयुक्तमिति भावः ॥ ५४ ॥

क्रमप्राप्तं दुःखं परिक्षयति—

**"विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः"** ॥ ५५॥

जन्मोत्पत्तिः—जन्मलक्षणा येयमुत्पत्तिः सा दुःखमेव=सुखव्यव-च्छेद एवार्थः, दुःखमेवेति वेदितव्यं, **कुतः ?** विविधबाधनायोगात्=**बाधना** दुःखं, **योग** उपायः, निमित्तमिति यावत्, नानाविधदुःखो-पायत्वादित्यर्थः ।

**सति** जन्मनि तावदेनं विविधा बाधना उपतिष्ठन्ते नासति जन्म-नि । नहि यस्य जन्म न विद्यते तेनेष्टवियोगानिष्टसंयोगाप्रार्थितप्राप्तिप्रा-र्थिताप्राप्तिजराव्याधिप्रायणनिमित्ताः विविधाः बाधनाः कथञ्चिदनुभू-यन्ते । जन्मवतां च विवेकिनां नैता अप्रसिद्धाः । अत एवोक्तं दर्शना-न्तरे **"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"** ( यो० २।१५ ) इति । **तस्माद्** विविधबाधना-निमित्तत्वाद् दुःखमेवैतज्जन्मेति भावः ॥ ५५ ॥

**अत्र** शङ्कते—

**"न सुखस्याप्यन्तरालोत्पत्तेः"** ॥ ५६ ॥

दुःखमेव जन्मोत्पत्तिरित्यनुवर्तते । न=दुःखमेव जन्मोत्पत्तिरिति न, **कुतः ?** सुखस्यापि=दुःखवत् सुखस्याप्यन्तरालोत्पत्तेः=दुःखमध्ये निष्पत्ते-रित्यर्थः ।

**यथा** हि सति जन्मनि दुःखानि तावदुत्पद्यन्ते **तथा** तदन्तराले

सुखान्यपि कदाचिदुत्पद्यन्ते । न च दुःखवदुत्पद्यमानेषु तेषु दुःखमेवे-त्यवधारणं युज्यते । **तस्माद्** यदुक्तं "दुःखमेव जन्मोत्पत्तिः" इति, तदयुक्तमिति भावः ॥ ५६ ॥

**समाधत्ते—**

**"विविधबाधनानुवृत्तेर्वेदयतः पर्य्येषणदोषादप्रतिषेधः" ५७**

अप्रतिषेधः= दुःखमेव जन्मोत्पत्तिरित्यस्य प्रतिषेधो नोपपद्यते, **कुतः?** वेदयतः=दुःखान्तराले जायमानं सुखमनुभवतः पर्य्येषणदोषात्=पर्य्येषणं प्रार्थना तृष्णेति यावत्, स एव दोषस्तस्मात् विविधबाधनानुवृत्तेः=विविध-दुःखानुवृत्तेरित्यर्थः ।

**यदा** खल्वयं दुःखान्तराले सुखमुपलभते **तदाऽ**प्यस्य पर्य्येषणदोष-वशाद् विविधाः बाधना अनुवर्त्तन्ते । नह्यस्य प्रतिक्षणं सुखं प्रार्थयतो यथाप्रार्थनं सुखं सम्पद्यते । यच्च सम्पद्यते तदपि बहुप्रत्यनीकं न्यूनं वा सम्पद्यते । सम्पद्य वा विपद्यते । पर्य्येषणं च प्रतिपलमभिवर्द्धते । तत-श्चास्य कुत्रचिद्रज्यतः काँश्चिद् द्विषतः कचिच्च मुह्यतो भवति विविधबाध-नानुवृत्तिः । सुखं च तदा स्वरूपतोऽहेयमपि विविधबाधनानुषक्तत्वाद् विषानुषक्तपयोवद् हेयतामापद्यते । हेयं च सर्वं दुःखकोटौ निःक्षपन्ति विवेकिनः । तद्यथोक्तं दर्शनान्तरे **"तदपि दुःखशबलमिति दुःख-कोटौ निःक्षपन्ति विवेचकाः"** ( सां० ६।८ ) इति । **तस्माद्** यदुक्तं "दुःखमेव जन्मोत्पत्तिः" इति, तद् युक्तमुक्तमिति भावः ॥ ५७ ॥

**हेत्वन्तरमाह—**

**"दुःखविकल्पे सुखाभिमानाच्च" ॥ ५८ ॥**

अप्रतिषेध इत्यनुवर्त्तते । तत्र हेत्वन्तरमेतदिति सूचनाय चकारः । दुःखविकल्पे=दुःखाद् विरुद्धः कल्पः पक्षो दुःखविकल्पः=दुःखायोगः, दुःखाभाव इति यावत्, तस्मिन् सुखाभिमानात्=सुखमिदमित्यारोपणा-दप्रतिषेधः=उक्तप्रतिषेधो नोपपद्यत इत्यर्थः ।

**यत्तावदस्य** दुःखान्तराले कदाचित् सुखमुत्पद्यते न **तद्** वस्तुतः

सुखं किन्तु दुःखाभावे सुखाभिमानमात्रम् । तदा हि दुःखं रूपान्तरेणावतिष्ठमानमपि दुःखरूपेण नावतिष्ठते । अविवेकिनस्तु तदनवस्थानं तदा सुखमित्यभिमन्यन्ते यथा रहसि प्रणयकलहकुपितकुरङ्गशावलोचनाङ्गनापादपल्लवपातं कामिनः शिरसि । नह्येष सुखमस्ति । भवति च तत्र सुखबुद्धिः कामुकानां मूढधियाम् । कथमन्यथा प्रतिदिनं यथाकामं प्रवर्तेरन् । अक्षिपात्रकल्पानां विवेकिनां तु विविधबाधनानुषक्तत्वादस्ति सर्वमेतद् दुःखम् । तच्च सत्यां जन्मोत्पत्तौ भवति नासत्याम् । अतो यदुक्तं दुःखमेव जन्मोत्पत्तिरिति, तद् युक्तमुक्तमिति भावः ॥ ५८ ॥

दुःखं परीक्षितम् । अपवर्गः सम्प्रति परीक्षणीयः । तत्र पूर्वं तावत् पूर्वपक्षमाह—

"ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः" ॥ ५९ ॥

अपवर्गाभावः=आत्मापवर्गाभावो वेदितव्यः, कुतः ? ऋणक्लेशप्रवृत्त्यनुबन्धात्=ऋणानि च क्लेशाश्च प्रवृत्तिश्च तास्तथा, तासामनुबन्धः सम्बन्धः, तस्मात्=ऋणैः क्लेशैः प्रवृत्त्या चानुबद्धत्वादित्यर्थः ।

जायमानस्यास्य तावद् ऋणानुबन्धः श्रूयते "ऋणꣳ ह वै जायते योऽस्ति, स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः" ( शत० १।७।५।१ ) इति । न च सति तस्मिन् तदपवर्गो युज्यते । विरोधात् । न च तदननुबन्धोऽस्यापाकरणादृते घटते । न च तदपाकरणमपि प्रायणात्प्रागुपपद्यते । ऋष्यृणाद्यपाकरणस्य कथञ्चित् सम्भवेऽपि देवर्णापाकरणस्यासम्भवात् । नहि यथर्ष्यृणापाकरणसाधनं ब्रह्मचर्य्यं पितृणापाकरणसाधनं च गार्हस्थ्यं सावधिकं तथा देवर्णापाकरणसाधनमग्निहोत्रादिकमपि सावधिकं वर्तते । जरामरणयोरेव तदवधित्वेनाभिधानात् । अस्ति च तदभिधायकं ब्राह्मणम्—

"एतद्वै जरामर्य्यꣳसत्रं यदग्निहोत्रं, जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा" ( शत० १२।४।१।१। ) इति । न च जरामरणतः पश्चात् कश्चित् कालोऽवशिष्यते यत्रायमृणापाकरणेन तदनु-

बन्धाद् विनिर्मुक्तोऽपवर्गसाधनानि सम्यगनुतिष्ठेत् । न चानपाकृतेषु तेषु तदनुष्ठातुं शक्यते । अधःपातप्रसङ्गात् । तद्यथाऽऽह षष्ठे भगवान् **मनुः**—

**ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।**
**अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥ ३५ ॥**

इति । तत्र मोक्षसाधनं **मोक्षः**, त्रीणीति च शाखान्तराभिप्रायम् । श्रूयते किल शाखान्तरे "**यज देवान् अधीष्व वेदान् प्रजामुत्पादय**" इति । **तैत्तिरीयाः** अप्यामनन्ति "**जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवा जायते ब्रह्मचर्य्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः, एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी**" ( तै० सं० ६।३।१० ) इति । तदपाकरणं चावश्यकम् । **तथा च** तेनैव वयःपरिसमाप्तेरपवर्गसाधनानुष्ठानावसराभावादपवर्गाभावः । **अ**विद्यासितारागद्वेषाभिनिवेशा इति पञ्च क्लेशाः । न च तदनुबन्धोऽप्यस्य कदाचित् सम्भवति । यथा ह्ययं क्लेशानुबद्धो म्रियते तथैव क्लेशानुबद्धो जायते । मरणजन्मनी च संसारः । न च क्लेशेषु सत्सु शक्यः सः कथञ्चिदुच्छेत्तुम् । **अतो**ऽपवर्गाभावः । **वाग्बुद्धि**शरीरारम्भश्च प्रवृत्तिः । साऽस्य सततमनुवर्तते । जन्मप्रभृति यावत्प्रायणं नास्ति कश्चित् क्षणः, यत्रायं शरीरेण वाचा बुद्ध्या च न किञ्चिदारभेत । सत्यां च प्रवृत्तौ जन्ममरणयोर्ध्रौव्याद् न शक्योऽवाप्तुमपवर्गः । **तस्मा**त्तदभाव इति भावः ॥

**तत्र** ऋणानुबन्धादपवर्गाभाव इत्येकः पूर्वः पक्षः । क्लेशानुबन्धादिति द्वितीयः । प्रवृत्त्यनुबन्धादिति तृतीय इति विवेकः ॥ ५९ ॥

**तत्र** पूर्वम् "**ऋणानुबन्धादपवर्गाभावः**" इति प्रथमं पूर्वपक्षं समाधत्ते—

**"प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः" ॥ ६० ॥**

प्रधानशब्दानुपपत्तेः=प्रधानशब्दत्वानुपपत्त्या गुणशब्देन=गुणशब्द-त्वेनानुवादः=ऋणशब्दप्रयोगो वेदितव्यः, **कुतः?** निन्दाप्रशंसोपपत्तेः= तथा सति विवक्षितयोर्निन्दाप्रशंसयोरुपपत्तेरित्यर्थः।

यस्तावच्छब्दो मुख्यया वृत्त्या स्वार्थे प्रयुज्यते स **"प्रधानशब्दः"** यथा "अग्निरुष्णः" इत्यत्राग्नौ प्रयुक्तोऽग्निशब्दः, यथा वा "सास्नादि-मती गौः" इत्यत्र गवि प्रयुक्तो गोशब्दः, यश्च लक्षणया वृत्त्या स **"गुणशब्दः"** यथा "अग्निर्माणवकः" इत्यत्र माणवके प्रयुक्तोऽग्नि-शब्दः, यथा वा "गौर्वाहीकः" इत्यत्र वाहीके प्रयुक्तो गोशब्दः। नच **"ऋणँ्ह वै जायते योऽस्ति"** इत्यत्र प्रयुक्तः ऋणशब्दः प्रधान-मुपपद्यते। तस्य यत्रैकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रैव प्रधानत्वदर्शनात्। नह्यत्रैकः कश्चित् कस्मैचित् किञ्चित् प्रत्यादेयं ददाति द्वितीयश्च कस्माच्चित् प्रतिदेयं गृह्णाति। प्रधानशब्दत्वानुपपत्त्या च तस्य गुणशब्दत्वेनात्रानुवादः=अन्यत्र प्रयुक्तस्यात्र प्रयोगः कल्पनीयः। यः शब्दो यत्र प्रयुक्तोऽन्वयानुपपत्त्या तात्पर्य्यानुपपत्त्या वा प्रधानभावं न लभते तत्र तस्य गुणभावेन प्रयोग इति कल्पनस्य न्याय्यत्वात्। अन्यथा प्रयोगवैयर्थ्यं प्रसज्येत। नहि प्रयोक्तारः क्वचिद् व्यर्थं शब्दं प्रयुञ्जते। तत्रापि वेदव्याख्यातारो **याज्ञिकसम्प्रदायिनः** ऋषयः। **तथाच** "गौर्वाहीकः" इत्यत्रागौः सन्नपि वाहीको यथा गौरित्युक्त्वा निन्द्यते, यथा वा "अग्निर्माणवकः" इत्यत्रानग्निः सन्नपि माणवकोऽग्नि-रित्युक्त्वा प्रशस्यते तथैव "ऋणँ्ह वै जायते" इत्यत्रानृणी सन्नप्ययं कर्मलोपे ऋणीव ऋणादानाद् ऋणीत्युक्त्वा निन्द्यते, कर्मानुष्ठाने तु ऋणदानादनृणीत्युक्त्वा प्रशस्यते। न चैवमस्य लोकवदृणानुबन्धो वक्तुं शक्यते। तस्य तात्पर्य्यविषयत्वाभावेन वाक्यार्थत्वाभावात्। नह्यनेन वाक्येन ऋणानुबन्धोऽभिधीयते, **अपि च?** यथाशक्ति नियमेनाग्निहो-त्रादिकर्मानुष्ठानम्। तच्च जरामर्य्यवादोऽप्युपोद्बलयति। तत्रापि याव-ज्जीवं वैदिकं कर्म न जातु हातव्यमिति शक्तंप्रति नियमेन तदनुष्ठानस्यै-वाभिहितत्वात्। स्मृतेरप्येतदेव तात्पर्य्यम्। एतदेव च भगवान् जैमि-

निरपि द्वितीयाध्याये चतुर्थे पादे "**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्**" (मी० २।४।१) "**कर्तुर्वा श्रुतिसंयोगात्**" (मी० २।३।२) इति पूर्वोत्तरपक्षसूत्राभ्यामुपपादयति। न च नियमेन वैदिककर्मानुष्ठानं कर्हिचिदपवर्गसाधनानुष्ठानं विरुणद्धि। तत्साधनस्यापि वैदिककर्मत्वात्। तदनुष्ठाने वयःपरिसमाप्तेश्चेष्टत्वात्। अतो यदुक्तम् "ऋणानुबन्धादपवर्गाभावः" इति, तदयुक्तमिति भावः॥ ६०॥

**नन्वेवं** तर्हि चतुर्थाश्रमिणः प्रत्यपवर्गः प्रतिषेद्धव्यः, तेषां सर्वथाऽग्निहोत्रादिकर्मानुष्ठानाभावात्? **तत्राह**—

"**समारोपणादात्मन्यप्रतिषेधः**" ॥ ६१ ॥

अप्रतिषेधः=चतुर्थाश्रमिणामपवर्गप्रतिषेधो नोपपद्यते, **कुतः**? आत्मनि=स्वात्मनि शरीरे समारोपणात्=अग्नीनां समारोपणात् अग्नीन् समारोप्य कर्मानुष्ठानादिति यावदित्यर्थः।

**यद्यपि** चतुर्थाश्रमिणो भगवन्तः परिव्राजो बाह्यमग्निहोत्रादिवैदिकं कर्म नानुतिष्ठन्ति। यावत्तदुपकरणपरित्यागेनानुष्ठातुमशक्यत्वात्। **तथाऽप्यस्ति** तेषामान्तरं तत्तत्कर्मानुष्ठानम्। ते हि महाभागाः परीक्ष्य लोकान् कर्मचितान् नास्त्यकृतः कृतेनेति तीव्रं निर्वेदमापन्नास्त्वरया निःश्रेयसाधिगमाय यथाकामं ब्रह्मविद्यामभ्यसितुं प्रव्रज्यामधिजिगमिषवः "कर्मलोपो मा भूत्" इति पूर्वं तावत् कर्मसाधनभूतानग्नीन् "**हृदयं गार्हपत्यः, मनोऽन्वाहार्य्यपचनः, आस्यमाहवनीयः**" इत्यात्मनि यथाविधि समारोपयन्ति। यत्रेदं स्मर्य्यते—

**प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।**
**आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥**

(मनु० ६।३८) इति। समारोप्य चाग्नीन् प्रव्रजतां तेषामाहारव्याहारादिकया स्वाभाविकया क्रियया सर्वकर्मानुष्ठानं पूर्वतोऽप्यपूर्वतरं सम्पद्यते ब्रह्मविद्याधिगतौ च सर्वपाप्मनः प्रदूय परमं साहाय्यमापद्यते। तद्यथाऽऽमनन्ति छन्दोगाः "**अथ य एतदेवं विद्वानग्निहोत्रं**

**जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति।२। तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳहास्य सर्वे पाप्मानः प्रदूयन्ते, य एतदेवं विद्वानग्निहोत्रं जुहोति।३।** (छां० ५।२४।२-३) इति। किं बहुना यत्ते भगवन्तो भिक्षाचर्य्यं चरन्ति प्राणेऽपानमपाने च प्राणमहर्निशं जुह्वति तदेव तेषामग्निहोत्रं कर्म। यत् किल **"देवयज्ञः"** इति कर्मिणो व्याचक्षते। प्रत्यहं वैदिकधर्मोपदेशो **"ब्रह्मयज्ञः"**। यं किल स्वाध्यायिनः **"स्वाध्यायम्"** इत्याचक्षते। श्रूयते च **"स्वाध्यायो वै ब्रह्मयज्ञः"** (शत. ११।५।८।२) इति। वैदिकमर्य्यादानुल्लङ्घनं **"पितृयज्ञः"** आत्मत्वभावनया सर्वेषां भूतानामुपर्य्यनुग्रहोऽपीडनं च **"भूतयज्ञः"**। सर्वभूतोपकाराथ यत्र तत्र भ्रमणं दर्शनार्थमागतानां च प्रीतिपूर्वकं प्रष्टव्यार्थसंशयापनोदनेन सत्करणम् **"अतिथियज्ञः"**। अयमेव **"मनुष्ययज्ञः"** इति व्यपदिश्यते। **तथाच** चतुर्थाश्रमिणामप्यग्निहोत्रादिकर्मसद्भावान्न तान् प्रत्यपवर्गप्रतिषेधो युक्त इति भावः॥ ६१॥

**ननु** चतुर्थाश्रमिणां **चे**दग्निहोत्रादिकर्म विद्यते **तदा** तेषां जात्यायुर्भोगलक्षणं तत्फलमपि भविष्यति, **तथा**चापवर्गप्रतिषेधस्तदवस्थः? **तत्राह—**

**"पात्रचयान्तानुपपत्तेश्च फलाभावः"** ॥ ६२॥

त्वर्थेश्चः उक्ताशङ्कां व्यावर्तयति। फलाभावः=चतुर्थाश्रमिणां फलाभावो वेदितव्यः, **कुतः?** पात्रचयान्तानुपपत्तेः=जुह्वादीनामग्निहोत्रपात्राणां चयः प्रभृतस्य कर्मिणः पाण्यादिशरीराङ्गेषु यथाविधि विन्यासः सोऽन्ते विद्यते यस्य कर्मणः, तस्यानुपपत्तेरित्यर्थः।

**"जुहूं घृतेन पूर्णां दक्षिणे पाणावादधाति सव्य उपभृतमुरसि ध्रुवां मुखेऽग्निहोत्रहवणीम्"** (शत०१२।५।८।७) इत्यादिना हि पात्रचयः श्रूयते। तदन्तं कर्म ये तावत् कर्मिणो नियमेनानुतिष्ठन्ति ते पुण्यलोकाः जात्यायुर्भोगलक्षणं तत्फलं समश्नुवते।

**"यथाकारी यथाचारी तथा भवति, साधुकारी साधुर्भवति, पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा भवति पापः पापेन"** (बृह० ४।४।५) इत्यादिश्रुतेः । तत्रभवतां चतुर्थाश्रमिणां तु न जातु पात्रचयान्तं कर्मोपपद्यते । तेषां फलार्थित्वनिवृत्त्याऽन्तरेव पात्रादिसर्वोपकरणपरित्यागात् । ब्रह्मविदो हि ते भगवन्तः सर्वं परित्यज्य भिक्षावृत्तिमास्थिषत । सम्प्रति ते "कर्मलोपो मा भूत्" इति यद् यत् कर्म विदधते तत् सर्वं विद्यापरिपालनाय वा लोकोपसङ्ग्रहाय वा वेदितव्यम् । न चेदं कर्हिचित् फलायावकल्पते । ब्रह्मदर्शनेन क्षीणास्मतया फलं प्रसोतुमनर्हत्वात् । **किं बहुना**—यथा हि भूमिसलिलसहायं बीजमङ्कुरं जनयति तथैषणासहायं कर्मापि फलमुत्पादयति । न च चतुर्थाश्रमिणामेषणाः विद्यन्ते । ततो व्युत्थायैव प्रव्रज्याभ्युपगमात् । तथा च श्रूयते **"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन । एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद् ह स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति"** (बृह० ४ । ४ । २२ ।) इति । न चैषणाभ्यो व्युत्थितानां पुनः पात्रचयान्तं कर्म कथञ्चिद् युज्यते । **तस्मादग्निहोत्रादिकर्मसद्भावेऽपि** युक्तस्तेषां फलाभावोऽयुक्तश्चापवर्गप्रतिषेध इति भावः ॥ ६२ ॥

अथ **"क्लेशानुबन्धादपवर्गाभावः"** इति द्वितीयं पूर्वपक्षं निरस्यति—

**"सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः"** ॥ ६३ ॥

सुषुप्तस्य=सुषुप्त्यवस्थावतो देहिनः स्वप्नादर्शने=स्वप्नदुःखादर्शने क्लेशाभाववत्=यथा तस्मिन् क्लेशानुबन्धाभावः प्रतिपद्यते तथाऽपवर्गः=अपवर्गोऽपि क्लेशानुबन्धाभाववान् प्रतिपत्तव्य इत्यर्थः ।

सुषुप्तौ चेदस्य क्लेशानुबन्धो न विच्छिद्येत तदाऽवश्यं तत्र जाग्रत्स्वप्नयोरिव किञ्चिद् दुःखं दृश्येत । सति क्लेशानुबन्धे दुःखावश्यम्भावनियमात् । न च दृश्यते । तस्माद् भवति प्रतिपत्तिर्नूनं क्लेशानुबन्धाभाववती सुषुप्तिः । यथा च सुषुप्तिस्तथैवापवर्गः । दुःखाभावाविशेषात् । अतस्तत्रापि क्लेशानुबन्धाभावः प्रतिपद्यते । **किमुक्तं ?** क्लेशमूलं खलु सव दुःखम् । **"सति मूले तद्विपाको जात्यायुर्भोगाः"** (यो० २।१३) इति योगसूत्रात् । तच्च यत्र न भवति तत्रावश्यं क्लेशानुबन्धाभाव इति गम्यते । कारणाभावे सत्येव कार्य्याभावसम्भवात् । दुःखाभावश्च यथा सुषप्तौ तथाऽपवर्गे । **तस्मात्** तत्र क्लेशानुबन्धाभाव इति मन्तव्यम् । **किं बहुना** यथा सुषुप्तौ निद्रया क्लेशानुबन्धो विच्छिद्यते तथाऽपवर्गेऽपि तत्त्वज्ञानेन तद्विच्छेद उपपद्यते । **तस्माद्** यदुक्तं "क्लेशानुबन्धादपवर्गाभावः" इति, तदयुक्तमिति भावः ॥

**इदमत्र बोध्यम्**—यद्यपि सुषुप्तिवत् समाधावपि क्लेशानुबन्धो विच्छिद्यते तथापि नासौ सर्वलोकसिद्धः । सर्वलोकसिद्धं चोदाहर्तव्यमिति सुषुप्तिरेव सर्वलोकसिद्धत्वादुदाहृता । **तत्र** समाधिसुषुप्त्योः क्लेशानां विच्छेदेऽपि तद्वासनाः न विच्छिद्यन्ते, अपवर्गे तु ताः अपि विच्छिद्यन्ते इति विशेष इति ॥ ६३ ॥

अथ **"प्रवृत्त्यनुबन्धादपवर्गाभावः"** इति तृतीयं पूर्वपक्षं निराकरोति—

**"न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य"** ॥ ६४ ॥

हीनक्लेशस्य=हीनास्तत्त्वज्ञानेन विच्छिन्नाः क्लेशाः यस्य, तस्य भगवतो ब्रह्मविदश्चरमदेहस्य प्रवृत्तिः=वाग्बुद्धिशरीरारम्भः प्रतिसन्धानाय=पूर्वजन्मनिवृत्तौ पुनर्जन्मारम्भः प्रतिसन्धानं, तस्मै न=न प्रभवतीत्यर्थः ।

**यस्य** हि तत्त्वज्ञानेन क्लेशाः विच्छिद्यन्ते न तस्य भगवतो ब्रह्मदर्शिनश्चरमदेहस्य प्रवृत्तिः पुनर्जन्मारम्भाय कल्पते । तस्याः क्षीणात्मत्वेन स्प्रष्टुमप्यशक्यत्वात् । प्रागेव तु जन्मारम्भः । तद्यथाऽऽह भगवान् वाद-

रायणः **"तदधिगम उत्तरपूर्वाघयोरश्लेशविनाशौ तद्व्यपदेशात्"** (वे० ४।१।१४) इति । श्रूयतेऽपि **"उभौ उ हैवैष एते तरति नैनं कृताकृते तपतः, तदेतदृचाऽभ्युक्तम् "एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्"** (बृह० ४।४।२२ ) इति । **किमुक्तं ?** क्लेशतुषावनद्धाः खलु कर्मतन्दुलाः जन्माङ्कुराय कल्पन्ते न केवलाः । **अतो** यदुक्तं "प्रवृत्त्यनुबन्धादपवर्गाभावः" इति, तदयुक्तमिति भावः ॥ ६४ ॥

**अत्र** शङ्कते—

**"न क्लेशसन्ततेः स्वाभाविकत्वात्"** ॥ ६५ ॥

क्लेशसन्ततेः=क्लेशसन्तानस्य न=तत्त्वज्ञानेन विच्छेदो न युज्यते, कुतः? स्वाभाविकत्वात्=अनादित्वादित्यर्थः ।

**यत्तावदनादि तन्न विच्छिद्यते यथाऽऽकाशम्** । अनादिश्चेयं क्लेशसन्ततिः । अतो न तत्त्वज्ञानेन तद्विच्छेदो युक्त इति भावः ॥ ६५ ॥

**समाधत्ते—**

**"प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम्"** ॥ ६६ ॥

क्लेशसन्ततेरित्यनुवर्तते । प्रागुत्पत्तेरभावानित्यत्ववत्—दध्यादेरुत्पत्तेः प्राक् क्षीरादिषु योऽभावस्तस्यानित्यत्ववत् स्वाभाविकेऽपि=भावप्रधानो निर्देशः, अनादित्वेऽप्यनित्यत्वं=क्लेशसन्ततेरनित्यत्वं तत्त्वज्ञानेन विच्छेद इति यावदुपपद्यत इत्यर्थः ।

**यथा** ह्युत्पत्तेः प्राक् कारणे वर्तमानः कार्य्यायोगोऽनादिः सन्नपि कार्य्योत्पत्त्या विच्छिद्यते तथाऽनादिः सत्यपि क्लेशसन्ततिस्तत्त्वज्ञानेन विच्छेत्स्यते नास्ति काचिदनुपपत्तिरिति भावः ॥ ६६ ॥

**नन्वभावो विच्छिद्यते न भावः ? तत्राह—**

**"अणुश्यामताऽनित्यत्ववद्वा"** ॥ ६७ ॥

क्लेशसन्ततेः स्वाभाविकेऽप्यनित्यत्वमित्यनुवर्तते। वा=अथवाऽणुश्यामतानित्यत्ववत्—यथा स्वाभाविकत्वेऽपि पार्थिवपरमाणुश्यामताया अनित्यत्वं तथा क्लेशसन्ततेरप्यनित्यत्वमुपपद्यत इत्यर्थः।

**यथा**ऽनादिः सत्यपि पार्थिवपरमाणुश्यामता पाकेन निवर्तते तथाऽनादिः सत्यपि क्लेशसन्ततिस्तत्त्वज्ञानेन निवर्त्यते नास्ति किञ्चिदनुपपन्नं नामेति भावः॥ ६७॥

**ननु** तत्त्वज्ञानेन मिथ्याज्ञानस्य निवृत्तिरुपपद्यते न रागादीनां विरोधाभावात्? **तत्राह**—

**"न सङ्कल्पनिमित्तत्वाच्च रागादीनाम्"** ॥ ६८॥

भिन्नक्रमश्चः। रागादीनां च=रागद्वेषादीनां च न=तत्त्वज्ञानेन निवृत्तिरनुपपन्ना न, **कुतः?** सङ्कल्पनिमित्तत्वात्=सङ्कल्पहेतुत्वात् सङ्कल्पो मिथ्याज्ञानं, तन्निमित्तकत्वादित्यर्थः।

**मि**थ्याज्ञाननिमित्ताः खलु रागादयः, तत्त्वज्ञानेन निवृत्ते तस्मिन् स्वयमेव निवर्तन्ते। निमित्तापाये नैमित्तिकस्याप्यपायात्। मिथ्याज्ञाननिमित्तत्वं च रागादीनामुक्तं दर्शनान्तरे **"अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्"** (यो० २।४) इति। न च निमित्तं विरुन्धत् तत्त्वज्ञानं नैमित्तिकं न विरुणद्धीति सम्भवति। **तस्मात्** तेन मिथ्याज्ञाननिवृत्तिवद् रागादीनामपि निवृत्तिरुपपद्यते। नास्ति कश्चिद्दोष इति भावः॥ ६८॥

**प्रवृत्त्याद्यपवर्गान्तं मेयषट्कं यथाक्रमम्।**
**विस्तरेण तुरीयस्य प्रथमेऽस्मिन् परीक्षितम्॥ १॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्याद्यमाह्निकम्।**

---



# चतुर्थोऽध्यायः

## द्वितीयमाह्निकम्

**अपवर्गः** परीक्षितः । सम्प्रति तस्य **हेतुस्तत्त्वज्ञानं** परीक्षणीयम् । उपस्थितत्वात् । तच्च **मिथ्याज्ञानं** निवर्तयदपवर्गस्य हेतुर्नान्यथा । मिथ्याज्ञानं च निमित्तनैमित्तिकभेदाद् द्विविधम् । अनात्मनि शरीरादौ यदात्मज्ञानं तद् **निमित्तम्** । स्त्र्यन्नपानादौ विषये यत्सुखसाधनताज्ञानं तद् **नैमित्तिकम्** । निमित्तं प्रधानं, नैमित्तिकं गौणम् । **तत्र** पूर्वं तावद् गौणस्य नैमित्तिकस्य तस्य तत्त्वज्ञानेन निवृत्तिमुपदिशति—

**"दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः"** ॥ १ ॥

दोषनिमित्तानां=दोषाः रागादयः, तेषां निमित्तानि चेतनाचेतनात्मकाः स्त्र्यन्नपानादयो विषयाः, तेषां तत्त्वज्ञानात्="नामी सुखहेतवः" इति तत्त्वज्ञानादहङ्कारनिवृत्तिः="अहं तान् भुञ्जीय" इति सङ्कल्पहेतुत्वादहङ्कारो मिथ्याज्ञानं "नूनमेते सुखहेतवः" इति, तस्य निवृत्तिरपायो भवतीत्यर्थः ।

**यदा** खल्वयं मिथ्याज्ञानमहिम्ना चेतनाचेतनात्मकान् विषयान् सुखहेतूनभिमन्य भुञ्जीयेति सङ्कल्पयति **तदा** तेषां प्राप्तये कायेन वाचा मनसा परिस्पन्दते । परिस्पन्दमानश्च यथाकामंताननुपलभमानः सन्तप्यते । याँश्चोपलभते तत्रातुरो भूत्वा रज्यति, तद्विरोधिनश्च द्वेष्टि, तान् परिहर्तुमशक्तश्च मुह्यति । तदेवं रागादिहेतूनां तेषां यदा पुनस्तत्त्वं विजानाति "नामी सुखहेतवः" इति, तदाऽस्य मिथ्याज्ञानं निवर्तते । तन्निवृत्त्या च न तान् कर्हिचित् प्राप्तुं चेष्टते, यथाकाममप्राप्य च न सन्त-

प्यते। प्राप्तेषु च न कदाचिदनुरज्यति, न वा काँश्चिद् द्वेष्टि, न वा तान् परिहर्तुमशक्तो मुह्यति। रागादीनामभावे च न पुनरस्य शुभाशुभप्रवृत्तिरुपजायते। तस्याः अनुपजनने च न जन्म। तदभावे च दुःखाभावः। सोऽयमपवर्ग इति भावः ॥ १ ॥

**ननु** किं तद् दोषनिमित्तं ? तत्राह—

**"दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः"** ॥ २ ॥

सङ्कल्पकृताः=सङ्कल्पहेतुत्वात् सङ्कल्पो मिथ्याज्ञानं, तेन विपर्यीकृताः रूपादयः=रूपादिमुखेन दोषजनकाः विषयाः=स्त्र्यन्नपानादयश्चेतनाचेतनात्मानो विषयाः दोषनिमित्तं=रागादिदोषाणां निमित्तं वेदितव्यमित्यर्थः।

**सर्वः** खलु मिथ्याज्ञानेन विपर्य्यस्तधी रूपं पश्यन् स्त्र्यादौ रसं रसयन्नन्नपानादौ गन्धं जिघ्रदनुलेपादौ स्पर्शं स्पृशन्नम्बरादौ शब्दं शृण्वन् वाद्यादौ रज्यति, तद्विघातकाँश्च परिकल्प्य काँश्चिद् द्वेष्टि, तत्राकिञ्चित्करश्च मुह्यति। चेदस्य मिथ्याज्ञानं न भवेत् न जातु रूपं पश्यन् स्त्र्यादौ रसं रसयन्नन्नपानादौ गन्धं जिघ्रदनुलेपादौ स्पर्शं स्पृशन्नम्बरादौ शब्दं शृण्वँश्च वाद्यादौ रज्येत, न वा काँश्चित्तद्विघातकान् परिकल्प्य द्विष्यात्, न वा तान् परिहर्तुमशक्तो मुह्येत्। नहि विवेकिनः क्वचिद् रज्यन्तः कुप्यन्तो मुह्यन्तो वा दृश्यन्ते। रज्यति कुप्यति मुह्यति चायम्। तस्मात् प्रतिपद्यते नूनं मिथ्याज्ञानविपर्यीकृताश्चेतनाचेतनात्मानः स्त्र्यन्नपानादयो विषयाः दोषाणां निमित्तमिति भावः ॥ २ ॥

**ननु** दोषनिमित्तेषु चेतनाचेतनात्मसु स्त्र्यन्नपानादिविषयेषु मिथ्याज्ञानस्य किं निमित्तं? तत्राह—

**"तन्निमित्तं त्ववयव्यभिमानः"** ॥ ३ ॥

तुना निमित्तान्तरं व्यवच्छिनत्ति। अवयव्यभिमानः=अत्रावयविशब्दः कार्य्यसामान्यपरोऽपि कार्य्यविशेषमाह, सामान्येनापि विशेषस्याभिधानसम्भवात्, अवयविषु शरीरेन्द्रियमनःस्वनात्मस्वहमित्यभिमानः आत्मेति प्रत्यय इति यावत् तन्निमित्तं=तदा सङ्कल्पं परामृशति, क्वचिदेकदेशपराम-

र्थस्याप्यभ्युपगमात्, सङ्कल्पो मिथ्याज्ञानमित्युक्तम्, तस्य दोषनिमित्तेषु विषयेषु जायमानस्य मिथ्याज्ञानस्य निमित्तं कारणं वेदितव्यमित्यर्थः ।

यस्तावच्छरीरेन्द्रियमनःस्वात्मभावमध्यस्यति स एव दोषनिमित्तानां विषयाणां केषुचित् सुखसाधनतां केषुचिच्च दुःखसाधनतामध्यसितुं पारयति न तत्रानध्यस्तात्मभावः । तस्य विषयमात्रे प्राकृतत्वजड़त्वदुःखात्मकत्वानुसन्धानेनोपादेयबुद्धेरनुदयात् । नहि शरीरादितो विविक्तमात्मतत्त्वमवबुध्यमानस्य कुत्रापि विषये सुखसाधनताबुद्धिरुदेतुमर्हति । स हि भगवान् तत्त्वविदात्मानं लोकमुपासीनो न ततोऽधिकं किञ्चिदन्यत् पश्यति यत्र रज्येत् । न वा ततोऽन्यत् किञ्चिदवलोकयति यद् द्विष्यात् । दृश्यते चानात्मधियः कुत्रचिद्रागः कुत्रचिद् द्वेषः । तस्मात् प्रतिपद्यते नूनमस्ति दोषनिमित्तेषु चेतनाचेतनात्मसु स्त्र्यन्नपानादिविषयेषु वर्तमानस्य मिथ्याज्ञानस्य निमित्तमवयव्यभिमानः । तन्निवृत्तिश्च नान्तरेणात्मतत्त्वज्ञानमिति तदेव मुमुक्षुभिरार्ष्यतनयैर्यत्नतः सम्पाद्यमिति भावः ॥ ३ ॥

अत्रावयविशब्दमुपश्रुत्य प्रत्यवतिष्ठमानं **नास्तिकं** पुनः शिक्षयितुमवयविपरीक्षामवतितारयिषुः पूर्वं तावत् तदङ्गभूतं संशयमाह—

**"विद्याऽविद्याद्वैविध्यात् संशयः" ॥ ४ ॥**

एकदेशोऽप्यवयविशब्दोऽवयविनीति विपरिणम्यानुवर्तते । विद्याऽविद्याद्वैविध्यात्=उपलब्धिर्विद्या, अनुपलब्धिरविद्या, तयोर्द्वैविध्यात् सदसद्विषयत्वेन द्विप्रकारत्वात् संशयः=किमस्ति परमाणुपुञ्जव्यतिरिक्तोऽवयवी कश्चिदाहोस्विन्नास्तीत्यवयविनि संशय इत्यर्थः ।

यदुपलभ्यते तत् क्वचित् सद् दृष्टं क्वचिच्चासद् यथोदकं तडागे सद् मरुमरीचिकायां चासद्, यच्च नोपलभ्यते तदपि क्वचित् सद् दृष्टं क्वचिच्चासद् यथा चिरनिखातं भूमौ निध्यादि सद्, भूतले दृश्यमाने तत्तुल्योपलम्भयोग्यं घटादि चासद् । अवयव्यप्युपलभ्यते । अतस्तेनापि सता वाऽसता वाऽवश्यं भवितव्यम् । नो वा चेदुपलभ्यते तदाऽपि तेन सता वाऽसता वाऽवश्यं भवितव्यम् । न चान्तरेण प्रमाणं किञ्चिन्निर्धार-

यितुं शक्यते । तस्मादस्ति कश्चिदवयवी परमाणुपुञ्जव्यतिरिक्तः आहो-स्विन्नास्तीति भवति तत्र संशय इति भावः ॥

तत्र परमाणुपुञ्जव्यतिरिक्तो नास्ति कश्चिदवयवीति पूर्वः पक्षः, अस्ति स इति सिद्धान्त इति विवेकः ॥ ४ ॥

संशय उक्तः सम्प्रति सिद्धान्ती तदनुपपत्तिमाह—

"तदसंशयः पूर्वहेतुप्रसिद्धत्वात्" ॥ ५ ॥

तदसंशयः=तत्रावयविनि संशयो नोपपद्यते, कुतः ? पूर्वहेतुप्रसिद्ध-त्वात्=प्रकर्षो विशेषः, सिद्धिरुपलब्धिः, पूर्वोक्तैर्हेतुभिस्तस्य प्रकर्षेण विशेषेण सिद्धत्वादुपलब्धत्वात् प्रत्यक्षत्वादिति यावदित्यर्थः ।

तत्र हि संशयो भवति यत् सामान्यत उपलभ्यमानमपि विशेषतो नोपलभ्यते तद्यथोक्तं दर्शनान्तरे "सामान्यप्रत्यक्षाद् विशेषा-प्रत्यक्षाद् विशेषस्मृतेश्च संशयः" (वै० २ । २ । १७ ) इति। नचेदृशोऽवयवी । तस्य द्वितीयाध्यायोक्तहेतुभिर्विशेषत उपलब्धत्वात् । नहि विशेषत उपलब्धं किञ्चित् क्वचित् संशय्यते । तस्मादनुपपन्नोऽवय-विनि संशय इति भावः ॥ ५ ॥

अत्र पूर्वपक्षी बाधकमाशङ्कते—

"वृत्त्यनुपपत्तेरपि तर्हि न संशयः" ॥ ६ ॥

तर्हि=चेत् पूर्वहेतुप्रसिद्धत्वादवयविनि संशयो नोपपद्यते तदा वृत्त्य-नुपपत्तेरपि=अवयविनोऽवयवेषु वृत्त्यनुपपत्तेरपि संशयः=अवयविनि संश-यो न= नोपपद्यत इत्यर्थः ।

किमवयवेषु वर्तमानोऽवयवी प्रत्यवयवं कार्त्स्न्येन वर्ततेऽथवैकदेशेन ?। न तावदाद्यः विषमपरिमाणत्वात् । अवयवः खल्वणुपरिमाणः अवयवी च महत्परिमाणः । नहि महानणौ कथञ्चिद् वर्तितुमर्हति । नापि द्वितीयः एकदेशेनावयवान्तराभिधानेऽनवस्थापातात् । यत्र वर्तते तदभिधाने चात्माश्रयप्रसङ्गात् । तथा च वृत्तित्वानुपपत्त्याऽवयव्यसिद्धेरनुपपन्नः संशयः, सिद्धे तदभ्युपगमादिति भावः ॥ ६ ॥

नन्ववयवेष्ववयवी मा वर्तिष्ट ततोऽन्यत्र वर्तनात् संशय उपपत्स्यते ? तत्राह—

**"पृथक् चावयवेभ्योऽवृत्तेः"** ॥ ७ ॥

पूर्वत्रैवायं हेतुरिति सूचनाय चकारः । अपि न संशय इत्यनुवर्तते । अवयवेभ्यः पृथग्=अन्यत्रावृत्तेः=अवयविनोऽवृत्तेरपि संशयो नोपपद्यते इत्यर्थः ।

**यथा** ह्यवयविनोऽवयवेषु वृत्तिर्नोपपद्यते **तथा**ऽन्यत्रापि नोपपद्यते । अवयवित्वहानात् । अवयवेषु वर्तनाद्ध्यवयवीति व्यपदिश्यते चेदयमवयवेषु न वर्तेत नावयवीति व्यपदिश्येत । नह्यवयवेभ्योऽन्यत्र वर्तमानोऽवयवीति व्यपदेष्टुं शक्यते । **तस्मा**दन्यत्रापि वृत्तित्वानुपपत्त्याऽवयव्यसिद्धेरनुपपन्नः संशय इति भावः ॥ ७ ॥

नन्ववयविनोऽवयवेभ्यो भिन्नत्वे तत्र वा ततोऽन्यत्र वा वृत्तिर्मोपपद्यताम्, अभिन्नत्वे तूपपत्स्यते । तादात्म्येन स्वस्मिन् स्ववृत्तित्वस्याभ्युपगमात् । **तथा च** न तदसिद्ध्या संशयानुपपत्तिः ? तत्राह—

**"न चावयव्यवयवाः"** ॥ ८ ॥

अवयवी=विवादगोचरोऽवयव्यवयवाः=अवयवाभिन्नो न च=न च सम्भवतीत्यर्थः ।

यस्तावदवयवानां धर्मः **सो**ऽवयवीति व्यवह्रियते । चेदेष तेषां धर्मो न भवेत् न जात्ववयवीति व्यवह्रियेत । धर्मधर्मिभावश्च भेदनियतो नाभेदे सम्भवति । तादात्म्यं च न तन्नियामकम् । स्वस्य स्वधर्मत्वाभावात् । **अतो**ऽभेदासम्भवेन वृत्तित्वानुपपत्त्याऽवयव्यसिद्धेस्तदवस्था संशयानुपपत्तिरिति भावः ॥ ८ ॥

समाधत्ते—

**"एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः"** ९

अप्रश्नः=अवयवी प्रत्यवयवं कार्त्स्न्येन वर्तते किंवैकदेशेनेति वृत्तिगोचरो विकल्पः प्रश्नः, स च नोपपद्यते, **कुतः** ? एकस्मिन्=एकस्मिन्नवय-

वनि भेदाभावात्=भेदोऽनेकत्वं तदभावाद् भेदशब्दप्रयोगानुपपत्तेः=भेद-विषययोः कार्त्स्न्यैकदेशशब्दयोः प्रयोगस्यानुपपत्तेरित्यर्थः ।

अनेकस्याशेषताभिधानं हि कार्त्स्न्यम्, अनेकत्वे सति कस्य चिदभिधानं चैकदेशः । न चैतयोः कार्त्स्न्यैकदेशशब्दयोरवयविनि प्रयोग उपपद्यते । तस्यैकत्वेनानेकत्वाभावात् । नहि यत्रानेकधा विभज्यते तत्र भेदविषयौ शब्दौ कथञ्चित् प्रयोक्तुं शक्येते । भेदविषयौ च कार्त्स्न्यैकदेशशब्दौ वि-स्पष्टौ । तस्मात् तयोरवयविनि प्रयोगोऽनुपपन्नः । तदनुपपत्त्या चावयवी प्रत्यवयवं कार्त्स्न्येन वर्ततेऽथवैकदेशेनेति प्रश्नोऽप्यनुपपन्नः । तथा च न तदसिद्धिरिति भावः ॥ ९ ॥

नन्ववयव्येकदेशः कृत्स्नोऽवयवीति लोकसिद्धोऽयं प्रयोगः, तदुपपत्त-येऽवयवान्तरसद्भावोऽवश्यं वक्तव्यः, तथा चोपपन्नः प्रश्नः ? तत्राह—

**"अवयवान्तरभावेऽप्यवृत्तेरहेतुः" ॥ १० ॥**

अहेतुः=प्रश्नोपपत्तावयवान्तरसद्भावो हेतुर्नयुज्यते, कुतः? अवयवा-न्तरभावेऽपि=अवयवान्तरसद्भावेऽप्यवृत्तेः=अवयविनोऽवयवेषु वृत्त्यनुप-पत्तेरित्यर्थः ।

चेदवयविनोऽवयवान्तराणि कल्प्येरन् तथाऽपि तस्यावयवेषु वृत्तिर्नो-पपद्यते । तन्नियामकसम्बन्धाभावात् । साक्षात्सम्बन्धो हि वृत्तिनिया-मकः । नह्यस्यावयवैः साक्षात्सम्बन्धो विद्यते । अवयवान्तरैर्विद्यमानः सम्बन्धस्तु न साक्षात्सम्बन्धः किन्तु परम्परासम्बन्धः । स च न वृत्ति-नियामकः । तथा च व्यर्थमवयवान्तरकल्पनं प्रयोजनासिद्धेः । लौकिक-प्रयोगस्तु भाक्तो न तत्प्रयोजनमुपपद्यते । अतस्तदवस्था प्रश्नानुपपत्तिः । तदनुपपत्त्या च न तदसिद्धिरिति यथोपलम्भमवयवी तावदभ्युपगन्तव्यः । उपलब्धस्य च तस्य यथाऽऽश्रयाश्रितभावसम्बन्धेन समवायेन समुदिता-वयवेषु वृत्तिस्तथोपपादितं **"सर्वाग्रहणमवयव्यसिद्धेः"** (न्या० २।१।३४ ) इत्यत्राधस्तादिति सर्वमनवद्यमिति भावः ॥ १० ॥

अथावयविनः परमाणुपुञ्जात्मकत्वेऽप्युपलब्धिमाशङ्कते—

**"केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः" ॥ ११ ॥**

केशसमूहे=केशपुञ्जे तैमिरिकोपलब्धिवत्=नेत्ररोगभेदोऽत्र तिमिरं, तदस्त्यस्यासौ तैमिरिकः, तस्य तिमिरग्रस्तचक्षुषः पुरुषस्य चाक्षुषोपलब्धिवत् तदुपलब्धिः=तस्यावयविनाम्नः परमाणुपुञ्जस्य चाक्षुषोपलब्धिर्वेदितव्येत्यर्थः ।

**यथा** हि तैमिरिकस्य पुंसः सन्निकृष्टस्याप्येकैकस्य केशस्य चक्षुषोपलब्धिर्न भवति तत्पुञ्जस्य तु भवति **तथै**कैकस्य परमाणोश्चाक्षुषोपलब्ध्ययोग्यत्वेऽपि तत्पुञ्जस्य चक्षुषोपलब्धिः सम्भवति । **किमुक्तं**? यथा हि तैमिरिकेणैकैकः केशस्तावन्नोपलभ्यते तत्समूहस्तूपलभ्यते तथैकैकः परमाणुर्यद्यपि न केन चिदुपलभ्यते तथापि तत्समूहः सर्वैरुपलब्धुं शक्यते नास्ति काचिदनुपपत्तिः । **अतो** घटः पटो गौरश्व इति येयमुपलब्धिर्न साऽवयविगोचरा **किन्तु** परमाणुपुञ्जगोचरेति नास्ति तद्व्यतिरिक्तः कश्चिदवयवीति भावः ॥ ११ ॥

**समाधत्ते—**

**"स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः" ॥ १२ ॥**

इन्द्रियस्य=तत्तदिन्द्रियस्य स्वविषयानतिक्रमेण=स्वस्वविषयानतिलङ्घनेन पटुमन्दभावात्=प्रकृष्टनिकृष्टभावाद् विषयग्रहणस्य=तत्तद्विषयोपलब्धेस्तथाभावः=पटुमन्दभावः सम्भवति न=नचाविषये=स्वोपलब्ध्ययोग्ये पदार्थे प्रवृत्तिः=उपलब्धिजननमित्यर्थः ।

**एष** खल्विन्द्रियाणां स्वभावः प्रकृष्टानि वा तानि भवेयुः निकृष्टानि वा न जात्वविषये प्रवर्तन्ते न वा कर्हिचित् स्वविषयेभ्यः प्रच्यवन्ते । स्वविषयानतिलङ्घनेनैव तेषां प्रकृष्टनिकृष्टभावनियमात् । **नहि** प्रकृष्यमाणं चक्षुः स्वविषयमतिलङ्घ्याविषये शब्दे क्वचिदुपलब्धिं जनयति निकृष्यमाणं वा स्वविषये रूपे न तामुत्पादयति । **भवति** चैतावानेनयोर्विशेषः प्रकृष्यमाणेन तेन सूक्ष्मोऽपि पदार्थ उपलभ्यते निकृष्यमाणेन च स्थूलः एव न सूक्ष्मः । न च केशः सूक्ष्मः सन्नपि चक्षुर्विषयो न विद्यते केशस-

मूहवदेकस्यापि तस्यातैमिरिकेण चाक्षुषोपलब्धेर्दृष्टत्वात् । दृष्टं ह्यतैमिरिको यथा केशसमूहं चक्षुरिन्द्रियेणोपलभते तथैकमपि केशमुपलभते । परमाणुस्तु न केशवत् कस्यापीन्द्रियविषयो विद्यते । न चाविषये तस्मिन् प्रकृष्टं प्रकृष्टतरं प्रकृष्टतमं वाऽपि चक्षुरिन्द्रियं प्रवर्तितुमर्हति । न चैकस्यानैन्द्रियकत्वे तत्समूहः कथञ्चिदैन्द्रियकः सम्पद्यते । समूहस्य प्रत्येकानतिरेकात् । **किमुक्तम् ?** इन्द्रियप्रवृत्तिप्रयोजकं हि महत्त्वम् । न च तत् केशवत् परमाणौ वर्तते । न च प्रत्येकस्मिन्नवर्तमानं समूहे वृत्त्यै कल्पते । न च तद्वृत्तिमन्तरेणावयविनाम्नः परमाणुपुञ्जस्योपलब्धिर्युज्यते । भवति चावयविनो "घटः पटो गौरश्वः" इति चाक्षुषोपलब्धिः । **तस्माद**वगम्यतेऽस्ति तावत् परमाणुपुञ्जव्यतिरिक्तः कश्चिदवयवीति भावः ॥ १२ ॥

अत्रानिष्टमाशङ्कते—

**"अवयवावयविप्रसङ्गश्चैवमा प्रलयात्" ॥ १३ ॥**

एवं=परमाणुपुञ्जव्यतिरिक्तावयविस्वीकारेऽवयवावयविप्रसङ्गः=अवयवावयविप्रसक्तिराप्रलयात्=अभावः प्रलयः, तत्पर्यन्तं वक्तव्येत्यर्थः ।

**यथा** ह्यवयविपक्षे घटपटादयः स्वावयवावयविनः **तथा** तदवयवाः अपि स्वावयवावयविनो वक्तव्याः । तदवयवाः अपि च स्वावयवावयविनः । एवं प्रत्यावर्तमानस्यास्यावयवावयविप्रसङ्गस्य क्वचिद् विश्रामोऽभ्युपगन्तव्यः अन्यथाऽनवस्थापातात् । यत्र विश्रामस्तत्राप्येवं प्रसङ्ग इति प्रलये तद्विश्रामो व्यवतिष्ठते । प्रलयश्च सर्वभावानां विनाश इति सर्वतन्त्रसिद्धान्तः । **तथा च** पुनः सृष्ट्यनुत्पत्तिः । कस्यापि मूलकारणस्याभावादिति भावः ॥ १३ ॥

समाधत्ते—

**"न प्रलयोऽणुसद्भावात्" ॥ १४ ॥**

अवयवावयविप्रसङ्गस्येति विपरिणम्यानुवर्तते । प्रलयः=अवयवावयविप्रसङ्गस्य विश्रामस्थानं प्रलयो न=न भवति, **कुतः ?** अणुसद्भावात्=मूलकारणपरमाणुसद्भावाभ्युपगमादित्यर्थः ।

न खलु सर्वभावानां विनाशः प्रलयः, निरवयवभावस्य विनाशासम्भवात् अपि च? सावयवभावानाम्। ते ह्यसमवायिकारणविनाशेन विनश्यन्तो मूलकारणं प्रकृतिमपियन्ति। यस्माद् यस्योत्पत्तिस्तत्रैव तदप्ययस्यौचित्यात्। नहि मृद्विकाराः घटशरावादयो विनश्यन्तो मृदं सुवर्णविकाराः रुचकादयो वा विनश्यन्तः सुवर्णं नापियन्ति। मूलकारणं च तेषां प्रकृतिनामानः परमाणवो निरवयवाः न तन्मूलकारणं किञ्चिद् विद्यते। अतो न तत्रावयवावयविभावप्रसङ्गः। मूलकारणशून्यत्वं च तस्योक्तं दर्शनान्तरे **"मूले मूलाभावादमूलं मूलम्"** (सां० १।६७) इति। न चेदृक्प्रलये प्रमाणाभावः **"नासदासीन्नो सदासीत्तदानीम्"** (ऋ० ८।७।१७।१) इत्यादिमन्त्रजातस्य तत्र प्रमाणत्वात्। अत्र हि कार्य्यमात्रस्य मूलकारणे प्रकृतावप्ययमाम्नाय तस्याः पुनर्भगवता जगदधिपतिना ब्रह्मणा साकमप्राधान्येनावस्थानं स्पष्टमाम्नायते। तथा च सर्वभावानां प्रलयेऽपि यन्न प्रलीयते मूलकारणाभावात् तदेव मूलकारणं परमाणवाख्या प्रकृतिरवयवावयविभावप्रसङ्गस्यास्य विश्रामस्थानमिति न पुनः सृष्टयनुत्पत्तिः। तस्य प्रलयेऽपि सद्भावादिति भावः॥ १४॥

**ननु कोऽयं परमाणुः? तत्राह—**

**"परं वा त्रुटेः" ॥ १५॥**

अनास्थायां वाकारः। त्रुटेः=त्रसरेणोः परं=द्वित्रिपददूरं ततो वा परं यत्रावयवावयविधारा विश्राम्यति यच्च नितान्तसूक्ष्मं निरवयवं द्रव्यं तदेव वयं परमाणुमाचक्ष्महे इत्यर्थः।

यस्तावद् गवाक्षान्तर्गतसूर्य्यकिरणेषु दोधूयमानो रजःकणो दरीदृश्यते स एव त्रसरेणुरिति परिभाष्यते। त्रुटिस्त्रसरेणुरिति चानर्थान्तरम्। एतमेव **योगिनो** लाघवप्रियाः केचिद् **वैशेषिकैकदेशिनश्च** परमाणुरिति सङ्गिरन्ते, तं च **वैदिकाः** परमार्थतः परमाणुं न निश्चिक्युरिति सांख्याः **"नाणुनित्यता तत्कार्य्यत्वश्रुतेः"** (सां० ५।२७)

"**न निर्भागत्वं कार्य्यत्वात्**" (सां० ५ । ९९) इति सूत्राभ्यां तन्नित्यत्वनिरवयवत्वे प्रत्याचक्षते। वैदिकानां च सर्वेषां तैत्तिरीयछान्दोग्योक्तक्रमेणात एव पञ्चमहाभूतसृष्टिरुपक्रम्यते । अस्य च त्रसरेणोर्यत्कारणं द्रव्यं तदेव द्व्यणुकमिति व्यपदिश्यते । सांख्ययोगवेदान्तेषु चैतदेव तन्मात्रनाम्ना भूतसूक्ष्मनाम्ना च परिभाष्यते। अस्य द्व्यणुकस्य च यत्कारणं निरवयवं द्रव्यं स एव परमाणुः । **किमुक्तम्?** अवयवक्रियाविभागादिन्यायेन विभज्यमानस्य स्थूलकार्य्यस्य लोष्ठादेरुत्तरमुत्तरमल्पतरतमादिभावो यत्र निवर्तते यतश्च नापरं किञ्चिदल्पतमं विद्यते यःखलु परमोऽल्पीयान् स एव निरवयवं द्रव्यं "**परमाणुः**" इति भावः ॥१५॥

अत्र सर्वाभाववादी **नास्तिकः** प्रत्यवतिष्ठते—

"**आकाशव्यतिभेदात् तदनुपपत्तिः**" ॥ १६ ॥

तदनुपपत्तिः=तदाऽणुसद्भावं परामृशति, प्रलये परमाणुसद्भावो नोपपद्यते, **कुतः?** आकाशव्यतिभेदात्=आकाशस्यान्तःसमावेशो व्यतिभेदः, तस्मात्=आकाशेन व्यतिभिन्नत्वादित्यर्थः ।

**यत्** खल्वाकाशेन व्यतिभिद्यते **तत्** सावयवं **यथा** घटादि । व्यतिभिद्यते चाकाशेन परमाणुः। अतस्तेनापि सावयवेनावश्यं भवितव्यम्। सावयवस्य च प्रलये ध्रुवो विनाशः। तस्मादनुपपन्नस्तत्राणुसद्भाव इति भावः१६

**ननु** न परमाणुराकाशेन व्यतिभिद्यते? तत्राह—

"**आकाशासर्वगतत्वं वा**" ॥ १७ ॥

वा=अथवाऽऽकाशासर्वगतत्वम्=आकाशस्य सर्वगतत्वं न स्यादित्यर्थः।

**आकाशं** चेत् परमाणुं न व्यतिभिनत्ति, **किमुक्तं?** परमाणोरन्तर्नास्ति चेदाकाशं **तदा** नैतत् सर्वगतं स्यात्। अस्ति च सर्वगतमाकाशम्। **तस्मात्** सावयवः परमाणुर्न निरवयव इति भावः ॥ १७ ॥

**समाधत्ते—**

"**अन्तर्बहिश्च कार्य्यद्रव्यस्य कारणान्तरवचनादकार्य्ये तदभावः**" ॥ १८ ॥

अन्तर्बहिश्च=बहिरिति दृष्टान्तार्थं, बहिरन्तश्च कार्य्यद्रव्यस्य=सावयवद्रव्यस्य भवति, कुतः? कारणान्तरवचनात्=बहिरन्तःशब्दाभ्यां कार्य्यादन्यस्यावयवलक्षणकारणविशेषस्याभिधानात्, अतोऽकार्य्ये=निरवयवे द्रव्ये तदभावः=बहिरन्तरभाव इत्यर्थः ।

अन्तरिति ह्यवयवान्तरैः पिहितोऽवयवविशेषोऽभिधीयते, बहिरिति च व्यवधायकोऽव्यवहितः । सच कार्य्यद्रव्यस्य घटपटादेरेव सम्भवति नाकार्य्यद्रव्यस्य परमाणोः । तस्य निरवयवत्वात् । नहि निरवयवद्रव्ये तस्मिन् बहिरितिवदन्तरित्युपपद्यते । **तस्माद्** "आकाशव्यतिभेदात्तदनुपपत्तिः" इति यदुक्तं तदयुक्तमिति भावः ॥ १८ ॥

**ननु** कथं तर्हि सर्वगतमाकाशं? तत्राह—

**"शब्दसंयोगविभवाच्च सर्वगतम्"** ॥ १९ ॥

चस्त्वर्थो व्यतिभेदं व्यवच्छिनत्ति । शब्दसंयोगविभवात्=शब्दवन्मूर्त्तद्रव्यसंयोगानां विभवात्—**सोपसर्गाद् भवतेरच्**, विभुभावात् सार्वत्रिकत्वात् सर्वगतं=सर्वगतमाकाशमित्यर्थः ।

**यथा** हि शब्दाः आकाशे विभवन्ति **तथा** मूर्त्तद्रव्यसंयोगा अपि तत्र विभवन्ति। न च तत् किञ्चिन्मूर्त्तद्रव्यमुपलभ्यते यदाकाशेन न संयुज्यत । न च शब्दवन्मूर्त्तद्रव्यसंयोगानां विभुभावोऽन्तरेणाकाशस्य सर्वगतत्वमुपपद्यते । **तस्मात्** सर्वमूर्त्तद्रव्यसंयोगात् सर्वगतमाकाशं न जातु व्यतिभेदादिति भावः ॥ १९ ॥

**ननु** सर्वगतं चेदाकाशं **तदा** कथमिदं गतिमता प्रतिघातिना द्रव्येणोदकमिव न व्यूह्यते गतिमच्च तद्द्रव्यं न तेन विष्टभ्यते? **तत्राह**—

**"अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः"** ॥ २० ॥

सर्वगतत्वेन धर्मान्तरसमुच्चयाय चकारः । अव्यूहाविष्टम्भविभुत्वानि=प्रतिहतस्य परावर्तनं व्यूहः, तद्भिन्नोऽव्यूहः, उत्तरदेशगतिप्रतिबन्धो विष्टम्भः, तद्भिन्नोऽविष्टम्भः, सर्वमूर्त्तद्रव्यसयोगित्वं विभुत्वम्, अव्यूहश्चा-

विष्टम्भश्च विभुत्वं च तान्येतान्याकाशधर्माः=आकाशस्यासाधारणा धर्मा वेदितव्या इत्यर्थः ।

**तद्धि** द्रव्यं गतिमता प्रतिघातिना द्रव्येण प्रतिहन्यमानं व्यूहान्तरमापद्यते गतिमच्च प्रतिघाति द्रव्यं विष्टभ्नाति **यत्** सस्पर्शं स्याद् यथोदकम् । आकाशं च निःस्पर्शम् । न च सस्पर्शे द्रव्ये दृष्टाः धर्माः निःस्पर्शे तस्मिन्नाशङ्कितुमपि शक्यन्ते । **तस्मा**दाकाशस्य सर्वगतत्वेऽपि न कश्चिद्दोष इति भावः ॥ २० ॥

**पुनः** शङ्कते—

**"मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः"** ॥ २१ ॥

चस्त्वर्थः शङ्कान्तरं प्रवर्तयति । मूर्तिमताम्=अत्रासर्वगतद्रव्यपरिमाणं मूर्त्तिः, सा विद्यते येषां ते तथा, तेषां परिछिन्नपरिमाणानां द्रव्याणां संस्थानोपपत्तेः=अवयवसन्निवेशविशेषः संस्थानं, तस्योपपत्तेः सिद्धेरवयवसद्भावः=परमाणोरवयवसद्भाव इत्यर्थः ।

**ये** खलु मूर्त्तिमन्तः पदार्थाः, **ते** संस्थानिनो दृष्टाः **यथा** गोघटादयः । परमाणुरपि मूर्त्तिमान् परिछिन्नपरिमाणत्वात् । अतस्तेनापि संस्थानिनाऽवश्यं भवितव्यम् । संस्थानं चावयवसन्निवेशविशेषत्वात् सावयवत्वे सत्युपपद्यते न निरवयवत्वे । **तस्माद्** भवत्यवगतिरस्ति तावत् परमाणोरवयवसद्भावः इति भावः ॥ २१ ॥

हेत्वन्तरमाह—

**"संयोगोपपत्तेश्च"** ॥ २२ ॥

पूर्वत्रैवायं हेतुरिति सूचनाय चकारः । अवयवसद्भाव इत्यनुवर्तते । संयोगोपपत्तेः=द्व्यणुकोत्पत्तिहेतुपरमाणुद्वयसंयोगोपपत्तेः परमाणोरवयवसद्भावोऽवगम्यत इत्यर्थः ।

द्व्यणुकादीनामुत्पत्तये तावत् परमाणुद्वयसंयोगोऽवश्यं वक्तव्यः । स च परमाणोः सावयवत्वे सत्युपपद्यते नान्यथा । तस्याव्याप्यवृत्तित्वेन किञ्चिद्देशावच्छेदेनैव सम्भवात् । नहि संयोगः क्वचिद् व्याप्यवृत्तिर्दृष्टि-

पथमवतरति । नचाव्याप्यवृत्तिरन्तरेण किञ्चिदवच्छेदकं सम्भवति । न चावच्छेदको देश ऋतेऽवयवादन्यः कश्चित् सङ्गच्छते । तस्माद्भवत्यवगतिरस्ति परमाणोरवयवसद्भाव इति । **किमुक्तं?** योऽयं द्व्यणुकोत्पत्तिहेतुरेकस्य परमाणोः परमाण्वन्तरेण संयोगः, स च व्याप्यवृत्तिर्वाऽव्याप्यवृत्तिर्वा । **व्याप्यवृत्तिश्चेत्?** तदा परमाणुद्वयस्य समानदेशता प्रसज्येत । सा च प्रथिमविरोधिनीति तत्कार्य्यं द्व्यणुकोऽपि परमाणुरेव स्यात् न जातु तदपेक्षया पृथुतामियात् । भवति च कारणापेक्षया पृथु कार्य्यम् । अव्याप्यवृत्तिश्चेत्? तदा सिद्धः परमाण्ववयवसद्भावः । तं विना तादृक्संयोगानुपपत्तेः । तथा च **प्रयोगः** परमाणुः सावयवः संयोगित्वात् घटादिवदिति भावः ॥ २२ ॥

**समाधत्ते—**

**"अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः" ॥ २३ ॥**

अप्रतिषेधः=परमाणुनिरवयवत्वप्रतिषेधो नोपपद्यते, **कुतः?** अनवस्थाकारित्वात्=अनवस्थाहेतुत्वादनवस्थानुपपत्तेश्च=अनवस्थायाश्चानुपपत्तेरित्यर्थः ।

**परमाणुश्चेत्** सावयवोऽभ्युपगम्येत **तदा**ऽवयवधारायाः कुत्राप्यविश्रान्तेरनवस्था प्रसज्येत, न च सा कथञ्चिदुपपद्यते । मेरुसर्षपयोः साम्यप्रसङ्गात् । तन्मा प्रसांक्षीदिति कुत्रापि तद्विश्रान्तिरभ्युपगन्तव्या । यत्र च विश्रान्तिरभ्युपगम्यते स एवास्माकं निरवयवः **परमाणुः** । न च संयोगानुपपत्तेः सावयवः स इति युक्तं भाषणम् । उभयथाऽपि दोषाभावात् । प्रदेशवतो द्रव्यस्य हि प्रदेशवता द्रव्येण संयोगोऽव्याप्यवृत्तिर्भवति न निष्प्रदेशस्य द्रव्यस्य निष्प्रदेशेन द्रव्येण । परमाणुश्च निष्प्रदेशं द्रव्यम् । अतः कथं तत्संयोगोऽव्याप्यवृत्तिर्भवेत् । **नच** व्याप्यवृत्तित्वे परमाणुद्वयस्य समानदेशताप्रसक्तौ द्व्यणुकप्रथिमानुपपत्तिरिति चारु भाषणम् । संयोगेन जायमानायाः समानदेशतायाः प्रथिमापरिपन्थित्वात् । समवायेन जायमाना हि पदार्थानां समानदेशता स्थौल्यपरिपन्थिनी भवति न संयोगेन । नहि कुण्डसमानदेशता बदराणां स्थौल्यं विरुणद्धि । समवायेन

जायमाना तु स्थौल्यपरिपन्थिनी दृश्यते । गन्धरसरूपस्पर्शानां समानदेशत्वेऽपि स्थौल्यानारम्भकत्वात् । नच परमाणू क्वचित् समवेतो येन समवायेन तत्समानदेशता कल्प्येत । संयोगेन भवन्त्या च तया न तदारब्धस्य द्व्यणुकस्य प्रथिमा विरुध्यते । अतस्तस्य व्याप्यवृत्तित्वेऽपि नास्ति कश्चिद्दोषः । अस्तु वाऽव्याप्यवृत्तिस्तत्संयोगः । न च तस्य किञ्चिद्देशावच्छेदेन सम्भवात् परमाणोः सावयत्वापत्तिरिति साध्वी कल्पना । तमःप्रकाशसंयोगे व्यभिचारात् । नहि तमःप्रकाशौ सावयवौ । भवति चाव्याप्यवृत्तिस्तत्संयोगः । सम्भवन्ति वा दिश इव परमाणोरप्यौपाधिकाः पूर्वपश्चिमादयः प्रदेशास्तदवच्छेदेन संयोगे न किञ्चिद् विरुध्यते । वयं तु मूर्त्तत्वप्रयुक्तमेव तत्संयोगमातिष्ठामहे न सावयवत्वप्रयुक्तम् । अतः संयोगस्याव्याप्यवृत्तित्वेऽपि न किञ्चिद् दूषणमवतरति । तस्मान्निरवयव एव परमाणुर्न जातु सावयव इति भावः ॥ २३ ॥

**सम्प्रति** प्रलयेऽपि निरवयवपरमाणुसिद्धिमसहमानो **विज्ञानवादी** प्रत्यवतिष्ठते—

**"बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः"** ॥२४॥

तुना पूर्वपक्षान्तरं सूच्यते । तन्त्वपकर्षणे=तन्तूनामपकर्षे पटसद्भावानुपलब्धिवत्=पटस्य सद्भावो याथात्म्यं, तस्योपलब्धिर्यथा न भवति तथा भावानां=परमाणुपर्य्यन्तानां घटप्रभृतिपदार्थानां बुद्ध्या=तत्त्वविषयिण्या धिया विवेचनात्=याथात्म्यावधारणाद् याथात्म्यानुपलब्धिः=याथात्म्यस्योपलब्धिर्न भवति, तस्मात् तदनुपलब्धिः=तेषां भावानां "घटः कपालः शर्करा" इत्यादिका येयमुपलब्धिः सा नोपलब्धिः किन्तूपलब्ध्याभासो मिथ्योपलब्धिरिति यावदित्यर्थः ।

**यथा** हि तन्त्वपकर्षणे तन्तुभ्यो व्यतिरिक्तः कश्चित् पटो याथात्म्येन नोपलभ्यते तन्तवश्चांश्वपकर्षणे **तथा** बुद्ध्या विविच्यमानाः घटप्रभृतयः पदार्थाः अपि याथात्म्येन नोपलभ्यन्ते । चेदमी याथात्म्येन वर्तेरन्

तदा कपालादिव्यतिरेकेण गौरिवाश्वव्यतिरेकेणावश्यमुपलभ्येरन् । न चोपलभ्यन्ते । नहि कपालव्यतिरेकेण घटः क्वचिदुपलभ्यते । कपालश्च शर्कराव्यतिरेकेण, शर्करा च मृच्चूर्णव्यतिरेकेण । **तदेवं** परमाणुपर्य्यन्तेषु सर्वपदार्थेषु बुद्ध्या विविच्यमानेषु याथात्म्यानुपलब्धेर्न बाह्यं वस्तु स्थवीयो वा क्षोदीयो वा किञ्चिदस्तीति गम्यते । न च तदभावे जायमानास्तद्गोचराः उपलब्धयो यथार्थाः सम्पद्यन्ते । जायन्ते च तद्गोचरास्ताः । **तस्माद्** भवति प्रतिपत्तिर्नूनमेताः स्वाकारमबाह्यं बाह्यतयाऽऽलम्बमानाः मिथ्याभूता इति तदपरपर्य्यायं विज्ञानमेवैकं सत्यमिति भावः ॥ २४ ॥

**समाधत्ते—**

**"व्याहतत्वादहेतुः" ॥ २५ ॥**

अहेतुः="बुद्ध्या विवेचनात्" इत्ययमहेतुः, **कुतः?** व्याहतत्वात्=व्याघातदोषदुष्टत्वादित्यर्थः ।

**यया** खलु बुद्ध्या विविच्यमानाः पदार्थाः याथात्म्येन नोपलभ्यन्ते **सा** किं यथार्था, आहोस्विदयथार्थेति वक्तव्यम् । **यथार्था** चेत्? तदा तस्याः एव याथात्म्येनोपलब्धेः सर्वभावयाथात्म्यानुपलब्धिरिति व्याहतम् । **अयथार्था** चेत्? तदा सुतराम् । अयथार्थया तया कस्याप्ययाथात्म्यस्योपलब्धुमशक्यत्वात् । **किंबहुना** यदिदं बुद्ध्या विवेचनं भावानां तत् किं निरवधिकम्, आहोस्वित्सावधिकम् । निरवधिकं चेत्? तदाऽनुपपन्नं विवेचनम् । तस्य सावधिकत्वनियमात् । नहि तन्तूननवधिकृत्य पटो बुद्ध्या विवेक्तुं शक्यते । सावधिकं चेत्? तदा योऽसाववधिस्तस्यैव याथात्म्येनोपलब्धेः सर्वभावयाथात्म्यानुपलब्धिरिति पुनरपि व्याहतम् । **किमुक्तं?** चेद् बुद्ध्या विवेचनं भावानां तदा न सर्वभावयाथात्म्यानुपलब्धिः । अथ सर्वभावयाथात्म्यानुपलब्धिस्तदा न बुद्ध्या विवेचनं भावानाम् । व्याहतत्वात् । नहि बुद्ध्या विवेचनं च सर्वभावयाथात्म्यानुपलब्धिश्चेति न व्याहन्यते । न च बुद्ध्या विवेचने पटोऽपि तन्तुभ्यो

व्यतिरिक्तो न सिध्यति । प्रतीत्यर्थक्रियाभ्यामेव तस्य तद्व्यतिरेकेण सिद्धत्वात् । प्रत्यक्षा चैषा प्रतीतिः "तन्तुभ्यः पटः" इति । चेदयं तन्तुभ्यो न व्यतिरिच्येत तदा न जात्वेवं प्रतीयेत, किन्तु "तन्तवः पटः" इति प्रतीयेत । न चैवं प्रतीयते । न वा पटेनेव तन्तुभिः किञ्चित् प्राव्रियते । **तस्माद्** भवति प्रतिपत्तिर्नूनं तन्तुभ्यो व्यतिरिक्तः पट इति । **यथा** च तन्तुभ्यो व्यतिरिक्तः पटः, **तथा** घटादयोऽपि कपालादिभ्यो व्यतिरिक्ताः वेदितव्याः । समानयोगक्षेमत्वात् । **तथा च** कारणव्यतिरेकेण भावानां याथात्म्योपलब्धेस्तद्गोचराः उपलब्धयोऽपि यथार्थाः एव सम्पद्यन्ते न स्वाकारमबाह्यं बाह्यतयाऽऽलम्बमानाः मिथ्याभूता इति न तदपरपर्य्याय विज्ञानमेवैकं सत्यमिति भावः ॥ २५ ॥

**ननु** पटप्रभृतयश्चेत् तन्त्वादिभ्यो व्यतिरेकेण विद्यन्ते तदा कुतस्ते तथा न गृह्यन्ते ? तत्राह—

**"तदाश्रयत्वादपृथग्ग्रहणम्" ॥ २६ ॥**

तदाश्रयत्वात्=तदा तन्त्वादयो भावाः परामृश्यन्ते, तन्त्वाद्याश्रयत्वादपृथग्ग्रहणं=पटादीनां पृथक्त्वेन व्यतिरेकेण ग्रहणं न भवतीत्यर्थः ।

**येषां** खलु भावानां परस्परमाश्रयाश्रितभावः सम्बन्धो न विद्यते **तेषामन्यतरव्यतिरेकेणान्यतरस्य** ग्रहणं सम्भवति **यथा** घटव्यतिरेकेण पटस्य, पटव्यतिरेकेण च घटस्य । येषां चैष सम्बन्धो विद्यते तेषामन्यतरव्यतिरेकेणान्यतरस्य ग्रहणं न कथञ्चिदुपपद्यते । तत्राश्रितानामाश्रयतन्त्रत्वेन कदाऽपि पृथगवस्थानाभावात् । अस्ति च तन्त्वादीनां पटादीनां चाश्रयाश्रितभावः सम्बन्धः । **तस्मात्** तन्त्वादिभ्यो व्यतिरिक्तत्वेऽपि पटादयो न तद्व्यतिरेकेण गृह्यन्त इति भावः ॥ २६ ॥

**ननु** कारणद्रव्यतो व्यतिरिच्यमानमपि कार्य्यद्रव्यं विज्ञानतो न व्यतिरिच्यते तस्य तद्व्यतिरेकेणानुपपत्तेः ? **तत्राह**—

**"प्रमाणतश्चार्थप्रतिपत्तेः" ॥ २७ ॥**

चकारेण पूर्वोक्तं हेतुं समुच्चिनोति । प्रमाणतः=प्रत्यक्षादिना प्रमाणे-

नार्थप्रतिपत्तेः=अर्थानां भावानां प्रतिपत्तेरुपलब्धेर्न विज्ञानव्यतिरेकेणानुपपत्तिरित्यर्थः ।

यत् खलु प्रमाणेनोपलभ्यते न तत् कथञ्चिदपह्नोतुं शक्यते । सर्वत्रानाश्वासप्रसङ्गात् । घटपटादयो भावास्तु विज्ञानव्यतिरिक्ताः प्रमाणेनोपलभ्यन्ते । चेदिमे तथा न वर्तेरन् कथमुपलभ्येरन् । नहि शशविषाणादयः क्वचित् तथोपलभ्यन्ते । तेषामुपलम्भाच्चावगम्यते नास्ति विज्ञानव्यतिरेकेण तदनुपपत्तिरिति भावः ॥ २७ ॥

हेत्वन्तरमाह—

**"प्रमाणानुपपत्त्युपपत्तिभ्याम्" ॥ २८ ॥**

चोऽनुवर्तते । प्रमाणानुपपत्त्युपपत्तिभ्यांच=साधकप्रमाणानुपपत्त्युपपत्तिभ्यामपि विज्ञानव्यतिरेकेण सर्वभावानुपपत्तिर्नास्तीत्यर्थः ।

विज्ञानव्यतिरेकेण सर्वभावानुपपत्तिं वदता तत्र किञ्चित् प्रमाणमुपपद्यते न वेति वक्तव्यम् । नोपपद्यते चेत् ? तदा सर्वभावानुपपत्तिरिति न सिध्येत् । नहि प्रमाणमन्तरा किञ्चित् सिध्यति । चेदुपपद्यते ? तदा सर्वभावानुपपत्तिरिति व्याहन्येत । विज्ञानव्यतिरेकेण प्रमाणस्यैवोपपन्नत्वात् । **तथा च** प्रमेयमप्युपपन्नम् । **अतो** विज्ञानव्यतिरेकेण सर्वभावानुपपत्तिरित्ययुक्तमिति भावः ॥ २८ ॥

अत्र शङ्कते—

**"स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः" ॥२९॥**

स्वप्नविषयाभिमानवत्=ज्ञानमभिमानः, यथा स्वप्ने विषयाभावेऽपि विषयाभिमानो भवति तथाऽयम्=एष प्रमाणप्रमेयाभिमानः=प्रमाणप्रमेयाभिमानो वेदितव्य इत्यर्थः ।

**यथा** हि स्वप्ने विषयाः न सन्ति वासनानिबन्धनया कल्पनया च प्रतिभान्ति **तथा** जागरितेऽपि प्रमाणानि प्रमेयाणि च न विद्यन्ते केवलमनादिवासनानिबन्धनया कल्पनया प्रतीयन्ते । न च कल्पनया प्रतीतानां तेषां प्रमाणप्रमेयभावो वास्तवः सम्पद्यते । न चावास्तवे तस्मिन् विज्ञानव्य-

तिरेकेण कश्चिद् भाव उपपंद्यते । **किमुक्तं?** योऽयं प्रत्यक्षबुद्धिविषयः खलु प्रमाणप्रमेयभावः स न पारमार्थिकः किन्तु स्वप्नविषयवत् सांवृत्तिकः । तेन च परमार्थसती बाह्यार्थशून्यता न कथञ्चिद् विरुध्यते । **तस्माद्** युक्ता विज्ञानव्यतिरेकेण सर्वभावानुपपत्तिरिति भावः ॥ २९ ॥

**ननु** स्वप्नविषयाभिमानवद् जागरितप्रमाणप्रमेयाभिमानो न युज्यते स्वप्नविषयापेक्षया जागरितविषयाणां विलक्षणत्वात्? **तत्राह**—

**"मायागन्धर्वनगरमृगतृष्णिकावद्वा"** ॥ ३० ॥

अयं प्रमाणप्रमेयाभिमान इत्यनुवर्तते । वा=अथवा मायागन्धर्वनगरमृगतृष्णिकावत्=इन्द्रजालिकेन मायाविना निर्मितः पदार्थोऽत्र माया, साध्ये साधनप्रयोगात्, नगराकारो नीलपीतादिमेघरचनाभेदो गन्धर्वनगरः, गन्धर्वाणां नगर इव नगर इति तद्व्युत्पत्तेः, भौमेनोष्मणा संसृज्य स्पन्दमानासु सूर्य्यमरीचिषु भ्रान्त्या विदितमुदकं मृगतृष्णिका, मृगाणां तृष्णेव तृष्णाहेतुत्वादिति तद्व्युत्पत्तेः, **स्वार्थे** कन्, **वतेः** प्रत्येकमन्वयः, मायागन्धर्वनगरमृगतृष्णिकावदयं प्रमाणप्रमेयाभिमानो वेदितव्य इत्यर्थः ।

**यथा** हि मायादयो जाग्रत्पदार्थाः वस्तुतो न सन्ति भ्रान्त्या चाधिगम्यन्ते **तथा** घटपटादयोऽपि वस्तुतोऽविद्यमानाः संवृत्तिलक्षणयाऽनादिवासनानिबन्धनया कल्पनया प्रतीयन्ते । न चैवं प्रतीतेषु तेषूपलभ्यमानोऽयं सांवृत्तोऽपरमार्थसन् प्रमाणप्रमेयभावो विज्ञानव्यतिरेकेण सर्वभावानुपपत्तिं विरुणद्धि । **तस्मान्मन्तव्यम्** अस्ति विज्ञानमेवैकं सत्यं नास्ति च तद्व्यतिरेकेण कश्चित् परमार्थसन् भाव इति भावः ॥ ३० ॥

**समाधत्ते**—

**"हेत्वभावादसिद्धिः"** ॥ ३१ ॥

अस्य प्रमाणप्रमेयाभिमानस्येति विपरिणम्यानुवर्तते । असिद्धिः=अस्य प्रमाणप्रमेयाभिमानस्य सिद्धिर्न भवति, **कुतः?** हेत्वभावात्=कारणाभावादित्यर्थः ।

प्रमाणप्रमेयाभिमानः खलु कार्य्यं तत्कारणेनावश्यं भवितव्यम् ।

कारणसत्त्वे कार्य्यसत्त्वनियमात्। न च विज्ञानवादिनस्ते तत्कारणं किञ्चिद् विद्यते। विज्ञानव्यतिरेकेण सर्वभावाभावाभ्युपगमात्। विज्ञानस्य चैकाकिनस्तत्कारणत्वासम्भवात्। अस्ति विचित्राऽनादिवासना तत्कारणमिति चेत्? तदा वक्तव्यं किमियं व्यतिरिच्यते विज्ञानादाहोस्विन्न व्यतिरिच्यते। व्यतिरिच्यते चेत्? तदा विज्ञानव्यतिरेकेण नास्ति कश्चिद् भावः इति व्याहतम्। तद्व्यतिरिक्तायाः वासनाया एव सद्भावात्। न व्यतिरिच्यते चेत्? तदा तदवस्थमेकाकि विज्ञानं न ततो विचित्रं भावजातमुत्पद्येत। स्वरूपतोऽविचित्रं च विज्ञानं विचित्रं प्रसज्येत। वैचित्र्यं च सांवृत्तिकमिति विज्ञानमपि सांवृत्तिकमापद्येत। हेतुश्च विज्ञानं वासना च हेतुमती न तस्मात्ततोऽव्यतिरेकोऽपि सिध्यति। कथञ्चिदव्यतिरेकेऽपि वक्तव्या कस्येयं वासना?। न कस्यापीति चेत्? तदा वासनात्वानुपपत्तिः। नहि वासना च निर्विषया चेति सङ्गच्छते। भावजातस्येति चेत्? तदा विद्यते विज्ञानव्यतिरेकेण भावजातमिति न तदनुपपत्तिः। **अतो** मन्तव्यं **यथाऽ**स्ति विज्ञानं परमार्थसत् **तथाऽ**स्ति विज्ञानव्यतिरेकेण भावजातमपि परमार्थसदिति भावः॥ ३१॥

**ननु** स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानोऽसद्विषयः किन्न स्यात्? **तत्राह—**

**"स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः"** ॥ ३२॥

चोऽप्यर्थो भिन्नक्रमः। स्मृतिसङ्कल्पवत्=अनुभूतविषयासम्प्रमोषः **स्मृतिः**, अनुभूतविषयानुचिन्तनं **सङ्कल्पः**, तौ यथा नासद्विषयौ तथा स्वप्नविषयाभिमानश्च=स्वप्नविषयाभिमानोऽपि नासद्विषय इत्यर्थः।

**न** खलु स्वप्नविषयाभिमानोऽसद्विषयो येन तद्दृष्टान्तेनायं प्रमाणप्रमेयाभिमानोऽप्यसद्विषयः सिध्येत्, **अपि च**? स्मृतिसङ्कल्पौ **यथा** पूर्वोपलब्धविषयत्वात् सद्विषयौ **तथा** स्वप्नप्रत्ययोऽपि पूर्वोपलब्धविषयत्वात् सद्विषयः। **न च** निजशिरश्छेदनं न पूर्वं सदुपलब्धं, भवति च स्वप्ने तद्विषयोऽपि प्रत्यय इति स्थाने **वचः**। तस्यापि खण्डशः पूर्वं तथोप-

लब्धत्वात् । **यथा** चैष स्वप्नः स्मृतिभेदः संस्कारपाटवधातुनिद्रादिदोषवशात् प्रत्यक्षवदवभासते सद्विषयश्च भवति **तथो**पपादितमस्माभिः "**तथा स्वप्नः**" (वै० ९।२।७) इत्यत्र "**वैशेषिकसूत्रवैदिकवृत्तौ**" नातोऽधिकमिह पराक्रम्यते । न च मायागन्धर्वनगरमृगतृष्णिकाभिमानोऽपि दृष्टान्तः सङ्गच्छते । तस्य दोषवशेनान्यथाविषयत्वेऽप्यसद्विषयत्वाभावात् । अन्यथाविषयत्वमेव च तस्य मिथ्यात्वं नासद्विषयत्वम् । असतः शशविषाणादेः कुत्रापि विषयत्वादर्शनात् । नह्यसँश्च ज्ञानविषयश्चेत्युपपद्यते । **तस्मा**न्नावास्तवोऽयं प्रमाणप्रमेयभावः **किन्तु** वास्तवः । **तथा** चास्ति परमाणुपुञ्जव्यतिरिक्तः कश्चिदवयवी यन्मिथ्याज्ञाननिमित्तं खलु चेतनाचेतनबाह्यविषयविषयं मिथ्याज्ञानमिति भावः ॥ ३२ ॥

**नन्व**त्रावयवीनि शरीरेन्द्रियमनांसीत्युक्तं, तद्गोचरं मिथ्याज्ञानं कुतो निवर्तते ? **तत्राह**—

**"मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानविनाशवत् प्रबोधे" ॥ ३३ ॥**

मिथ्योपलब्धेः=शरीरेन्द्रियमनःस्वनात्मस्वात्माभिमानलक्षणस्य मिथ्याज्ञानस्य तत्त्वज्ञानात्=आत्मतत्त्वज्ञानाद् विनाशः=निवृत्तिर्भवति, तत्रोदाहरणं प्रबोधे=जाग्रत्प्रत्ययः प्रबोधः, तस्मिन् सति तस्मादिति यावत् स्वप्नविषयाभिमानविनाशवत्=यथा स्वप्नविषयाभिमानस्य स्वाप्नप्रत्ययस्य विनाशो निवृत्तिरित्यर्थः ।

**यथा** हि प्रबोधे सति स्वप्नविषयाभिमानो निवर्तते **तथा**ऽऽत्मतत्त्वज्ञाने सति शरीरादिगोचरं मिथ्याज्ञानं निवर्तते । तमःप्रकाशवद् द्वयोः परस्परं विरोधात् । विरोधिना विरोधिनिवृत्तेश्चावश्यकत्वादिति भावः ॥३३॥

**ननु** यथा हि शरीरादिगोचरं मिथ्याज्ञानं निवर्तते तथाऽऽत्मतत्त्वज्ञानमपि निवर्त्स्यते ज्ञानत्वाविशेषात् **तथा च** कृतं तत्सम्पादनायासेन ? तत्राह—

**"बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्" ॥ ३४ ॥**

विनाश इत्यनुवर्तते । नेति हेतुसामर्थ्याल्लभ्यते । च=पुनर्बुद्धेः=आत्मतत्त्वज्ञानस्यैवं=मिथ्याज्ञानवद् विनाशो न भवति, **कुतः** ? निमित्तसद्भावोपलम्भात्=भावप्रधानोनिर्देशः, निमित्तं विषयः, तस्य सद्भावो याथात्म्यम्, अविपरीतं रूपमिति यावत्, तस्योपलम्भो ज्ञानं, तस्मात् यथार्थज्ञानत्वादित्यर्थः ।

**यद्धि** ज्ञानं विषयस्य विपरीतं रूपं विषयीकरोति **तदेव** मिथ्याज्ञानत्वाद् ज्ञानान्तरेण निवर्त्यते **यथा** मायागन्धर्वनगरादिज्ञानम् । **यच्च** विषयस्याविपरीतं रूपं गोचरयति न **तद्** ज्ञानान्तरेण निवर्त्यते यथार्थज्ञानत्वात् **यथा** घटज्ञानं पटज्ञानम् । आत्मतत्त्वज्ञानमपि यथार्थं ज्ञानम् । अविपरीतरूपविषयत्वात् । अतो न केनचिद् निवर्तितुं शक्यते । **किमुक्तं** ? यथा हि स्वाप्नविषयस्य प्रत्ययस्य जागरितप्रत्ययो यथा वा मायागन्धर्वनगरादिविषयस्य प्रत्ययस्य पुरोवर्त्तिप्रत्ययो बाधकः न तथाऽऽत्मतत्त्वविषयस्य प्रत्ययस्य बाधकः कश्चित् समीचीनः प्रत्ययो विद्यते । न चासमीचीनस्तं कर्हिचिद् बाधितुमुत्सहते । **तस्माद्** ज्ञानत्वाविशेषेऽपि न तस्य मिथ्याज्ञानवद् निवृत्तिः शक्यसम्भवेति भावः ॥ ३४ ॥

**नन्वात्मतत्त्वज्ञानाद्** मिथ्याज्ञाननिवृत्तिरिति न युज्यते, पूर्वं **"दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः"** (न्या० ४।२।१) इत्युक्तत्वात् ? **तत्राह—**

**"तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः"** ॥३५॥

हेत्वर्थश्चः । यतो मिथ्याबुद्धेः=मिथ्याज्ञानस्य तत्त्वप्रधानभेदात्=तदा स्वसन्निहितं प्रधानं परामृशति, तस्य प्रधानस्य भावस्तत्त्वं गुणः, अप्रधानमिति यावत्, प्रधानं मुख्यं, तयोर्भेदस्तस्मात् प्रधानाप्रधानभेदाद् निमित्तनैमित्तिकभेदादितियावद् द्वैविध्योपपत्तिः=द्वैविध्यमुपपद्यते, अतो नात्मतत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तिरित्युक्तमयुक्तमित्यर्थः ।

**द्विविधं** खलु मिथ्याज्ञानं गौणं मुख्यं च । **यद्** दोषनिमित्तेषु चेतनाचेतनात्मकेषु बाह्यविषयेषु सुखसाधनताभिमानलक्षणं मिथ्याज्ञानं तद्

**गौणम्**। इदमेव नैमित्तिकमित्यभिधीयते । यच्चानात्मसु शरीरेन्द्रियमनःस्वात्मत्वाभिमानलक्षणं मिथ्याज्ञानं तत् **प्रधानम्**। इदमेव निमित्तमिति कथ्यते । तत्र पूर्वं गौणस्य नैमित्तिकस्य मिथ्याज्ञानस्य दोषनिमित्तानां तत्त्वज्ञानान्निवृत्तिरुक्ता, सम्प्रति मुख्यस्य निमित्तस्य तस्यात्मतत्त्वज्ञानान्निवृत्तिरुच्यते । **तस्माद्** न पूर्वापरविरोध इति भावः ॥ ३५ ॥

**ननु** कस्मादेतदात्मतत्त्वज्ञानमुत्पद्यते ? तत्राह—

**"समाधिविशेषाभ्यासात्"** ॥ ३६ ॥

समाधिविशेषाभ्यासात्=समाधिविशेषः सम्प्रज्ञातो निर्विचारः, तस्याभ्यासो वैशारद्यं कार्य्ये कारणप्रयोगः, तस्मात् सम्प्रज्ञातनाम्नः समाधिविशेषस्य वैशारद्यादात्मतत्त्वज्ञानमुत्पद्यत इत्यर्थः ।

**यदा** खल्वयं वैराग्येण यमादीनामभ्यासेन च क्षीणराजसतामसप्रमाणादिनिखिलचित्तवृत्तिरभिजातमणिकल्प इव निर्मलचेतस्को ग्राह्यग्रहणग्रहीतृसंज्ञकेषु स्थूलसूक्ष्मशरीरेन्द्रियमनःसु चित्तं समादधाति तदाऽस्य दीर्घकालादिभिस्तत्र चित्तसमाधिभावनया तद्वैशारद्यमुपजायते । ततश्चाध्यात्मप्रसादः । यं किल तत्रभवन्तो योगिनः **ऋतम्भरा** प्रज्ञेति परिभाषन्ते । तेन चैष शैलस्थ इव भूमिष्ठान् सर्वान् पदार्थान् याथातथ्येन सम्प्रजानीते स्वात्मानं च हस्तामलकमिव साक्षात्कुरुते । तदेवमात्मतत्त्वज्ञानस्याभ्युपायः समाधिविशेषः । तथा चाह भगवान् याज्ञवल्क्योऽपि- **"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"** (बृह० ४।४।५) इति । निदिध्यासनं समाधिविशेषः सम्प्रज्ञातः । **तस्मान्**मुमुक्षुभिरार्य्यतनयैः स एव यत्नतोऽभ्यसितव्य इति भावः ॥ **तत्र** साधर्म्यवैधर्म्याभ्यां पदार्थतत्त्वज्ञानात् परोक्षं समाधिविशेषाभ्यासाच्चापरोक्षमिति विवेकः ॥ ३६ ॥

**अत्र** शङ्कते—

**"नार्थविशेषप्राबल्यात्"** ॥ ३७ ॥

समाधिविशेषाभ्यास इति विपरिणम्यानुवर्तते । न=समाधिविशेषा-

भ्यासो नोपपद्यते, कुतः? अर्थविशेषप्राबल्यात्=अर्थाः विषयाः, तेषामवस्थाविशेषो विशेषः संस्काराः, तेषां बलीयस्त्वं प्राबल्यं, तस्मात् समाधिप्रतिबन्धकव्युत्थानसंस्कारप्राबल्यादित्यर्थः।

समाधिविशेषस्योत्पत्तौ सत्यां हि तदभ्यास उपपद्यते न जात्वसत्याम्। न च समाधिविशेषस्योत्पत्तिः सम्भवति। प्रबलानां तत्प्रतिबन्धकानां व्युत्थानसंस्काराणां विद्यमानत्वात्। नहि विद्यमानेषु तेषु स कथञ्चिदुत्पत्तुमर्हति। ते ह्यनादित्वात् प्रबलाः स्वकार्य्यप्रमाणादिव्युत्थानप्रत्ययोपजनने च पर्य्याप्ताः। यदैवायमुत्पत्तुमुत्सहते तदैव तैः सहस्रशो व्युत्थानप्रत्ययाः उत्पाद्यन्ते। तथा चावसराभावात् कथं तदुत्पत्तिः स्यात्। न चोत्पत्त्यभावे किञ्चिदभ्यसितुं शक्यते। तस्मादनुपपन्नः समाधिविशेषाभ्यासइति भावः॥ ३७॥

हेत्वन्तरमाह—

"क्षुदादिभिः प्रवर्तनाच्च"॥ ३८॥

पूर्वत्रैवायं हेतुरिति सूचनाय चकारः। समाधिविशेषाभ्यासः, न, इति पदद्वयमनुवर्तते। क्षुदादिभिः=क्षुत्पिपासाशीतोष्णादिभिर्द्वन्द्वैः प्रवर्तनात्=तन्निवृत्तिसाधनेषु बाह्यविषयेषु चित्तस्य प्रतिक्षणं प्रवर्तनात् समाधिविशेषाभ्यासो नोपपद्यत इत्यर्थः।

यदा खल्वयं समाधिविशेषमभ्यसितुमुपक्रमते तदैवास्य मनः क्षुत्पिपासादिभिर्द्वन्द्वैः पीडितं भवत् तन्निवृत्तिसाधनेषु बाह्यविषयेषु प्रवर्तते। न चैवं प्रवर्तमानस्य तस्य कथञ्चित् समाधानमुपपद्यते। तस्मादनुपपन्नः समाधिविशेषाभ्यास इति भावः॥ ३८॥

समाधत्ते—

"पूर्वकृतफलानुबन्धात् तदुत्पत्तिः"॥ ३९॥

पूर्वकृतफलानुबन्धात्=पूर्वस्मिन् जन्मनि कृतान्यनुष्ठितानि यानि समाधितत्साधनानि तेषां फलमदृष्टं फलजनकत्वात्, तस्यानुबन्धः, सम्बन्धः तस्मात् पूर्वजन्माभ्यस्तसमाधितत्साधनानुष्ठानजनितादृष्टसम्बन्धात् तदु-

त्पत्तिः=तदा समाधिविशेषं परामृशति, तस्य समाधिविशेषस्योत्पत्तिर्भवतीत्यर्थः ।

न वयं केवलादिह जन्मनि कृतात् समाधितत्साधनानुष्ठानात् समाधिविशेषस्योत्पत्तिं ब्रूमः अपि च ? पूर्वजन्माभ्यस्तसमाधितत्साधनानुष्ठानजनितादृष्टविशिष्टात् तस्मात् । न चैतदपेक्षया व्युत्थानसंस्काराश्चिरन्तनाः अपि प्रबलाः सम्पद्यन्ते । तेषां केवलापेक्षया प्रबलत्वेऽपि विशिष्टापेक्षया दुर्बलत्वात् । नह्येकाकिनमपेक्ष्य प्रबलाः अपि विपक्षिणः सङ्घमपेक्ष्यापि प्रबलाः भवन्ति । न च विशिष्टापेक्षया दुर्बलानां व्युत्थानसंस्काराणां स्वकार्य्यप्रमाणादिव्युत्थानप्रत्ययोपजननेन समाधिविशेषप्रतिबन्धकत्वमुपपद्यते । तथा च निष्प्रत्यूहसमाधिविशेषोत्पत्तेरुपपन्नस्तदभ्यास इति भावः ॥ ३९ ॥

अत्रातिप्रसक्त्या शङ्कते—

(१)"अपवर्गेऽप्येवं प्रसङ्गः" ॥ ४० ॥

अपवर्गेऽपि=मोक्षेऽप्येवं=पूर्वकृतफलानुबन्धात् समाधिविशेषोत्पत्तिवत् प्रसङ्गः=दुःखभेदोत्पत्तिप्रसङ्ग इत्यर्थः ।

चेदिह पूर्वकृतफलानुबन्धात् समाधिविशेष उत्पद्यते तदाऽपवर्गे दुःखभेदोऽप्युत्पद्येत । कारणस्य कार्य्यजननशक्तेः सवत्राव्याहतत्वात् । नह्येकत्र कुतश्चित् किञ्चिदुत्पद्यते नापरत्रेति सम्भवति । न चापवर्गे दुःखभेद उत्पद्यते । तस्मात् पूर्वकृतफलानुबन्धात्तदुत्पत्तिरित्युक्तमयुक्तमिति भावः ॥ ४० ॥

समाधत्ते—

"न निष्पन्नावश्यम्भावित्वात्" ॥ ४१ ॥

न=पूर्वकृतफलानुबन्धादपवर्गे दुःखभेदोत्पत्तिप्रसङ्गो न भवति, कुतः ? निष्पन्नावश्यम्भावित्वात्=निष्पन्नं कार्य्यं, तन्निष्पत्तिवेलायां तस्यावश्यम्भावनियमादित्यर्थः ।

(१) अस्मात्पूर्वम् "अरण्यगुहापुलिनादिषु योगाभ्यासोपयोगः" इत्येकं सूत्रमधिकं सर्वत्र मुद्रितपुस्तकेषूपलभ्यते । तच्च भाष्यं न सूत्रमित्युपेक्षितम् ।

कारणं खल्वदृष्टं तदनुबन्धेन कार्य्यप्रदेशेऽवश्यम्भवितव्यम्। अन्यथा कार्य्यानिष्पत्तेः। नहि कारणसम्बन्धाभावे कचित् कार्य्यं निष्पद्यते। न चापवर्गेऽदृष्टानुबन्धो विद्यते। तस्यात्मतत्त्वज्ञानेन ब्रह्मदर्शननिष्पत्त्या पुरस्तादेव क्षीणत्वात्। समाधिविशेषोत्पत्तिवेलायां चावश्यमस्ति तदनुबन्धः। तदानीं तस्याक्षीणत्वात्। **तस्मात्** पूर्वकृतफलानुबन्धात् तदुत्पत्तिरिति युक्तमुक्तं नायुक्तमिति भावः॥ ४१॥

नन्वपवर्गे पूर्वकृतफलानुबन्धाभावः कुतोऽवगम्यते? तत्राह—

**"तदभावश्चापवर्गे"॥ ४२॥**

चस्त्वर्थः, तेन प्रमाणाभावो व्यावर्त्यते। अपवर्गे=मोक्षे तदभावः=तदा पूर्वकृतफलानुबन्धं परामृशति, पूर्वकृतफलानुबन्धाभावः श्रुतिवाक्येभ्योऽवगम्यत इत्यर्थः।

**यदा** ह्ययं समाधिविशेषाभ्यासेनात्मतत्त्वं हस्तामलकमिव साक्षात्पश्यति तेन च ब्रह्मदर्शनमुपगच्छति **तदै**वास्य सर्वे हृदयग्रन्थयो भिद्यन्ते संशयाश्च सर्वे छिद्यन्ते पुण्यपापलक्षणानि च सर्वाणि कर्माणि क्षीयन्ते। तेषां च क्षयाच्चैव सर्वदुःखेभ्यो विमुक्तो निजेनात्मना ब्रह्म संविश्य ब्रह्मानन्दमुपभुञ्जानो ब्रह्मसाम्यमुपैति। तमेव किलापवर्गविदोऽपवर्गमाचक्षते। यत्रेदमाम्नातं **"यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्। अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः** (श्वेता० २।१५) **"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** (मुण्ड० २।२।८) **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुण्ड० ३।१।३) **"आत्मनाऽऽत्मानं संविवेश"** (यजु० ३२।११) **"आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन"** (तै० ब्रह्मा० ४) **"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति")** (तै० ब्रह्मा० ७)

**"तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतोभवति"** (मुण्ड० ३।२।९) **"उभे उ हैवैष एते तरति"** (बृह० ४।४।२२) इति । तस्मिँश्चैतस्मिन्नपवर्गे पूर्वकृतफलानुबन्धाभावः उदाहृतश्रुतिवाक्येभ्यः स्पष्टमवगम्यते । सर्वत्र तेषु ब्रह्मदर्शनवेलायामेव तदभावस्याभिधानात् । नहि श्रुतिवाक्यानि तानि तदभावाभावेऽपवर्गस्य दुःखनिवृत्तिपूर्वकब्रह्मानन्दावाप्तिरूपत्वममृतत्वं च कथञ्चिदभिधातुं शक्नुवन्ति । अभिदधते च । तस्माद्भवत्यवगतिः "अस्ति नूनमपवर्गे पूर्वकृतफलानुबन्धाभावः" इति । **तथा** चापवर्गेऽप्येवं प्रसङ्ग इत्यनुपपन्नमिति भावः ॥ ४२ ॥

**ननु** भवतु पूर्वकृतफलानुबन्धात् समाधिविशेषोत्पत्तिः, सम्प्रति तदुत्पत्त्यर्थं किं विधेयं येन द्रागित्येवात्मतत्त्वज्ञानमुपजायेत ? **तत्राह**—

**"तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः" ॥ ४३ ॥**

समुच्चयार्थश्चकारो भिन्नक्रमः । तदर्थं=समाधिविशेषोत्पत्त्यर्थं यमनियमाभ्यां=यमेन नियमेन, योगात्=योगग्रहणेन पातञ्जलयोगशास्त्रमुपलक्षयति, प्रतिपद्यत्वं पञ्चम्यर्थः, पातञ्जलयोगशास्त्रप्रतिपाद्यैरध्यात्मविध्युपायैश्च=आत्मतत्त्वज्ञानमधिकृत्य विहितैरासन–प्राणायाम–प्रत्याहार–धारणा–ध्यान–समाधिभिः साधनैश्चात्मसंस्कारः=आत्मनो मनसः संस्कारः अशुद्धिक्षयपूर्वकः समाधिविशेषोपजननयोग्यतालक्षणोऽतिशयः सम्पादयितव्यः इत्यर्थः ।

**यदा** हि यमनियमासनादयः उपायाः सम्यगनुष्ठीयन्ते **तदा** तेऽस्यैकपदे मनसोऽशुद्धिं क्षिण्वन्ति, समाधिविशेषोपजननयोग्यतां च तत्राऽऽदधति । ततश्चायं शीघ्रं समाधिविशेषमुपसम्पद्यमानस्तत्त्वज्ञानमुपलभते । तस्मान्मुमुक्षुभिः समाधिविशेषोत्पत्त्यर्थं यमनियमादिभिरुपायैः पूर्वमात्मसंस्कारो विधातव्य इति भावः ॥

**तत्र** सर्वाश्रमसाधारणत्वाद् यमनियमयोः पृथङ्निर्देशः । अहिंसा सत्य-

मस्तेयं ब्रह्मचर्य्यमपरिग्रह इति **यमः** । शौचं सन्तोषस्तपः स्वाध्यायः ईश्वरप्रणिधानमिति **नियमः** । स्थिरसुखम**आसनम्** । श्वासप्रश्वासयोर्गतिविच्छेदः **प्राणायामः** । स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां **प्रत्याहारः** । देशबन्धश्चित्तस्य **धारणा** । तत्र प्रत्ययैकतानता **ध्यानम्** । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव **समाधिः** । एषामर्थस्तु **"योगसूत्रवैदिकवृत्तौ"** कृतप्रपञ्चः विस्तरभयादिह न पुनः प्रपञ्चित इति विवेकः ॥ ४३ ॥

**ननु** पूर्वकृतफलानुबन्धाद् यमनियमादिभिरुपायैरात्मसंस्कारेण जायमानः समाधिविशेषश्चेदात्मतत्त्वज्ञानोपायः कृतं तर्हि न्यायशास्त्रेणानेन? तत्राह—

**"ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च संवादः"** ॥ ४४ ॥

समुच्चयार्थश्चो भिन्नक्रमः । ज्ञानग्रहणाभ्यासः=आत्मतत्त्वज्ञानं दृढतया गृह्यते येन शास्त्रेण तद् ज्ञानग्रहणं न्यायशास्त्रं, तस्याभ्यासः पुनः पुनरध्ययनप्रयत्नः, तद्विद्यैः=तच्छास्त्राभिज्ञैः संवादः=समयपूर्वको वादश्चावश्यक इत्यर्थः ।

**यथा** हि तत्त्वज्ञानहेतुसमाधिविशेषोत्पत्त्यर्थं यमनियमादिभिरुपायैरात्मसंस्कारस्तावदावश्यकः **तथा** शास्त्रश्रवणाद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां जातस्यात्मतत्त्वज्ञानस्य दार्ढ्याय न्यायशास्त्रस्यास्याभ्यासस्तच्छास्त्राभिज्ञैः सह संवादश्चाप्यावश्यकः । तस्मिन्सत्येव जायमानस्यात्मतत्त्वज्ञानस्य दृढभूमित्वसम्भवात् । नहि तस्मिन्नसति जायमानमप्यात्मतत्त्वज्ञानं कथञ्चिद् दृढभूमि सम्पद्यते, दृढभूमित्वासम्पत्तौ च समाधिविशेषोत्पत्त्यर्थमात्मसंस्काराय कश्चिद् यमनियमादिषु प्रवर्तितुमुत्सहते । न चाभ्यासः संवादश्चान्तरेण शास्त्रमुपपद्यते । तस्मात् सफलमेतद्न्यायशास्त्रं न जातु विफलमिति भावः ॥ ४४ ॥

**ननु** के ते तद्विद्याः यैः संवादं कुर्य्यात्? तत्राह—

**"तं गुरु-शिष्य-सब्रह्मचारि-शिष्ट-श्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात्"** ॥ ४५ ॥

तं=संवादमनसूयुभिः=अविजिगीषुभिर्गुरुशिष्यसब्रह्मचारिशिष्टश्रेयोऽर्थिभिः=शास्त्रोपदेष्टा **गुरुः**, शास्त्रेणोपदेश्यः **शिष्यः**, साध्यायी **सब्रह्मचारी**, गुरुशिष्यसब्रह्मचारिभ्योऽन्यः शास्त्रेणानुशिष्टः **शिष्टः**, शास्त्रप्रतिपाद्ये मोक्षलक्षणे श्रेयसि श्राद्धाः मुमुक्षव इति यावच्छ्रे**योऽर्थिनः**, तैरभ्युपेयात्=अभिमुखमुपेत्य कुर्य्यादित्यर्थः।

गुरुशिष्यादयस्तावत् तद्विद्याः, तैरात्मतत्त्वज्ञानस्य दाढर्याय संवादं कुर्य्यादिति भावः ॥ ४५ ॥

**ननु** गुरुशिष्यादीनां चेत् प्रतिपक्षग्रहणं न रोचेत तदा कथमेभिः संवादमभ्युपेयात्? तत्राह—

**"प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे" ॥ ४६ ॥**

पूर्वसूत्रमनुवर्त्तते। अवधारणार्थोऽपिः। वा=अथवाऽर्थित्वे=तत्त्वज्ञानदार्ढ्येच्छायां सत्यां प्रयोजनार्थं=तत्त्वज्ञानदार्ढ्यं प्रयोजनं तदर्थं प्रतिपक्षहीनमपि=प्रतिपक्षहीनमेव संवादं गुरुशिष्यादिभिरभ्युपेयादित्यर्थः।

तत्त्वज्ञानदार्ढ्येच्छा **चेद्** वर्त्तते गुरुशिष्यादीनां च प्रतिपक्षग्रहणं न रोचते **तदा** तद्दार्ढ्याय प्रतिपक्षग्रहणवर्जमेव संवादं तैरभ्युपेयात्। सर्वथा प्रयोजनसिद्धेरेवोद्देश्यत्वादिति भावः ॥ ४६ ॥

**ननु** वादेनैव चेत् प्रयोजनसिद्धिः किमर्थं तर्हि जल्पवितण्डे? **तत्राह**—

**"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" ॥ ४७ ॥**

बीजप्ररोहसंरक्षणार्थं=धान्यादिबीजानां वपनेन जातानामङ्कुराणां पश्वादिनिवारणेन परिपालनं संरक्षणं, तदर्थं कण्टकशाखावरणवत्=यथा कण्टकाचितशाखाभिर्निर्मितं "वाड़" इति प्रसिद्धमावरणं वेष्टनं वृतिरिति यावत्, तथा तत्त्वाध्यवायसंरक्षणार्थम्=अभ्याससंवादाभ्यां जातस्यात्मतत्त्वाध्यवसायस्य परोक्तदूषणाहिताप्रामाण्यशङ्कानिवारणेन परिपालनं संरक्षणं, तदर्थं जल्पवितण्डे=जल्पश्च वितण्डा चोभे वेदितव्ये इत्यर्थः।

**यथा** हि सस्यं कण्टकशाखावरणं संरक्षति **तथा** तत्त्वाध्यवसायं ज-

ल्पवितण्डे संरक्षतः । **तस्माद्** वादवत् सार्थकं तदुपादानं न निरर्थकमिति भावः ॥ ४७ ॥

**ननु** जल्पवितण्डाभ्यां किं कर्तव्यं येन तत्त्वाध्यवसायस्य संरक्षणं भवेत् ? तत्राह—

**"ताभ्यां विगृह्य कथनम्"** ॥ ४८ ॥

ताभ्यां=जल्पवितण्डाभ्यां विगृह्य=विग्रहं कृत्वा कथनं=तत्त्वकथनं कर्तव्यमित्यर्थः ।

**चेत्** स्वदर्शनविलसितमिथ्याज्ञानावलेपदुर्विदग्धतया कश्चिदनार्य्यः लाभपूजाख्यात्यर्थितया कश्चिदार्य्यो वा वावदूकपाशः "क्व जगतां पतिरीश्वरः, क्व तद्वचनं वेदाः, क्व वेदप्रामाण्यं, क्वात्मतत्त्वाध्यवसायः, क्वापवर्गः" इत्येवं वैदिकं सिद्धान्तं स्वबुद्ध्योत्प्रेक्षितैः कुहेतुभिर्दूषयितुं प्रवर्तेत वैदिकश्च तत्पक्षकृशिमानं स्वपक्षद्रढिमानं च जानन्नपि कदाचिदप्रतिभया तत्प्रयुक्तेषु कुहेतुषु सपदि दूषणं न पश्येत् स्वपक्षसाधनं च न स्मरेत् **तदा** निःशङ्कं जल्पवितण्डे अवतार्य्य तमभिभवेत्, आत्मानं च रक्षेत् । **किमुक्तं ?** यथा खलु पौरस्त्या (१) मनुप्रसूतिः कदाचित् पाश्चात्त्येन शत्रुणाऽऽक्रान्तात्मदेशा वादेन फलमपश्यन्ती बुद्धिवीर्य्याभ्यां विगृह्य शत्रुमभिभवति स्वजनपदं च संरक्षति तथा वैदिकोऽपि जल्पवितण्डाभ्यां विगृह्य वैरिणं तमभिभवेत् आत्मपक्षं च संरक्षेत् नास्त्यत्र कश्चिद्दोष इति भावः ॥

**तत्त्वज्ञानं तदुत्पत्तेः साधनं च यथाक्रमम् ।**
**विस्तरेण तुरीयस्य द्वितीयेऽस्मिन् परीक्षितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्य द्वितीयमाह्निकम् ।

**समाप्तश्चायं प्रवृत्त्यादिप्रमेयषट्कतत्त्वज्ञानपरीक्षाध्यायश्चतुर्थः**

---

(१) जापानजनपदा.



# पञ्चमोऽध्यायः

## आद्यमाह्निकम्

संशयप्रमाणप्रमेयाणि परीक्षितानि । "यत्रसंशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः" (न्या० २।१७) इत्यतिदेशेन प्रयोजनादयोऽपि परीक्षिताः । सम्प्रति जातिनिग्रहस्थानानि परीक्षणीयानि । तत्र पूर्वन्तावज्जातिं परीक्षिष्यमाणस्तद्विभागमाह—

**"साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः" ।१।**

अत्र "समाः" इति पुल्लिङ्गनिर्देशः । अग्रे सर्वत्र तथानिर्देशदर्शनात् । जातिशब्दश्च स्त्रीलिङ्गः । अतः सामानाधिकरण्याय जातिभेदाः इह विशेष्याः वेदितव्याः । स्थापनाहेतौ प्रयुक्ते यस्तत्स्थापितस्य साध्यधर्मस्य प्रतिषेधाय प्रतिषेधासमर्थो हेतुः प्रतिषेधबुद्ध्या प्रयुज्यते सा जातिरितितल्लक्षणाभिप्रायेण वा पुल्लिङ्गनिर्देशः । इतरेतरयोगलक्षणश्चेह द्वन्द्वसमासः । समशब्दश्च द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमन्वयी । साधर्म्यं च वैधर्म्यं चोत्कर्षश्चापकर्षश्च वर्ण्यं चावर्ण्यं च विकल्पश्च साध्यं च प्राप्तिश्चाप्राप्तिश्च प्रसङ्गश्च प्रतिदृष्टान्तश्चानुत्पत्तिश्च संशयश्च प्रकरणं च हेतुश्चार्थापत्तिश्चाविशेषश्चोपपत्तिश्चोपलब्धिश्चानुपलब्धिश्च नित्यं चानित्यं च कार्य्यं च, तानि समानि=हेत्वन्तरतुल्यानि येषु जातिप्रयोगेषु, तैर्वा समाः=हेत्वन्तरतुल्याः ये साधनीयधर्मप्रतिषेधबुद्ध्या प्रयुक्ताः प्रतिषेधासमर्थहेतवो जातिभेदास्ते तथा—साधर्म्यसमः वैधर्म्यसमः उत्कर्षसमः अपकर्षसमः

वर्ण्यसमः अवर्ण्यसमः विकल्पसमः साध्यसमः प्राप्तिसमः अप्राप्तिसमः प्रसङ्गसमः प्रतिदृष्टान्तसमः अनुत्पत्तिसमः संशयसमः प्रकरणसमः हेतुसमः अर्थापत्तिसमः अविशेषसमः उपपत्तिसमः उपलब्धिसमः अनुपलब्धिसमः नित्यसमः अनित्यसमः कार्यसम इति चतुर्विंशतिर्जातिभेदा इत्यर्थः ।

वादिना स्थापनाहेतौ प्रयुक्ते यत्खलु प्रतिवादिनः स्वात्माभिरक्षायै वा पराभिभूत्यै वा साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं सा **जातिः**, सा च साध्यसमादिभेदाच्चतुर्विंशतिधेति भावः ॥ १ ॥

**तत्र** साधर्म्यसमवैधर्म्यसमौ लक्षयति—

**"साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ"** ॥ २ ॥

साधर्म्यवैधर्म्याभ्यां=समानोधर्मः पक्षसपक्षसाधारणोधर्मः साध्यत्वाभिमताधिकरणवृत्तिधर्म इति यावत् साधर्म्यं, विशेषधर्मः सपक्षविपक्षव्यावृत्तः पक्षमात्रधर्मः साध्यत्वाभिमतानधिकरणावृत्तिधर्म इति यावत् वैधर्म्यं, साधर्म्यञ्च वैधर्म्यञ्च ताभ्यामुपसंहारे="तस्मात्तथा, तस्मान्नतथा" इति पक्षे साध्यधर्मोपसंहारे कृते तद्धर्मविपर्ययोपपत्तेः=साधनं सिद्धिरुपपत्तिरित्यनर्थान्तरं, तदा साधर्म्यवैधर्म्ये परामृश्येते, तद्व्यापकः साध्यलक्षणो धर्मस्तद्धर्मस्तस्य यो विपर्ययोऽभावः प्रतिषेध इति यावत्, तस्य साधर्म्यवैधर्म्याभ्यां पक्षे साधनात् साधर्म्यवैधर्म्यसमौ=साधर्म्यसमवैधर्म्यसमौ जातिभेदौ भवत इत्यर्थः ।

**यदा** हि वादिना व्याप्तिसापेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां पक्षे साध्यमुपसंह्रियते, **तदा** प्रतिवादिना तन्निरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां यत्तत्र तद्विपरीतस्य साध्याभावस्य साधनं, **किमुक्तम्?** अन्वयव्याप्त्या व्यतिरेकव्याप्त्या च प्रवृत्तेन साधर्म्येण हेतुना वैधर्म्येण च हेतुना पक्षे साध्ये साधिते यत् साधर्म्यमात्रेण वैधर्म्यमात्रेण च हेतुकल्पेन तत्र तदभावस्योपपादनं, **किंबहुना** वादिनाऽन्वयव्याप्तिमता साधर्म्येण पक्षे साध्य-

धर्मोपसंहारे कृते यत् प्रतिवादिनस्तत्र साधर्म्येणैव प्रत्यवस्थानं स **"साधर्म्यसमः"** व्यतिरेकव्याप्तिमता वैधर्म्येण च पक्षे साध्यधर्मोपसंहारे कृते यत् वैधर्म्येणैव प्रत्यवस्थानं स **"वैधर्म्यसमः"** साधर्म्यं समं यस्मिन्नसौ "साधर्म्यसमः" वैधर्म्यं समं यस्मिन्नसौ "वैधर्म्यसमः" इति तद्व्युत्पत्तेरिति भावः ॥

**तत्र** शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात्, यत्प्रयत्नानन्तरीयकं तदनित्यं यथा घटादि, प्रयत्नानन्तरीयकश्च शब्दस्तस्मात्तथेति साधर्म्येणोपसंहारे जातिवादी साधर्म्येणैव प्रत्यवतिष्ठते शब्दो नित्यः अस्पर्शत्वाद्, यदस्पर्शं तन्नित्यं यथाऽऽत्मा, अस्पर्शश्च शब्दः, तस्मान्नित्य इति । न चात्रास्ति विशेषहेतुरनित्यघटसाधर्म्यात् प्रयत्नानन्तरीकत्वादनित्येन शब्देन भवितव्यं न पुनर्नित्यात्मसाधर्म्यादस्पर्शत्वान्नित्येनेति । नो चेन्नित्यस्तदाऽनित्योऽपि माभूदिति साधर्म्यसमस्य, शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात्, यदनित्यं न भवति तत्प्रयत्नानन्तरीयकं न भवति यथाऽऽत्मा, न तथा=अप्रयत्नानन्तरीयकः शब्दस्तस्मान्नतथेति वैधर्म्येणोपसंहारे जातिवादी वैधर्म्येणैव प्रत्यवतिष्ठते शब्दो नित्यः अस्पर्शत्वाद्, यन्नित्यं न भवति तदस्पर्शं न भवति यथा घटः, न तथा=अनस्पर्शः शब्दस्तस्मान्न तथेति । न चात्रास्ति विशेषहेतुः नित्यात्मवैधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्येन शब्देन भवितव्यं न पुनरनित्यघटवैधर्म्यादस्पर्शत्वान्नित्येनेति । नो चेन्नित्यस्तदाऽनित्योऽपि मा भूदिति च वैधर्म्यसमस्योदाहरणम् । उभौ चेमौ जातिभेदौ सत्प्रतिपक्षापरनामप्रकरणसमदेशनाभासौ । साधर्म्यवैधर्म्यावेव च केवलौ हेतुतया वादिनोपन्यस्तावित्यभिमानात्प्रत्यवस्थानमिति विवेकः ॥ २ ॥

अनयोरुत्तरमाह—

**"गोत्वाद्गोसिद्धिवत् तत्सिद्धिः"** ॥ ३ ॥

साधर्म्यवैधर्म्याभ्यामित्यनुवर्तते । गोत्वात्=व्यञ्जके व्यङ्ग्यप्रयोगः, गवेतरासमवेतत्वे सति गोमात्रसमवेताद् गोसाधर्म्यादश्वादिवैधर्म्याच्च सा-

स्नादिमत्त्वाद् गोसिद्धिवत्=यथा गोः सिद्धिर्भवति तथा तत्सिद्धिः=तदा तद्धर्मं परामृशति, साधर्म्यवैधर्म्याभ्यां साध्यधर्मस्यानित्यत्वस्य शब्दे सिद्धिर्भवतीत्यर्थः।

**चेद्** वयं साधर्म्यमात्रं वा वैधर्म्यमात्रं वा साध्यसाधनं प्रतिजानीमहि **तदा**ऽवश्यमेवमुपालभ्येमहि। **न चा**स्माभिः साधर्म्यमात्रं वा वैधर्म्यमात्रं वा साध्यसाधनं प्रतिज्ञायते **अपि च?** साध्येन स्वभावतः सम्बद्धं **किमुक्तं?** साध्यव्याप्तिविशिष्टम्। नच त्वदुपन्यस्तमस्पर्शत्वं साधर्म्यं वैधर्म्यञ्च भवदपि साध्यधर्मेण नित्यत्वेनास्ति स्वभावतः सम्बद्धम्। बुद्धिकर्मादौ व्यभिचारात्। न च तथाऽस्मदुपन्यस्तं प्रयत्नानन्तरीयकत्वं विद्यते। तस्य "यत्प्रयत्नानन्तरीयकं तदनित्यम्" इति सर्वत्र सम्बन्धावगमेन कुत्रापि व्यभिचारादर्शनात्। अयमेव चास्य स्वसाध्यसाधकत्वे विशेषहेतुः। **तस्मादस्था**ने ते प्रत्यवस्थानमिति भावः॥ ३॥

**सम्प्रति** क्रमप्राप्तमुत्कर्षसमादिजातिषट्कं तावदेकेन लक्षयति—

**"साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः"** ॥ ४॥

साध्यदृष्टान्तयोः=साध्यः पक्षः, साध्याश्रयत्वेन तस्यापि साध्यत्वात्, उपचाराद्वा धर्मिणि धर्मप्रयोगः, साध्यधर्मिणि पक्षे दृष्टान्ते च धर्मविकल्पात्=धर्म इत्यविशिष्टवचनं, तस्य विकल्पो नानाविधतया कल्पनं, तस्मात् साधर्म्यबलेन तत्सत्त्वासत्त्वापादनात्, उभयसाध्यत्त्वाच्च=उभयोः साध्यदृष्टान्तयोस्तुल्यतया साध्यत्वापादनाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः= उत्कर्षसमः अपकर्षसमः वर्ण्यसमः अवर्ण्यसमः विकल्पसमः साध्यसम इति षड् जातिभेदाः भवन्तीत्यर्थः।

**यत्** खलु वादिना पक्षे साध्योपसंहारे कृते प्रतिवादिनस्तत्रानिष्टस्य धर्मस्य दृष्टान्तसाधर्म्येणापादनं, **किमुक्तं?** परोक्तसाधनादेव तदव्यापकस्य दृष्टान्तधर्मस्य तत्र साध्येन समासञ्जनं, **किंबहुना** व्याप्तिमपुरस्कृत्य तत्र साधनीयधर्मविपर्ययोपपत्त्यर्थं यत्साधर्म्यबलेन प्रत्यवस्थानम्

अविद्यमानस्य दृष्टान्तधर्मस्य प्रसञ्जनमिति यावत् स **"उत्कर्षसमः"** अविद्यमानधर्मारोप उत्कर्षस्तेन समः, **यथा** "अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यादौ **यदि** घटसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्यः शब्दः **तदा** तस्मादेव घटसाधर्म्याद् घटवद् रूपवानपि स्यात्। नो चेद् रूपवान् तदाऽनित्योऽपि माभूत्। न चास्ति विशेषहेतुः प्रयत्नानन्तरीयकत्वादनित्येन भवितव्यं न पुना रूपवतेति। सोऽयं विरुद्धदेशनाभासः। विवक्षितविपरीतसाधनात्।१। **पक्षे** साधर्म्यबलेन विद्यमानधर्माभावापादनं **किमुक्तं?** परोक्तदृष्टान्तसाधर्म्येण तत्र पराभिमतधर्मान्तराभावप्रसञ्जनं, **किंबहुना** व्याप्तिमपुरस्कृत्य तत्र साधनीयधर्मविपर्ययोपपत्त्यर्थं यत्परोक्तसाधनबलेन प्रत्यवस्थानं विद्यमानधर्मविपर्ययासञ्जनमिति यावत् सो **"अपकर्षसमः"** धर्माभावोऽपकर्षस्तेन समः, **यथा** "अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यादौ **यदि** घटसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यः शब्दः **तदा** तस्मादेव घटसाधर्म्याद् घटवदश्रावणोऽपि स्यात्। नो चेदश्रावणस्तदाऽनित्योऽपि माभूत्। न चास्ति विशेषहेतुः प्रयत्नानन्तरीयकत्वादनित्येन भवितव्यं न पुनरश्रावणेनेति। सोऽयमसिद्धदेशनाभासः। पक्षत्वाभावसाधनात्।२। **दृष्टान्ते** पक्षधर्मापादनं, **किमुक्तं?** परोक्तसाधनादेव दृष्टान्ते सन्दिग्धसाध्यकत्वलक्षणस्य पक्षधर्मस्य प्रसञ्जनं, **किंबहुना** साधर्म्यबलेन पक्षे साधनीयधर्मविपर्ययोपपत्त्यर्थं यत्प्रत्यवस्थानं दृष्टान्ते पक्षधर्मासञ्जनमिति यावत् स **"वर्ण्यसमः"** सिषाधयिषितः पक्षधर्मो वर्ण्यस्तेन समः, **यथा** "अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यादौ **यदि** घटसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यत्वेन शब्दो वर्ण्यते **तदा** पक्षसाधर्म्यात्प्रयत्नानन्तरीयकत्वाद् शब्दवद् घटोऽप्यनित्यत्वेन वर्ण्यतां, नो चेद् वर्ण्यते तदा शब्दोऽपि मावार्णि। न चास्ति विशेषहेतुः प्रयत्नानन्तरीयकत्वात् सन्दिग्धसाध्यकतया शब्दोऽनित्यत्वेन वर्णयितव्यो न पुनर्घट इति। सोऽयमसाधारणानैकान्तिकदेशनाभासः। दृष्टान्तस्यापि सन्दिग्धसाधकत्वेन हेतोः सपक्षवृ-

त्तित्वानिश्चयात् ।३। **पक्षे** दृष्टान्तधर्मापादनं, **किमुक्तं?** परोक्तसाधनादेव पक्षेऽसन्दिग्धसाधकत्वलक्षणस्य दृष्टान्तधर्मस्य प्रसञ्जनं, **किंबहुना** दृष्टान्तसाधर्म्येण पक्षे साधनीयधर्मविपर्य्ययोपपत्त्यर्थं यत्प्रत्यवस्थानं दृष्टान्तधर्मासञ्जनमिति यावत् सो **"अवर्ण्यसमः"** वर्ण्यविपर्ययः सिद्धो दृष्टान्तधर्मोऽवर्ण्यस्तेन समः, **यथा** "अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यादौ **यदि** घटसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्यः शब्दः, **तदा** तस्मादेव साधर्म्याद् घटवदसन्दिग्धसाध्यकोऽपि स्यात् । नो चेदसन्दिग्धसाध्यकस्तदाऽनित्योऽपि माभूत् । न चास्ति विशेषहेतुः प्रयत्नानन्तरीयकत्वादनित्येन भवितव्यं न पुनरसन्दिग्धसाध्यकेनेति । सोऽयमसिद्धदेशनाभासः । सन्दिग्धसाधकत्वलक्षणपक्षत्वाभावेनाश्रयासिद्धेः ।४। **साधनधर्मयुक्ते** दृष्टान्ते धर्मान्तरविकल्पदर्शनात्पक्षे साध्यधर्मविकल्पापादनं, **किमुक्तं?** दृष्टान्ते धर्मविकल्पेन पक्षे धर्मविकल्पप्रसञ्जनं, **किंबहुना** दृष्टान्तसाधर्म्येण पक्षे साधनीयधर्मविपर्य्ययोपपत्त्यर्थं यत्प्रत्यवस्थानं स **"विकल्पसमः"** कल्पनं कल्पः, विविधः कल्पो विकल्पस्तेन समः **यथा** "अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यादौ **यत्प्रयत्नानन्तरीयकं** तत्किञ्चिन्मृदु दृष्टं **यथा** दुकूलराङ्कवशय्यादि, किञ्चित्कठिनं **यथा** घटकर्परपरश्वादि, शब्दोऽपि प्रयत्नानन्तरीयकः अतस्तेनाप्यनित्येनेव नित्येनापि भवितव्यम् । नो **चेद्** भवति नित्यः **तदा**ऽनित्योऽपि माभूत् । न चास्ति विशेषहेतुरेकत्र प्रयत्नानन्तरीयके धर्मविकल्पेन भवितव्यं नान्यत्रेति । सोऽयं साधारणानैकान्तिकदेशनाभासो विरुद्धदेशनाभासो वा ।५। **पक्षदृष्टान्तयोस्तुल्यतया** साध्यत्वापादानं, **किमुक्तं?** दृष्टान्ते पक्षतुल्यताप्रसञ्जनं, **किंबहुना** साधर्म्यबलेन पक्षे साधनीयधर्मविपर्य्ययोपपत्त्यर्थं यत्प्रत्यवस्थानं स **"साध्यसमः"** साधनीयो धर्मःसाध्यस्तेन समः, **यथा** "अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यादौ **यदि** यथा घटस्तथा शब्दः, प्राप्तं **तर्हि** यथा शब्दस्तथा घट इति । शब्दश्चानित्यतया साध्य इति कामं घटोऽप्यनित्यतया साध्य एव । नोचेत्साध्यो न तर्हि यथा घटस्तथा शब्दः । न चास्ति विशेषहेतुरुभयोस्तुल्यतायामेकः साध्यः सा-

न्नापर इति । सोऽयमसाधारणानैकान्तिकदेशनाभासः । दृष्टान्तस्यापि साध्यत्वेन हेतोः सपक्षवृत्तित्वानिश्चयादिति भावः ॥

तत्र "साध्यदृष्टान्तयोर्धर्मविकल्पात्" इत्यनेनोत्कर्षसमादयः पञ्च जातिभेदाः लक्षिताः, "उभयसाध्यत्वात्" इत्यनेन चैकः साध्यसमः इति विवेकः ॥ ४ ॥

अथ पूर्वं पञ्चानामुत्तरमाह—

**"किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः"** ॥ ५ ॥

किञ्चित्साधर्म्यात्=व्याप्तिसहितात्साधर्म्यविशेषादुपसंहारसिद्धेः=पक्षे साध्योपसंहारसिद्धेर्वैधर्म्यात्=एतद्विरुद्धाद् व्याप्तिरहितात्साधर्म्यमात्रादप्रतिषेधः=पक्षे साधनीयधर्मविपर्य्ययः प्रतिषेधः, स नोपपद्यत इत्यर्थः ।

अनित्यत्वेन व्याप्तं हि प्रयत्नानन्तरीयकत्वं, न पुना रूपवत्त्वादिना । व्यभिचारात् । नहि यत्प्रयत्नानन्तरीयकं तदनित्यमितिवद् यत्प्रयत्नानन्तरीयकं तद् रूपवदिति व्याप्तिरुपपद्यते । कर्मणः प्रयत्नानन्तरीयकत्वेऽप्यरूपत्वात् । नापि यत्प्रयत्नानन्तरीयकं तदश्रावणमित्येतत् सम्भवति । शब्दतिरोभावस्य प्रयत्नानन्तरीयकत्वेऽपि श्रावणत्वात् । नापि यत्प्रयत्नानन्तरीयकं तदनित्यतया सन्दिग्धमसन्दिग्धं वेति युज्यते। घटादौ व्यभिचारात् । नहि प्रयत्नानन्तरीयकोऽपि घटः कदाचिदनित्यतया सन्दिह्यते । शब्दश्च सन्दिह्यते । वादिप्रतिवादिसम्प्रतिपत्तिविप्रतिपत्ती हि तत्र कारणम् । अस्ति वादिप्रतिवादिनोरुभयोरपि घटेऽनित्यत्वसम्प्रतिपत्तिः, शब्दे च तद्विप्रतिपत्तिः । अत एव तत्र तत्सन्देहः घटे च तदसन्देहः । नापि यत्प्रयत्नानन्तरीयकं तन्नित्यमिति सङ्गच्छते । घटादीनां प्रयत्नानन्तरीयकत्वेऽपि नित्यत्वाभावात् । यच्च येन न व्याप्तं तेन तस्य पक्षदृष्टान्तयोरापादनं कथं सङ्गच्छेत । कथञ्च तदसङ्गतौ पक्षे पराभिमतानित्यत्वलक्षणसाध्यप्रतिषेधोऽप्युपपद्येत । नहि साधर्म्यमात्रात्किञ्चिदापादयितुं वा प्रतिषेद्धुं वा शक्यते । साधर्म्यमात्रञ्च ते कृतकत्वं न साधर्म्यविशेषः । व्याप्तिरहितत्वात् । अतोऽनुपपन्नः प्रतिषेध इति भावः ५ ॥

अथ षष्ठस्य साध्यसमस्योत्तरमाह—

"साध्यातिदेशाच्च दृष्टान्तोपपत्तेः" ॥ ६ ॥

अप्रतिषेध इत्यनुवर्तते । समुच्चायकश्चकारः । साध्यातिदेशात्=इतरधर्म-स्येतरस्मिन् सम्बन्धोऽतिदेशः, शब्दाश्रयत्वेन साध्यस्यानित्यत्वधर्मस्यातिदेशः साध्यातिदेशस्तस्माद् दृष्टान्तोपपत्तेः=घटस्य दृष्टान्ततोपपत्तेरप्रतिषेधः=पक्षे साध्यप्रतिषेधो नोपपद्यत इत्यर्थः ।

चेद् वयं "यथा घटः प्रयत्नानन्तरीयकः सन्ननित्यस्तथा शब्दोऽपि" इत्यनेन साध्यधर्मिणि शब्दे घटाभेदमतिदिशेम तदाऽवश्यं घटोऽपि शब्दवदनित्यतया साध्येत, तद्दृष्टान्तभावप्रतिषेधश्चोपपद्येत । दृष्टान्तदा-र्ष्टान्तिकभावस्य भेदनियतत्वेनाभेदेऽसम्भवात् । न चास्माभिस्तदभेदस्त्व-त्रातिदिश्यते अपि च? तद्धर्मोऽनित्यत्वम् । न च धर्मातिदेशो धर्मिणोरभेदं प्रयोजयति । गोगवययोर्धर्मातिदेशे सत्यपि भेददर्शनात् । न चाभेदाभावे तस्य शब्दवत्साध्यत्वमुपपद्यते, तद्दृष्टान्तभावो वा कथञ्चित्प्रतिषेद्धुं शक्यते । दृष्टान्तश्च घटः । लौकिकपरीक्षकाणां तत्र प्रयत्नानन्तरीयकत्वानित्यत्व-बुद्धेः समानत्वात् । अतोऽनुपपन्नः पक्षे साधनीयधर्मविपर्यय इति भावः ॥ ६ ॥

क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति—

"प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वाद-
प्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ" ॥ ७ ॥

भिन्नक्रमश्चः । हेतोरित्यनन्तरं "साधकत्वे" इति शेषः । साध्यं=साधनीयधर्मविशिष्टं प्राप्य=सङ्गत्याप्राप्य वा=असङ्गत्य वा हेतोः=साध-नस्य साधकत्वे प्राप्त्यप्राप्तिसमौ=प्राप्तिसमाप्राप्तिसमौ भवतः, कुतः? प्राप्त्या=हेतोः साध्यप्राप्त्याऽविशिष्टत्वात्=विशिष्टत्वं विशेषो भेदस्तदभावात्, अप्राप्त्याच=साध्याप्राप्त्या चासाधकत्वात्=साधकत्वाभावादित्यर्थः ।

शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति त्वत्प्रयुक्तो हेतुः किं प्राप्य-साध्यं साधयेद् अप्राप्य वा? । प्राप्य चेत् तदा तस्य साध्यतो भेदाभा-

वात् किं कस्य साधनं साध्यं वा स्यात् । नह्यभेदे साध्यसाधनभावः उपपद्यते । तस्य भेदाधिष्ठानत्वनियमेनाभेदे सम्भवाभावात् । यस्य येन प्राप्तिस्तस्य तेनाभेदे तु नास्ति किञ्चिद् विवादः । सागरं प्राप्तायाः गङ्गायाः सागरतो भेदादर्शनात् । अप्राप्य चेत् तदा नायं साधकः स्यात् । अतिप्रसङ्गात् । नहि साध्येनाप्राप्तौ हेतुस्तत्साधकः सम्भवति । सम्भवेच्चेत् तदा सर्वः सर्वं साधयेदित्येवं पक्षे साध्याभावोपपत्त्यर्थं यत्प्रतिवादिनः प्राप्तिलक्षणेन प्राप्तहेतुसाधर्म्येण प्रत्यवस्थानं स **"प्राप्तिसमः"** यच्चाप्राप्तिलक्षणेनाप्राप्तहेतुसाधर्म्येण प्रत्यवस्थानं सो **"अप्राप्तिसमः"** प्राप्त्या समः प्राप्तिसमः, अप्राप्त्या समोऽप्राप्तिसम इति तद्व्युत्पत्तेरिति भावः ॥

**तत्र** प्राप्त्यप्राप्तिसमाविति लक्ष्यपदं, शेषं लक्षणम् । उभौ चेमौ साधनप्रतिषेधकौ प्रतिकूलतर्कदेशनाभासौ । साधनप्रतिषेधस्य प्रयोजनस्यैकत्वेऽपि "प्राप्य, अप्राप्य वा" इति विकल्पभेदात् भेदविवक्षया तयोर्भेदेन निर्देशः, **यथा** वने वृक्षाणां बहुत्वसंख्याविवक्षया **"वृक्षाः"** इति निर्देश इति विवेकः ॥ ७ ॥

अनयोरुत्तरमाह—

**"घटादिनिष्पत्तिदर्शनात्"** ॥ ८ ॥

"अप्रतिषेधः" इति "प्राप्य साध्यम्" इति च पूर्वसूत्राभ्यामनुवर्तते । घटादिनिष्पत्तिदर्शनात्=साध्यं प्राप्य दण्डादिभिः साधनैर्घटादिनिष्पत्तिदर्शनात् पक्षे साध्यप्रतिषेधो नोपपद्यते इत्यर्थः ।

**न** वयं साध्यमप्राप्य हेतुं साधकं ब्रूमः, पक्षावृत्तौ तस्यासिद्धत्वप्रसङ्गात्, असिद्धस्य साधकत्वे चातिप्रसङ्गात्, **अपि च ?** साध्यं प्राप्य । यथादर्शनमभ्युपगमस्यैव न्याय्यत्वात् । दण्डचक्रसूत्रादयस्तावद्धेतुविशेषाः साध्यं मृत्स्नादिकं प्राप्य साधनीयधर्मं घटादिकं निष्पादयन्तो दृश्यन्ते । मृत्स्नादिप्राप्तानाञ्च तेषां न गङ्गासागरवदविशेषः । यथा चैतत् तथा प्रकृतेऽपि वेदितव्यम् । हेतुः साध्यं प्राप्य साधनीयधर्मं साधयति, तेन प्राप्त्या च तस्य न दण्डादिवदविशेषः । प्राप्तिमात्रे तन्नियमाभावात् । **अतो**ऽनुपपन्नः पक्षे साध्यप्रतिषेध इति भावः ॥ ८ ॥

क्रम प्राप्तौ **प्रसङ्गसमप्रतिदृष्टान्तसमौ** लक्षयति—

**"दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रति-दृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ"** ॥ ९ ॥

दृष्टान्तस्य=पक्षे साध्यवत्त्वोपपत्त्यर्थमुपन्यस्तस्य दृष्टान्तस्य कारणानपदेशात्=साध्यवत्त्वे कारणस्य प्रमाणस्यानपदेशात् अनभिधानात्, प्रतिदृष्टान्तेन=प्रतिकूलदृष्टान्तेन प्रत्यवस्थानाच्च=साध्यविपर्य्ययापादनाच्च प्रसङ्गप्रतिदृष्टान्तसमौ=प्रसङ्गसमप्रतिदृष्टान्तसमौ भवत इत्यर्थः ।

**योऽयं** पक्षे साध्यवत्त्वोपपत्त्यर्थं दृष्टान्तोऽपदिश्यते यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यत्र "घटः," तस्य साध्यवत्त्वेऽपि किञ्चित्प्रमाणमपदेष्टव्यम् । नचापदिश्यते । अस्ति च पक्षवत्तत्रापि प्रमाणगोचरा प्रश्नप्रसक्तिः । तत्र प्रमाणोपन्यासे च यस्तावद् दृष्टान्त उपादेयस्तत्राप्येवमित्यनवस्थामावहन्त्या प्रमाणप्रश्नपरम्पराप्रसक्त्या यत्प्रत्यवस्थानं, **किमुक्तं?** पक्षे साध्याभावोपपत्त्यर्थं यत्प्रतिवादिनः प्रसङ्गापादनं स **"प्रसङ्गसमः"** प्रश्नपरम्पराप्रसक्तिः प्रसङ्गस्तेन सम इति तद्व्युत्पत्तेः । शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यत्र दृष्टान्तो घटः प्रतिदृष्टान्तः आकाशः । तत्र घटदृष्टान्तेन चेदनित्यः शब्दस्तदाऽऽकाशदृष्टान्तेन नित्यः किं न स्यात् । नच घटदृष्टान्तेन तस्यानित्यत्वं नाकाशदृष्टान्तेन नित्यत्वमित्यत्रास्ति कश्चिद् विशेषहेतुरित्येवं हेतोरनङ्गत्वधिया प्रतिदृष्टान्तमात्रबलेन यत्प्रतिवादिनः प्रत्यवस्थानं पक्षे साधनीयधर्मविपर्य्ययोपपादनमिति यावत् स **"प्रतिदृष्टान्तसमः"** प्रतिकूलो दृष्टान्तः प्रतिदृष्टान्तस्तेन समः इति तद्व्युत्पत्तेरिति भावः ॥

**तत्रा**नवस्थादेशनाभासः प्रसङ्गसमः, बाधदेशनाभासश्च प्रतिदृष्टान्तसमः । **साध्यसमो** हि दृष्टान्ते पक्षवद् हेत्वाद्यवयवं प्रसञ्जयति, दृष्टान्तगतस्यानित्यत्वस्य पञ्चावयवप्रयोगसाध्यतां प्रसञ्जयतीति यावत्, **प्रसङ्गसमस्तु** दृष्टान्तगतस्यानित्यत्वस्य प्रमाणमात्रसाध्यतामित्यपौनरुक्त्यमिति विवेकः ॥ ९ ॥

तत्र प्रसङ्गसमस्योत्तरमाह—

**"प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः" ॥ १० ॥**

दृष्टान्तस्येत्यनुवर्तते । प्रदीपोपादानप्रसङ्गनिवृत्तिवत्=प्रदीपदर्शनार्थं प्रदीपान्तरोपादानप्रसङ्गस्य निवृत्तिवत् तद्विनिवृत्तिः=दृष्टान्तस्य साध्यवत्त्वे कारणापदेशप्रसङ्गस्य निवृत्तिर्वेदितव्येत्यर्थः

**यथा** हि घटादिदर्शनाय प्रदीप उपादीयते न पुनः प्रदीपदर्शनाय प्रदीपान्तरं, तस्य स्वेनैव दृश्यत्वेन प्रदीपान्तरोपादानप्रसङ्गस्य विनिवृत्तेः, **एवं** साध्यवत्त्वेन सन्दिग्धे पक्षे साध्यवत्त्वनिश्चयाय प्रमाणमपदिश्यते न-पुनर्दृष्टान्ते । तत्र प्रागेव साध्यवत्त्वस्य निश्चितत्वेन प्रमाणापदेशप्रसङ्गस्य विनिवृत्तेः । **किमुक्तं?** यथा हि प्रदीपदर्शनार्थं प्रदीपान्तरोपादानं नि-रर्थकं तस्यान्तरेणापि प्रदीपान्तरं दृश्यत्वात् **तथा** दृष्टान्ते साध्यवत्त्वनि-श्चयार्थं प्रमाणापदेशोऽपिऽ निरर्थकः । तस्यान्तरेणापि प्रमाणापदेशं तत्र निश्चितत्वात् । अनिश्चितञ्च सर्वत्र साध्यते न निश्चितम् । **अतोऽस्थाने** ते प्रत्यवस्थानमिति भावः ॥ १० ॥

प्रतिदृष्टान्तसमस्योत्तरमाह—

**"प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः" ॥ ११ ॥**

प्रतिदृष्टान्तहेतुत्वे च=प्रतिदृष्टान्तस्य साधकत्वे च दृष्टान्तः=मदुपात्तो दृष्टान्तोऽहेतुः=असाधको न=नोपपद्यत इत्यर्थः ।

यथैव प्रतिदृष्टान्तस्तथैव दृष्टान्तः, तत्र प्रतिदृष्टान्तश्चेत्साधकस्तर्हि दृष्टान्तोऽपि नासाधकः सम्पद्यते । समानत्वात् । **अथ** प्रतिदृष्टान्त एव साधको न दृष्टान्त इति चेत्प्रत्यवतिष्ठसे? **तर्हि** विशेषहेतुर्वक्तव्यः । न च कश्चिद् विशेषहेतुरुच्यते । दृष्टान्तस्य साधकत्वे चास्ति विशेष-हेतुः साध्यव्याप्तिः । न चासौ प्रतिदृष्टान्ते विद्यते । **तस्माद्** दृष्टान्तः एव साधको न प्रतिदृष्टान्तः । **अथ** यथा प्रतिदृष्टान्तो न साधकस्तथा दृष्टान्तोऽपि साधको माभूदिति चेत्प्रत्यवस्थीयते **तर्हि** मा प्रत्यवति-ष्ठस्व प्रतिदृष्टान्तासाधकत्वस्य स्वकण्ठेनोक्तत्वात् । **तथा च** दृष्टान्तः

एव साधकः पर्य्यवस्यति न प्रतिदृष्टान्त इति कृतं ते प्रत्यवस्थानेनेति भावः ॥ ११ ॥

क्रमप्राप्तमनुत्पत्तिसमं लक्षयति—

**"प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः" ॥ १२ ॥**

प्रागुत्पत्तेः=उत्पत्तेः पूर्वमनुत्पन्ने पक्षे कारणाभावात्=साध्यसाधकत्वात्कारणं हेतुस्तदभावादनुत्पत्तिसमः=अनुत्पत्तिसमो भवतीत्यर्थः ।

शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यत्र पक्षः शब्दः, स चेदनित्यस्तर्ह्युत्पत्तिधर्मको वक्तव्यः । यश्चोत्पत्तिधर्मकस्तस्योत्पत्तेः पूर्वमनुत्पत्त्याऽवश्यं भवितव्यम् । अनुत्पन्ने च तस्मिन्ननित्यत्वसाधकस्य प्रयत्नानन्तरीयकत्वस्य हेतोरभावो विस्पष्टः । तदभावाच्च प्राप्तः खलु नित्यः शब्दोनानित्य इत्येवं यथाऽनुत्पन्नास्तन्तवो न पटस्य कारणं तथा शब्दोत्पत्तेः प्रागनुत्पन्नं प्रयत्नानन्तरीयकत्वमपि नानित्यत्वस्य कारणमित्यनुत्पन्नहेतुसाधर्म्येण यत्प्रतिवादिनः प्रत्यवस्थानं पक्षे साध्यविपर्य्ययोपपादनमिति यावत् सो **"अनुत्पत्तिसमः"** स्वरूपसिद्धिरुत्पत्तिस्तदभावोऽनुत्पत्तिस्तया समः इति तद्व्युत्पत्तेरिति भावः ॥

अयञ्चासिद्धदेशनाभास इति ध्येयम् ॥ १२ ॥

अस्योत्तरमाह—

**"तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः" ॥ १३ ॥**

उत्पन्नस्य=उत्पत्तिधर्माश्रयस्य सतस्तथाभावात्=तथात्वात् साधनीयधर्माश्रयत्वेन सन्दिह्यमानत्वात् पक्षत्वादिति यावत् कारणोपपत्तेः=साध्यसाधकस्य हेतोस्तत्र सद्भावोपपत्तेः कारणप्रतिषेधः="कारणाभावात्" इत्युक्तः कारणप्रतिषेधो न=नोपपद्यत इत्यर्थः ।

उत्पन्नः खलु शब्दः साधनीयधर्माश्रयत्वेन सन्दिह्यते नानुत्पन्नः । सन्देहस्य धर्मिणि सत्येव सम्भवात् । उत्पन्ने च तस्मिन् कारणोपपत्तेरनुपपन्नः प्रतिषेध इति भावः ॥ १३ ॥

क्रमप्राप्तस्य **संशयसमस्य** लक्षणमाह—

**"सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयः" ॥ १४ ॥**

सामान्यदृष्टान्तयोः=पक्षवृत्तिसामान्यस्य दृष्टान्तस्य चैन्द्रियकत्वे=इन्द्रियग्राह्यत्वे समाने=तुल्ये सति नित्यानित्यसाधर्म्यात्=नित्यं सामान्यमनित्यो दृष्टान्तस्तयोः समानो धर्मः साधर्म्यम्—ऐन्द्रियकत्वं, तस्मात् प्रत्यवस्थाने संशयसमः=संशयसमो भवतीत्यर्थः ।

**पक्षे** नित्यानित्योभयसाधर्म्यात्साध्यसंशयोद्भावनं, **किमुक्तं?** संशयहेतुना समानधर्मेण पक्षे साध्यसंशयापादनं, **किंबहुना** पक्षे साधनीयधर्मविपर्य्ययोपपत्त्यर्थं यत्प्रतिवादिनो नित्यानित्योभयसाधर्म्येण प्रत्यवस्थानं स **"संशयसमः"**=सन्देहः संशयस्तेन समः, **यथा** शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यत्र पक्षः शब्दस्तद्वृत्तिसामान्यं शब्दत्वं नित्यं, दृष्टान्तो घटः सचानित्यः । उभयञ्चैन्द्रियकम् । शब्दोऽप्यैन्द्रियकः । तत्र चेदनित्यघटसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यत्वं निर्णीयते, तदा नित्यसामान्यानित्यघटोभयसाधर्म्यादैन्द्रियकत्वात् तत्सन्दिह्यतामपि । नो **चेत्** सन्दिह्यते **तदा** निर्णयोऽपि माकारि । नह्यस्ति विशेषहेतुरनित्यघटसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यत्वनिर्णयेन भवितव्यं न पुनर्नित्यानित्यसामान्यघटोभयसाधर्म्यादैन्द्रियकत्वादनित्यत्वसंशयेनेति भावः ॥

**तत्रै**कसाधर्म्यात्साधर्म्यसमः, उभयसाधर्म्याच्च संशयसमः । स चानैकान्तिकदेशनाभास इति विवेकः ॥ १४ ॥

अस्योत्तरमाह—

**"साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा च संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः" ॥ १५ ॥**

साधर्म्यात्=विषयिणि विषयप्रयोगः; समानधर्मदर्शनात् संशये=सत्यपि

संशये न संशयः=न चेह संशयः सम्भवति, **कुतः?** वैधर्म्यात्=विपर्यिणि विपर्ययप्रयोगः पूर्ववत्, विशेषधर्मदर्शनात्, उभयथा च=उभाभ्यां साधर्म्यवैधर्म्यदर्शनाभ्याञ्च संशये=संशयाभ्युपगमेऽत्यन्तसंशयप्रसङ्गः=संशयानुच्छेदप्रसङ्गः—अन्तमतिक्रान्तः संशयः प्रसज्येतेति यावत्, सामान्यस्य च=विशेषधर्मदर्शनसहितस्य साधर्म्यदर्शनस्य च नित्यत्वानभ्युपगमात्=नित्यसंशयहेतुत्वानभ्युपगमादप्रतिषेधः=पक्षे साध्यप्रतिषेधो नोपपद्यत इत्यर्थः ।

**साधर्म्यदर्शनमात्रञ्चेत्** संशयकारणं भवेत् **तदा**ऽवश्यं शब्दे नित्यानित्योभयसाधर्म्यस्यैन्द्रियकत्वस्य दर्शनात् संशयो जायेत । न चास्ति साधर्म्यदर्शनमात्रं संशयस्य कारणम् **अपि तु** विशेषधर्मादर्शनसहितं साधर्म्यदर्शनम् । न च शब्दे साधर्म्यदर्शनवेलायामनित्यत्वसाधनस्य कृतकत्वस्य विशेषधर्मस्य दर्शनं न विद्यते । न च तस्मिन् विद्यमाने पुनः साधर्म्यात्संशय उत्पत्तुमर्हति । तस्य तद्विरोधित्वात् । नहि शिरःपाण्यादिविशेषधर्मदर्शने सति स्थाणुपुरुषसाधर्म्यादुच्चैस्तरत्वादेः स्थाणुर्वा पुरुषो वेति संशय उत्पद्यते । **चेद्** विशेषधर्मदर्शनेऽपि साधर्म्यदर्शनात् संशय उत्पद्येत, **तदा** नासौ कर्हिचिदुच्छिद्येत । तत्कारणस्य साधर्म्यस्य कदाप्यनुच्छेदात् । नहि कारणानुच्छेदे कार्य्यमुच्छिद्यते । विशेषधर्मदर्शनसहितस्य साधर्म्यदर्शनस्य च न संशयहेतुत्वमभ्युपगम्यते । अपसिद्धान्तात् । **अतो**ऽनुपपन्नः संशयोद्भावनेन पक्षे साधनीयधर्मप्रतिषेधः इति भावः ॥ १५ ॥

क्रमप्राप्तं **प्रकरणसमं** लक्षयति—

**"उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः"** ॥ १६ ॥

उभयसाधर्म्यात्=उभयेन नित्येन चानित्येन च साधर्म्यात् समानधर्मात् प्रक्रियासिद्धेः=प्रक्रियायाः प्रकरणस्य पक्षस्य स्वपक्षस्येति यावत् सिद्धेरुपपत्तेः प्रकरणसमः=प्रकरणसमो भवतीत्यर्थः ।

अनित्यसाधर्म्येण नित्यसाधर्म्येण वा वाद्युक्तस्य यस्य हेतोः साध्या-

भावोपपत्त्यर्थं प्रतिवादिना नित्यसाधर्म्यादनित्यसाधर्म्याद्वा पक्षे स्वाभिमतं साध्यं साध्यते **किमुक्तं ?** वादिनाऽनित्यसाधर्म्येण पक्षे साध्ये साधिते यत्प्रतिवादिना तत्र नित्यसाधर्म्येण, नित्यसाधर्म्येण साधिते चानित्यसाधर्म्येण प्रत्यवस्थीयते **किंबहुना**—धर्मिणि पक्षे साधनीयधर्मस्य साध्यस्य निर्णयार्थं वादिना प्रयुक्तस्यानित्यसाधर्म्यस्य वा नित्यसाधर्म्यस्य वा यस्य हेतोः प्रतिपक्षीभूतं नित्यसाधर्म्यं वाऽनित्यसाधर्म्यं वा हेत्वन्तरं प्रतिवादिना प्रयुज्यते, स **"प्रकरणसमः"** प्रक्रियते साध्यत्वेनाधिक्रियत इति व्युत्पत्त्या प्रकरणं पक्षः, स च साध्यवत्त्वे सन्दिग्धः, अयमपि तथा, तस्मात्तेन समः, **यथा** "शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यनित्यघटसाधर्म्येण प्रयत्नानन्तरीयकत्वेन वादिना पक्षे साध्ये साधिते प्रतिवादिनः "शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्" इति नित्यसामान्यसाधर्म्येण श्रावणत्वेन "शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्" इति नित्यसामान्यसाधर्म्येण श्रावणत्वेन पक्षे साध्ये साधिते "शब्दोऽनित्यःप्रयत्नानन्तरीयकत्वाद् घटवत्" इत्यनित्यघटसाधर्म्येण प्रयत्नानन्तरीयकत्वेन प्रत्यवस्थानमिति भावः।

**तत्र** सत्प्रतिपक्षापरनामप्रकरणसमहेत्वाभासदेशनाभासोऽयं प्रकरणसमः। अत्र हि स्वपक्षनिश्चयेन "मया वादिपक्षसाधनं दूषणीयम्" इति बुद्ध्या प्रतिवादी प्रतिपक्षसाधनं प्रयुङ्क्ते, प्रकरणसमहेत्वाभासे च सत्प्रतिपक्षतया वादिनःसाधनमनिश्चायकं करोमीति बुद्ध्या। साधर्म्यसमसंशयसमयोस्तु वादिसाधनेन साम्यमात्रापादनेन तद्दूषणं नतु स्वपक्षनिश्चयेनेति विवेकः।

**इदमत्रबोध्यम्**—यथाहि नित्यसाधर्म्येणानित्यसाधर्म्येण च प्रत्यवस्थाने प्रकरणसमद्वयं तथा नित्यवैधर्म्येणानित्यवैधर्म्येण च प्रत्यवस्थानेऽपि प्रकरणसमद्वयमिति प्रकरणसमचतुष्टयं वेदितव्यम्। सूत्रे च **"उभयसाधर्म्यात्"** इत्येतदुपलक्षणम् **"उभयवैधर्म्यात्"** इत्यपि द्रष्टव्यम्। उदाहरणन्त्वनित्यवैधर्म्येण प्रयोगे नित्यवैधर्म्येण, नित्यवैधर्म्येण प्रयोगे चानित्यवैधर्म्येण प्रत्यवस्थानमिति ॥ १६ ॥

अस्योत्तरमाह—

**"प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः"** ॥ १७ ॥

प्रतिपक्षात्= प्रतिपक्षसाधनात् प्रकरणसिद्धेः= प्रकरणस्य प्रतिपक्षस्य सिद्धेरुपपत्तेः प्रतिषेधानुपपत्तिः= वादिपक्षस्य प्रतिषेधो नोपपद्यते, कुतः ? प्रतिपक्षोपपत्तेः=प्रतिपक्षसाधनान्तरापेक्षया तस्यापि प्रतिपक्षत्वोपपत्तेरित्यर्थः।

उभयसाधर्म्यात्स्वपक्षसिद्धिं ब्रुवता प्रतिवादिना वादिपक्षस्य सिद्धिरप्युक्ता भवति। तस्याप्युभयसाधर्म्यसाध्ययोः पक्षयोरेकतरत्वात्। नहि वादिनाऽनित्यसाधर्म्येण साधितः पक्षः प्रतिप्रयोगान्तरे प्रतिवादिनः पक्षो न सम्पद्यते। नच तत्सम्पत्तौ पुनस्तत्प्रतिषेधो युज्यते। सिद्धस्य प्रतिषेधासम्भवात्। **अतो**ऽनुपपन्नस्तत्प्रतिषेध इति भावः ॥ १७ ॥

अथा**हेतुसमं** लक्षयति—

**"त्रैकाल्यासिद्धेर्हेतोरहेतुसमः"** ॥ १८ ॥

हेतोः=साधनस्य त्रैकाल्यासिद्धेः=त्रिषु कालेषु पूर्वोत्तरसमकालेषु साध्यसाधकत्वासिद्धेरहेतुसमः=अहेतुसमो भवतीत्यर्थः।

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति वादिना प्रयुक्ते किमयं हेतुः साध्यात् पूर्वं वा पश्चाद्वा सह वा भवेदिति वक्तव्यम्। पूर्वं चेद् ? हेतुत्वासिद्धिः। तदानीं हेतुमतः साध्यस्यैवाभावात्। नह्यसति हेतुमति कश्चिद् हेतुरुपपद्यते। तदपेक्षयैव ह्यसौ हेतुः। अन्यथा कस्यायं हेतुः स्यात्। पश्चाच्चेत् ? तदाऽपि तथा। साध्यस्य पूर्वमेव सिद्धत्वात्। नहि सिद्धे साध्ये भवन् कश्चिद् हेतुतामुपगच्छति। सह चेत् ? तदा सुतराम्। सहभाविनोर्हेतुहेतुमद्भावासम्भवात्। नहि सव्येतरविषाणयोः परस्परं हेतुहेतुमद्भावः सम्भवति। न च सहभाविनोः किं कस्य साधनं किं कस्य साध्यमिति वा निर्धारयितुं शक्यते। विनिगमनाविरहादित्येवं पक्षे साध्याभावोपपत्त्यर्थं यत्प्रतिवादिनोऽहेतुसाधर्म्येण प्रत्यवस्थानं हेतोः

साध्यसाधकत्वाभावापादनं कालत्रयेऽपि हेतुत्वासम्भवेनाहेतुत्वकथनं हेतुत्वप्रतिषेधनमिति यावत् सो **"अहेतुसमः"** अहेतुस्त्रैकाल्यासिद्धेर्दण्डादिस्तेन सम इति तद्व्युत्पत्तेरिति भावः ॥

अयञ्च प्रतिकूलतर्कदेशनाभास इति ध्येयम् ॥ १८ ॥

अस्योत्तरमाह—

**"न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः"** ॥ १९ ॥

हेतोरित्यनुवर्तते । त्रैकाल्यासिद्धिः=हेतोस्त्रैकाल्यासिद्धिर्न=न भवति, **कुतः?** हेतुतः=साधनतः साध्यसिद्धेः=साध्यस्य सिद्धेरित्यर्थः ।

**यद्धि** यतः सिध्यति **तत**स्तेन पूर्वमवश्यं भवितव्यम् । अन्यथा ततस्तत्सिद्ध्यनुपपत्तेः । साध्यस्य सिद्धिस्तु हेतुतः प्रत्यक्षा । नहि निर्वर्तनीयस्य निर्वृत्तिर्विज्ञेयस्य च विज्ञप्तिर्हेतुतो भवन्ती न कस्यचित्प्रत्यक्षायते । यच्च प्रत्यक्षं न तत्पर्यनुयोगमर्हति । प्रत्यक्षमाहात्म्यस्य केनाप्यनभिभवनीयत्वात् । न च पूर्वं साध्याभावे कस्यायं हेतुरित्यपि युक्तः पर्य्यनुयोगः । यन्निर्वर्त्त्यते यच्च विज्ञायते तस्येत्युत्तरयितुं शक्यत्वात् । **अतो**ऽनुपपन्नस्त्रैकाल्यासिद्ध्या हेतोः प्रतिषेध इति भावः ॥ १९ ॥

यादृशः प्रतिवादिनः प्रतिषेधस्तादृशमुत्तरान्तरमाह—

**"प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः"** ॥२० ॥

उत्तरान्तरसमुच्चयार्थश्चकारः । प्रतिषेधानुपपत्तेः=प्रतिषेधस्य त्रैकाल्यासिद्धेः प्रतिषेद्धव्याप्रतिषेधः=प्रतिषेद्धव्यस्य हेतोः प्रतिषेधो नोपपद्यते इत्यर्थः ।

**यथा** हि हेतुः साध्यात् पूर्वं पश्चात् सह वा भवन् न हेतुरुपपद्यते **तथा** प्रतिषेधोऽपि प्रतिषेद्धव्यात्पूर्वं पश्चात् सह वा भवन् न प्रतिषेधः उपपद्यते । तत्रेवात्रापि पर्य्यनुयोगतुल्यत्वात् । प्रतिषेधानुपपत्त्या च प्रतिषेद्धव्यस्य प्रतिषेधोऽनुपपन्न इति नाहेतुः स्थापनाहेतुरिति भावः ॥ २० ॥

सम्प्रति क्रमप्राप्तम**र्थापत्तिसमं** लक्षयति—

**"अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः"** ॥ २१ ॥

अर्थापत्तितः=अर्थापत्त्या प्रतिपक्षसिद्धेः=प्रतिकूलः पक्षः प्रतिपक्षस्तस्य सिद्धेः साधनादर्थापत्तिसमः=अर्थापत्तिसमो भवतीत्यर्थः।

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति वादिना स्थापिते शब्दानित्यत्वलक्षणे स्वपक्षे "चेदनित्यघटसाधर्म्यात्प्रयत्नानन्तरीयकत्वाद-नित्यः शब्दस्तदाऽर्थादापद्यते नित्याकाशसाधर्म्यादस्पर्शत्वान्नित्यः" इत्येवमर्थापत्त्या यत्प्रतिवादिनः प्रतिपक्षसाधनं, **किमुक्तं?** पक्षे साध्याभावोपपत्त्यर्थं यत्प्रतिवादिनोऽर्थापत्तिसाधर्म्येण प्रत्यवस्थानं, **किंबहुनाऽ**व्यभिचारिणा हेतुना पक्षे साध्ये साधिते "व्यभिचारिणापि हेतुना साध्यं साधयितव्यम्" इत्यनुक्तमप्यर्थात्परिकल्प्य यद् वादितात्पर्य्यविपयतापादनेनार्थात् तत्र तदभावस्योद्भावनं सो **"अर्थापत्तिसमः"** अभिहितादर्थादन्यस्यार्थस्यापत्तिः प्राप्तिरर्थाप्रत्तिस्तया सम इति तद्व्युत्पत्तेरिति भावः।

**तत्र** साधर्म्यसमादौ न वादितात्पर्य्योपवर्णनम्, अर्थापत्तिसमे च तदुपवर्णनमिति नाविशेषः। बाधदेशनाभासश्चायमिति विवेकः॥ २१॥

अस्योत्तरमाह—

**"अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः" ॥ २२ ॥**

अनुक्तस्य=अनुक्तमात्रस्यार्थापत्तेः=अर्थतः प्राप्तेः पक्षहानेः=प्रतिपक्षव्यावृत्तेरुपपत्तिः=प्राप्तिः स्यात्, **कुतः?** अनुक्तत्वाद्=त्वयाऽनुक्तत्वात्, अर्थापत्तेश्च=अर्थतः प्राप्तेश्चानैकान्तिकत्वात्=एकपक्षनियतत्वाभावात् वादिप्रतिवाद्युभयपक्षसमानत्वादित्यर्थः।

**यस्य** हि वाक्यार्थोपपादने सामर्थ्यं तत्कल्पनमन्तरा च वाक्यार्थो नोपपद्यते तदेवानुक्तमप्यर्थादापद्यते **यथा** "पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यत्र "रात्रौ भुङ्क्ते" "अग्निहोत्रेण स्वर्गं भावयेद्" इत्यत्र च "अन्तराऽपूर्वं कृत्वा" इति। नच प्रकृतेऽव्यभिचारिणा साधर्म्येण साध्ये साध्यमाने "व्यभिचारिणापि साधर्म्येण साध्यं साधयितव्यम्" इत्यर्थादापत्तुमर्हति।

तस्य तदुपपादने सामर्थ्याभावात् । नहि "पीनो देवदत्तः" इत्यत्र "रात्रौ भुङ्क्ते" इत्यस्येव "शब्दोऽनित्यः" इति वाक्यार्थोपपादने "शब्दो नित्यः" इत्यस्यास्ति सामर्थ्यम् । तस्य तदन्तरेणाप्युपपत्तेः । **यदि** चानुपलब्धसामर्थ्यमप्यनुक्तमर्थादापद्यत इति मन्यसे ? **तदा** त्वत्पक्षस्यापि हानिरुपपद्येत, "शब्दोऽनित्यः" इत्यत्र "शब्दो नित्यः" इत्यस्येव "शब्दो नित्यः" इत्यत्रापि "शब्दोऽनित्यः" इत्यस्यार्थादापादयितुं शक्यत्वात् । नहि घटसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्यः शब्दः इत्युक्तेऽन्यसाधर्म्यान्नित्य इत्यर्थादापद्यते न पुनराकाशसाधर्म्यादस्पर्शत्वान्नित्यः शब्दः इत्युक्तेऽन्यसाधर्म्यादनित्य इत्यत्रास्ति किञ्चिन्नियामकम् । नचार्थापत्तिरियमेकपक्षपातिनी विद्यते । तस्यास्तावकमामकोभयपक्षसमानत्वात् । **अतो**ऽनुपपन्नं ते प्रत्यवस्थानमिति भावः ॥ २२ ॥

अथा**विशेषसमं** लक्षयति—

**"एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः" ॥ २३ ॥**

एकधर्मोपपत्तेः=एको दृष्टान्तः, तस्य धर्मः साधर्म्यं, तस्योपपत्तेः पक्षे सिद्धेरविशेषे=पक्षदृष्टान्तयोरविशेषे सद्भावोपपत्तेः=सत्त्वाख्यो धर्मः सद्भावः, तस्योपपत्तेः सर्वत्रसिद्धेः सर्वाविशेषप्रसङ्गात्=सर्वेषामविशेषप्रसक्तेरविशेषसमः=अविशेषसमो भवतीत्यर्थः ।

शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यादौ यदि पक्षे शब्दे घटदृष्टान्तसाधर्म्यस्य प्रयत्नानन्तरीयकत्वस्योपपत्तेस्तस्य घटदृष्टान्तेनानित्यत्वलक्षणोऽविशेषस्तदा सत्त्वाख्यस्य सर्वसाधर्म्यस्य सर्वत्रोपपत्तेः सर्वेषां सर्वैरविशेषः स्यात्, **किमुक्तं** ? यदि घटसाधर्म्यात्प्रयत्नानन्तरीयकत्वाद् घटेनाविशेषोऽनित्यत्वाख्यः शब्दस्य, **तदा** समस्तभावसाधर्म्यात्सत्त्वात्सर्वेषां सर्वाविशेषः स्यात् । नोचेत् ? तदा शब्दोऽप्यनित्यो न भवेत् । नह्यत्रास्ति कश्चिद् विशेषहेतुस्त्वदुक्तसाधर्म्यादविशेषेण भवितव्यं, न पुनरस्मदुक्तसाधर्म्यादित्येवं भावमात्रसाधर्म्येण पक्षे साध्याभावोपपत्त्यर्थं

यत्प्रतिवादिनः प्रत्यवस्थानं सर्वाविशेषप्रसङ्गोद्भावनमिति यावत् सो "**अविशेषसमः**" समानो धर्मोऽविशेषस्तेन सम इति तद्व्युत्पत्तेरिति भावः ।

तत्राविशेषसम इति लक्ष्यनिर्देशः, सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गादिति लक्षणं, शेषं व्युत्पादकम् । अयञ्च प्रतिकूलतर्कदेशनाभासः । दृष्टान्तरूपैकभावसाधर्म्यात्प्रत्यवस्थानं साधर्म्यसमः, भावमात्रसाधर्म्यात् त्वविशेषसम इति विवेकः ॥ २३ ॥

अस्योत्तरमाह—

**"क्वचित् तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः" २४**

क्वचित्=कुत्रचित् तद्धर्मोपपत्तेः=तदाऽविशेषं परामृशति, तद्धेतुधर्मोपपत्तेः, क्वचिच्च=कुत्रचिच्चानुपपत्तेः=तद्धर्मानुपपत्तेरविशेषहेतुधर्मानुपपत्तेः प्रतिषेधाभावः=सर्वाविशेषप्रसङ्गोद्भावनेनासत्साध्यप्रतिषेधो न भवतीत्यर्थः ।

शब्दघटयोर्हि पक्षदृष्टान्तयोरविशेषहेतुः प्रयत्नानन्तरीयकत्वलक्षणो धर्म उपपद्यते । तद्व्यापकस्यानित्यत्वरूपधर्मान्तरस्य तत्र विद्यमानत्वात् । न च सर्वभावेषु किञ्चिदीदृशं धर्मान्तरं विद्यते यद् व्याप्त्याश्रयः सन्नेष सद्भावलक्षणो धर्मस्तत्राविशेषहेतुरुपपद्येत । नहि धर्ममात्रं गमकं भवति **किन्तु** साधनीयधर्मान्तरव्याप्त्या सम्पन्नम् । न चाविद्यमाने तस्मिन् व्याप्तिर्घटते प्रागेव त्वविशेषः । न च तत्र नित्यत्वमेव सद्भावव्यापकं धर्मान्तरमिति चारुभाषणम् । दृष्टान्ताभावात् । नहि सर्वे भावाः नित्याः सद्भावादिति प्रयुज्यमाने कश्चिद्भावोऽवशिष्यते य उदाह्रियेत । न च प्रतिज्ञातार्थैकदेशो दृष्टान्तीकर्तुं शक्यते । सिद्धसाध्यत्वाभ्यां भेदात् । साध्यो हि प्रतिज्ञातार्थो भवति सिद्धश्च दृष्टान्तः । न च हेतुश्च दृष्टान्तरहितश्चेति युज्यते । नापि यत्सत्त्वयोगि तन्नित्यमिति नियमः सङ्गच्छते । सत्त्वयोगिनोऽनित्यभावस्यापि दर्शनात् । **अतो**ऽनुपपन्नस्ते सर्वाविशेषप्रसङ्गोद्भावनेनासत्साध्यप्रतिषेध इति भावः ॥ २४ ॥

अथोपपत्तिसमं लक्षयति—

**"उभयकारणोपपत्तेरुपपत्तिसमः" ॥ २५ ॥**

उभयकारणोपपत्तेः=उभययोः पक्षप्रतिपक्षयोः कारणं प्रमाणं हेतुरिति यावत् तस्योपपत्तेः सिद्धेरुपपत्तिसमः=उपपत्तिसमो भवतीत्यर्थः ।

शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यत्र यद्यनित्यत्वकारणं प्रयत्नानन्तरीयकत्वमुपपद्यते शब्दस्येत्यनित्यः शब्दस्तदा नित्यत्वकारण-मस्पर्शत्वमप्युपपद्यतेऽस्येति नित्योऽपि स्यात् । नो चेन्नित्यस्तदाऽनित्योऽपि माभूत् । नचास्ति विशेषहेतुरनित्यत्वकारणोपपत्त्याऽनित्येन शब्देन भवि-तव्यं न पुनर्नित्यत्वकारणोपपत्त्या नित्येनेत्येवमुभयपक्षसाधर्म्येण कारणो-पपत्त्या यत्प्रतिवादिनः प्रत्यवस्थानं पक्षेसाध्याभावासञ्जनमिति यावत्, स **"उपपत्तिसमः"** कारणोपपत्तिरुपपत्तिस्तया सम इति तद्व्युत्पत्ते-रिति भावः ।

तत्र प्रकरणसमे हि पक्षप्रतिपक्षसाधनयोः समानबलत्वम्, अत्र तु तदभावः । सत्प्रतिपक्षदेशनाभासश्चायमिति विवेकः ॥ २५ ॥

अस्योत्तरमाह—

**"उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः"** ॥ २६ ॥

उपपत्तिकारणाभ्यनुज्ञानात्=वादिपक्षस्योपपत्तौ सिद्धौ यत्कारणं तस्य प्रतिवादिना त्वयाऽभ्यनुज्ञानादप्रतिषेधः=तत्साध्यप्रतिषेधो नोपपद्यते इत्यर्थः ।

उभयकारणोपपत्तेरित्यभिदधता खलु नानित्यत्वं शब्दस्य प्रतिषेद्धुं शक्यते । तत्कारणस्य प्रयत्नानन्तरीयकत्वस्य तत्राभ्यनुज्ञानात् । अन्यथो-भयकारणोपपत्तेरित्यभिधानानुपपत्तेः । न च तदभ्यनुज्ञाने तद्व्यापकस्य तत्र प्रतिषेधो युज्यते । सति व्याप्ये व्यापकसत्त्वस्यावश्यकत्वात् । **नचो**भयकारणोपपत्तावपि नैकस्य नित्यत्वमनित्यत्वञ्चोभयं सङ्गच्छते व्याघातादिति तत्प्रतिषेध इति युक्तं **भाषणम्** । व्याघातस्योभयपक्षसमा-नत्वात् । यद्यनेनानित्यत्वं शब्दस्य व्याहन्यते तदा तस्य नित्यत्वमपि व्या-हन्यते । नह्येष एकं पक्षं साधयत्येकं च व्याहन्तीप्युपपद्यते । **त-स्मादनु**पपन्नः प्रतिषेध इति भावः ॥ २६ ॥

अथोपलब्धिसमं लक्षयति—

**"निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः" ॥२७॥**

निर्दिष्टकारणाभावेऽपि=वादिना निर्दिष्टस्याभिहितस्य कारणस्य साधनस्याभावेऽसत्त्वेऽप्युपलम्भात्=साध्यधर्मोपलब्धेरुपलब्धिसमः=उपलब्धिसमो भवतीत्यर्थः।

शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदिति वादिना स्थापनाहेतौ प्रयुक्ते "न प्रयत्नानन्तरीयकत्वेन हेतुना शब्देऽनित्यत्वावधारणं युज्यते। तदभावेऽपि प्रबलमारुतनोदनेन पादपशाखाभङ्गाज्जायमाने शब्देऽनित्यत्वोपलब्धेः। चेदयं शब्दानित्यत्वसाधकोऽभविष्यत्, तदा नैतदभावे तदुपालप्स्यत। नहि साधकाभावे साध्यं क्वचिदुपलभ्यते। वायुनोदनभज्यमानपादपशाखाशब्दानित्यत्वं तूपलभ्यते। **अतो** न प्रयत्नानन्तरीयकत्वादनित्यः शब्दः" इत्येवं प्रयत्नानन्तरीयकत्वतदभावोभयसाधर्म्येण साध्यधर्मोपलब्ध्या यत्प्रतिवादिनः प्रत्यवस्थानं, **किमुक्तं?** पक्षे साध्याभावोपपत्त्यर्थं यत्पक्षतावच्छेदकावच्छेदेन साधनाभावोपपादनं, **किंबहुना** पक्षैकदेशे हेतोर्यदसिद्धत्वाभिधानं स **"उपलब्धिसमः"** साध्यसिद्धिरुपलब्धिस्तया सम इति तद्व्युत्पत्तेः। अयञ्चासिद्धदेशनाभास इति भावः॥२७॥

अस्योत्तरमाह—

**"कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः" ॥ २८ ॥**

कारणान्तरादपि=वादिनिर्दिष्टात्कारणादन्यत्कारणं कारणान्तरं, तस्मादपि तद्धर्मोपपत्तेः=साध्यधर्मोपलब्धेरप्रतिषेधः=भवदुक्तः प्रतिषेधो नोपपद्यत इत्यर्थः।

**यत्र** हि शब्दे प्रयत्नानन्तरीयकत्वाद् हेतोरनित्यत्वं नोपलभ्यते **तत्र** कारणान्तरात्कृतकत्वादुपलभ्यते। शब्दमात्रस्य कृतकत्वानतिवर्तनात्। न च कारणान्तराद् भवन्ती तदुपलब्धिस्तस्य हेतुतामपहन्ति। नहि यदनित्यं तत्प्रयत्नानन्तरीयकमित्युच्यते, **अपि च?** यत्प्रयत्नानन्तरीयकं तदनित्यमिति। न च वायुनोदनाद् वृक्षशाखाभङ्गेन जायमानः शब्दः

प्रयत्नानन्तरीयको विद्यते । तत्र चेत्तदभावेऽपि भवति साध्यधर्मोपलब्धिः तदा नायमहेतुः सम्पद्यते । हेतोः सपक्षैकदेशावृत्तित्वस्यादोषात् । नहि धूमोऽयोगोलकेऽवर्तमानो वह्निसाधने हेतुर्नभवति । न च हेतोरहेतुत्वाभावे पक्षे तद्धर्मप्रतिषेध उपपद्यते । व्याप्योपपत्तौ व्यापकोपपत्तेरवश्यम्भावात् । **अतो**ऽनुपपन्नस्तत्प्रतिषेध इति भावः ॥ २८ ॥

अथा**नुपलब्धिसमं** लक्षयति—

**"तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः" ॥ २९ ॥**

तदनुपलब्धेः=प्रतिबन्धकानुपलब्धेरनुपलम्भात्=उपलम्भाभावादभावसिद्धौ=तदभावस्य सिद्धौ तद्विपरीतोपपत्तेः=तदा तदनुपलब्धिं परामृशति, ततो विपरीतायाः प्रतिबन्धकोपलब्धेरुपपत्तेरनुपलब्धिसमः=अनुपलब्धिसमो भवतीत्यर्थः ।

**यथा** हि खननात्प्राग् विद्यमानस्यापि नीरस्य मृदादिप्रतिबन्धकवशादनुपलब्धि**स्तथो**च्चारणात् प्राग् विद्यमानस्यापि शब्दस्यावरणादिप्रतिबन्धकवशादनुपलब्धिर्नोनित्यत्वादित्ययुक्तं मृदादिवदावरणादिप्रतिबन्धकानुपलब्ध्या तदभावसिद्धेरिति वादिनाऽभिहिते "चेदावरणादिप्रतिबन्धकानुपलब्ध्या तदभावः सिध्यति, तदा तदनुपलब्धेरप्युपलम्भाभावादभावः सिध्येत् । समानत्वात् । नह्येकस्यानुपलब्ध्याऽभावः सिध्यति नापरस्येति सम्भवति । तत्सिद्धौ चाऽऽवरणादिप्रतिबन्धकोपलब्धिः सिध्यति न तदनुपलब्धिरित्यावरणादिप्रतिबन्धककृतैव शब्दस्य प्रागुच्चारणादनुपलब्धिर्न जात्वनित्यत्वकृता" इत्येवं प्रतिबन्धकतदनुपलब्धिसाधर्म्येणानुपलब्ध्या यत्प्रतिवादिनः प्रत्यवस्थानं, **किमुक्तं ?** वाद्यभिमत विपर्य्ययोपपत्त्यर्थं यदनुपलब्ध्या साधितस्य प्रतिबन्धकाभावस्यानुपलब्धैवाभावस्योपपादनं, **किंबहुना** प्रागुच्चारणाच्छब्दोऽनित्यत्वान्नोपलभ्यते नावरणादिप्रतिबन्धकवशात् "तदनुपलब्धेः" इति वादिनाऽभिहितो हेतुः प्रतिबन्धके तदनुपलब्धौ च समयाऽनुपलब्ध्या प्रत्यवस्थित इति

यत्प्रतिवादिनः प्रतिपादनं सो"**अनुपलब्धिसमः**" अनुपलम्भोऽनुपलब्धिस्तया सम इति तद्व्युत्पत्तेरिति भावः ॥ २९ ॥

अस्योत्तरमाह—

"**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः**" ॥ ३० ॥

अहेतुः="तदनुपलब्धेरनुपलम्भात्" इत्ययमावरणादिप्रतिबन्धकोपलब्धौ हेतुर्नभवति, **कुतः ?** अनुपलब्धेः=आवरणादिप्रतिबन्धकानुपलब्धेरनुपलम्भात्मकत्वात्=आवरणादिप्रतिबन्धकोपलब्ध्यभावोऽनुपलम्भस्तदात्मकत्वात् तदभावस्वरूपत्वादित्यर्थः ।

**यस्य** हि यो विषयो भवति स तस्यास्तित्वं गमयति न नास्तित्वम् । निर्विषयत्वप्रसङ्गात् । उपलब्धेश्च भावो विषयोऽनुपलब्धेश्चाभाव इत्यविवादम् । आवरणादिप्रतिबन्धकानुपलब्धिरप्यभावः, तत्र प्रवर्त्तमानोऽनुपलम्भः कथं तन्नास्तित्वं गमयेत् । आत्मात्रसावस्य । न चात्मानं कश्चित्प्रतिषेद्धुमर्हति । नच तेनाप्रतिषिद्धाऽऽवरणादिप्रतिबन्धकानुपलब्धिरावरणादिप्रतिबन्धकोपलब्धौ हेतुत्वाय कल्पते । न च तस्यास्तत्राहेतुत्वे शब्दस्य प्रागुच्चारणादनुपलब्धिरावरणादिप्रतिबन्धककृतोपपद्यते । तस्योपलब्ध्यभावेनास्तित्वानुपपत्तेरिति भावः ॥ ३० ॥

**यादृशं** प्रतिवादिनः प्रत्यवस्थानं तादृशमुत्तरमुक्त्वा वास्तवमुत्तरमाह—

"**ज्ञानविकल्पानाञ्च भावाभावसंवेदनादध्यात्मम्**" ॥३१॥

अहेतुरित्यनुवर्तते । उत्तरान्तरमेतदिति सूचनाय चकारः । अध्यात्मम्= विभक्त्यर्थेऽव्ययीभावः, आत्मनि मनसि मनसेति यावत् ज्ञानविकल्पानां=ज्ञानविशेषाणां भावाभावसंवेदनात्=सत्त्वासत्त्वयोरुपलम्भादहेतुः= अनुपलब्धेरनुपलम्भादित्ययमहेतुरित्यर्थः ।

**यथाहि** मनसा ज्ञानानां भाव उपलभ्यते **तथा** तदभावोऽप्युपलभ्यते । येनेन्द्रियेण यद् गृह्यते तेनैव तद्गता जातिस्तदभावश्च गृह्यत इति नियमात् । आवरणादिप्रतिबन्धकानुपलब्धिरप्युपलब्धेर्ज्ञानस्याभावस्तस्मादुपलब्धिवत्तस्या अपि मनसोपलब्धिरुपपद्यते नास्त्यावरणाद्युपलब्धि-

रिति । तथा चावरणादिप्रतिबन्धकानुपलब्धेरनुपलम्भादित्यसिद्धो हेतुर्न तदुपलब्धिसाधनाय कल्पते । सिद्धस्यैव हेतुत्वाभ्युपगमात् । अतस्त-दनुपलब्धिसिद्ध्या सिद्धाऽनित्यत्वप्रयुक्तैव प्रागुच्चारणादनुपलब्धिः शब्दस्य नावरणादिप्रतिबन्धकप्रयुक्तेति भावः ॥ ३१ ॥

अथ क्रमप्राप्तमनित्यसमं लक्षयति—

**"साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्व-प्रसङ्गादनित्यसमः" ॥ ३२ ॥**

साधर्म्यात्=दृष्टान्तसाधर्म्यात् तुल्यधर्मोपपत्तेः=पक्षे तत्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गात्=सर्वभावानित्यत्वप्रसङ्गादनित्यसमः=अनित्यसमो भवतीत्यर्थः ।

शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यादौ **यदि** दृष्टान्तघट-साधर्म्यात् प्रयत्नानन्तरीयकत्वात्पक्षे शब्दे तत्तुल्यो धर्मोऽनित्यत्वमुपपद्यते **तदा** सर्वभावेष्वप्युपपद्येत । तेषामपि शब्दवदनित्येन घटेन सत्त्वलक्षण-साधर्म्यस्य विद्यमानत्वात् । नोचेदुपपद्यते तदा शब्देऽपि मोपपद्यताम् । नह्येकेनानित्यघटसाधर्म्येणैकत्रानित्यत्वं धर्म उपपद्यते नापरेण तत्साध-र्म्येणापरत्रेत्यस्ति कश्चिद् विशेषहेतुरित्येवं दृष्टान्तसाधर्म्येण यत्प्रति-वादिनः प्रत्यवस्थानं, **किमुक्तं ?** पक्षे साध्यधर्मविपर्य्ययोपपत्त्यर्थं यत्प्र-तिवादिनो दृष्टान्तसाधर्म्येण सर्वभावानित्यत्वप्रसङ्गोद्भावनं, **किं बहुना** व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण यत्प्रतिवादिनः सर्वभावानां साध्यवत्त्वोपपादनं सः **"अनित्यसमः"** अनित्यत्वसाधकत्वमनित्यत्वं, तेन सम इति तद्व्युत्पत्तेरिति भावः ।

**तत्र** दृष्टान्तसाधर्म्यात्सत्त्वात् सर्वभावानामविशेषापादनमविशेषसमः, अनित्यत्वापादनमनित्यसमः । प्रतिकूलतर्कदेशनाभासश्चायमिति वि-वेकः ॥ ३२ ॥

अस्योत्तरमाह—

**"साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्" ॥ ३३ ॥**

साधर्म्यात्=दृष्टान्तसाधर्म्यादसिद्धेः=पक्षे साधनीयधर्मासिद्धेः प्रतिषेध्यसाधर्म्यात्=प्रतिषेध्यो वादिपक्षस्तत्साधर्म्यात् प्रतिज्ञाद्यवयवयोगः साधर्म्यं, तस्मात् प्रतिषेधासिद्धिः=वादिपक्षप्रतिषेधात्मकत्वात्प्रतिषेधः प्रतिपक्षः, तस्याप्यसिद्धिः सिद्धिर्नस्यादित्यर्थः ।

शब्दोऽनित्य इति हि वादिपक्षः, तत्प्रतिषेधात्मा शब्दो नित्य इति च प्रतिपक्षः । चेद् दृष्टान्तघटसाधर्म्यात्प्रयत्नानन्तरीयकत्वात्पक्षे शब्देऽनित्यत्वं न सिध्यति, तदा प्रतिषेध्यपक्षसाधर्म्यात् तत्प्रतिषेधात्मा प्रतिपक्षोऽपि न सिध्येत् । अस्ति तस्य प्रतिषेध्येन पक्षेण प्रतिज्ञाद्यवयवयोगित्वं साधर्म्यम् । नच सम्भवत्येकः साधर्म्यात्सिध्यति नापर इति । नो चेत् सिध्यति प्रतिपक्षः, तदा सिद्ध एव पक्ष इति कृतं ते प्रत्यवस्थानेनेति भावः ॥ ३३ ॥

यादृशं प्रतिवादिनः प्रत्यवस्थानं तादृशमुत्तरमुक्त्वा वास्तवमुत्तरमाह—

**"दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः" ॥ ३४ ॥**

उत्तरान्तरमेतदिति सूचनाय प्रथमश्चकारः । समुच्चायकश्चापरः । दृष्टान्ते=दृष्टान्तभूमौ साध्यसाधनभावेन=साध्यसाधनत्वेन साध्यव्याप्यत्वेनेति यावत् प्रज्ञातस्य=प्रमितस्य निश्चितस्य धर्मस्य हेतुत्वात्=हेतुभावात्, तस्य च=उक्तलक्षणधर्मस्य चोभयथा=केनचित्समानत्वेन कुतश्चिद् विशिष्टत्वेन च भावात्=सत्त्वादविशेषः=साध्यव्याप्तिलक्षणविशेषरहितः समानो वा विशिष्टो वा धर्मो न=हेतुर्न भवतीत्यर्थः ।

यः खलु धर्मः समानो वा विशिष्टो वा दृष्टान्ते साध्यधर्माविनाभावी प्रज्ञायते स एव हेतुर्भवति नान्यः साध्यधर्माविनाभावरहितः समानो वा विशिष्टो वा धर्मः । प्रयत्नानन्तरीयकत्वञ्च समानो धर्मो दृष्टान्तेऽनित्यत्वसाध्यधर्माविनाभावी प्रज्ञायते, यत्प्रयत्नानन्तरीयकं तदनित्यमिति । कुत्रापि व्यभिचारादर्शनात् । न सत्त्वम् । आत्मादीनां सत्त्वेऽप्यनित्यत्वाभावात् । नचाहेतुना तेन साधर्म्यमात्रेण सर्वानित्यत्वोद्भावनेऽपि शब्दानित्यत्वं प्रतिषिद्धं भवति । सर्वग्रहणेन शब्दस्यापि ग्रहणात् । अतोऽयुक्तं ते प्रत्यवस्थानमिति भावः ॥ ३४ ॥

अथ **नित्यसमं** लक्षयति—

**"नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः"** ॥३५॥

अनित्ये=अनित्यत्वेन साधनीये धर्मिणि नित्यं=सर्वदाऽनित्यभावात्=अनित्यत्वस्य भावाद् नित्यत्वोपपत्तेः=नित्यत्वसिद्धेर्नित्यसमः=नित्यसमो भवतीत्यर्थः ।

**शब्दो**ऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यत्र यदिदमनित्यत्वं शब्दे साध्यते तत्किं तत्र नित्यं भवत्याहोस्विदनित्यम् । अनित्यमिति चेत्? तदा नित्यः शब्दो न जात्वनित्यः । अनित्यत्वस्यानित्यत्वेन प्रच्युतेरवश्यं भावात् । न च तत्प्रच्युतौ शब्दोऽनित्यः सम्पद्यते । नित्यमिति चेत्? तदा धर्मस्य नित्यभावात् तदाश्रयः शब्दोऽपि नित्यो भवेन्नानित्यः । नह्यस्ति सम्भवः धर्माः नित्याः धर्मी चानित्य इति । निराधारधर्मानुपपत्तेरित्येवं धर्मविकल्पसाधर्म्येण यत्प्रतिवादिनः प्रत्यवस्थानं, **किमुक्तं**? पक्षे साध्यधर्मविपर्ययोपपत्त्यर्थं यत्प्रतिवादिनः साध्यधर्मस्वरूपविकल्पनेन साध्यधर्मनित्यत्वापादनं, **किंबहुना** धर्मस्य नित्यानित्यभावविकल्पाद् यत्प्रतिवादिनो धर्मिणि नित्यत्वसाधनं स **"नित्यसमः"** नित्यत्वसाधकत्वं नित्यत्वं, तेन सम इति तद्व्युत्पत्तेरिति भावः ।

**धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।**
**धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥ १ ॥**

अयञ्च विरुद्धदेशनाभास इति वेदितव्यम् ॥ ३५ ॥

अस्योत्तरमाह—

**"प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः"** ॥ ३६ ॥

प्रतिषेध्ये=अनित्यत्वेन प्रतिषेधनीये शब्दे नित्यं=सर्वदाऽनित्यभावात्=अनित्यत्वस्य भावादनित्ये=अनित्ये तस्मिन्ननित्यत्वोपपत्तेः=अनित्यत्वस्योपपत्तेः सिद्धेः प्रतिषेधाभावः="नानित्यः शब्दः" इति त्वदुक्तप्रतिषेधस्याभावः सम्भवो नास्तीत्यर्थः ।

प्रतिषेध्ये खलु शब्दे नित्यमनित्यभाव इत्युच्यमाने तस्यानित्यत्वमुपपद्यते । नित्यमनित्यभावयोगिनोऽनित्यत्वस्यैवौचित्यात् । नहि यस्य नित्यमनित्यभावयोगः स नित्य इति सम्भवति । व्याहृतं ह्येतद् यन्नित्यञ्चानित्यभावयोगि च । न च व्याहृतं किञ्चिदभ्युपेयते। नच धर्मस्य नित्यभावे धर्मिणोऽपि नित्यभावः, निराधारधर्मानुपपत्तेरिति चारुभाषणम् । तस्य सामान्यसमवायातिरिक्तधर्मविषयत्वात् । नचानित्यत्वं समवायादतिरिच्यते । अपरान्तावच्छिन्नसत्तासमवायस्यैवानित्यत्वाभ्युपगमात् । ध्वंसापरपर्य्यायनिरोधप्रतियोगित्वस्यानित्यत्वेऽपि न शब्दस्तदाश्रयः सम्पद्यते । निरोधस्य तस्य शब्दप्रतियोगित्वेन शब्दाश्रयत्वासम्भवात् । न हि पराश्रयोऽप्यभावः कथञ्चित्प्रतियोग्याश्रयःसम्भवति । किन्तु भूतलाश्रयः इव घटभावोऽर्थान्तराश्रयः । न चार्थान्तराश्रयेण तेन धर्मिणः शब्दस्य नित्यत्वं प्रसज्यते । तदप्रसक्तौ चानित्यत्वोपपत्तेर्नास्ति प्रतिषेधसम्भवः इति भावः ॥ ३६ ॥

अथ **कार्य्यसमं** लक्षयति—

**"प्रयत्नकार्य्यानेकत्वात्कार्य्यसमः"** ॥ ३७ ॥

प्रयत्नकार्य्यानेकत्वात्=प्रयत्नेन कार्य्यं सम्पाद्यं प्रयत्नकार्य्यं, तस्यानेकत्वं द्वैविध्यं, तस्मात् प्रयत्नकार्य्यानेकत्वापादनात् कार्य्यसमः=कार्य्यसमो भवतीत्यर्थः ।

शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदित्यत्र प्रयत्नानन्तरभवं प्रयत्नेन कार्यमिति यावद्धि प्रयत्नानन्तरीयकम् । तच्चानेकविधमुपलब्धं किञ्चिदुत्पाद्यं **यथा** घटादि, किञ्चिदभिव्यङ्ग्यं यथा मृदन्तरितं सलिलादि । शब्दोऽपि प्रयत्नानन्तरीयकः । **अतः** संशयः किमेष उत्पाद्यत्वादनित्यः आहोस्विदभिव्यङ्ग्यत्वान्नित्यः । अनित्य इति चेत् ? तदा नित्यः किन्नस्यात् ? अस्त्युत्पत्तिरभिव्यक्तिश्चोभयमविशिष्टं प्रयत्नकार्य्यं, नास्ति चाभिव्यक्तावपि पक्षे हेतोरसम्भवः **इति** प्रयत्नकार्य्याविशेषेण यत्प्रतिवादिनः प्रत्यवस्थानं, **किमुक्तं ?** हेत्वर्थद्वैविध्यापादनेन यत्पक्षे साध्यसं-

शयापादनं, **किंबहुना** पक्षे साधनीयधर्मविपर्य्ययोपपत्त्यर्थं सामान्यतः प्रयुक्तस्य हेतोर्यदनभिमतविशेषनिराकरणेन पक्षे सम्भवाभिधानं, स "**कार्य्यसमः**" कार्य्याविशेषः कार्य्यं, तेन सम इति तद्व्युत्पत्तेरिति भावः ॥

**तत्रो**भयसाधर्म्यात् **संशयसमः**, हेत्वर्थमविकल्प्य **साधर्म्यसमः**, तं विकल्प्य **कार्य्यसमः** । अयञ्चानैकान्तिकदेशनाभास इति विवेकः ॥

**भदन्तास्तु** शब्दोऽनित्यः कृतकत्वाद् घटवदित्युक्तेऽन्यन्मृत्पिण्डादिकार्य्यत्वं घटस्य, अन्यच्च विवक्षाप्रयत्नवायुप्रेरणाभिघातकार्य्यत्वं शब्दस्य। **तस्मा**च्छब्दकृतकत्वस्य घटादिकृतकत्वाद्भेदान्न साधनं कृतकत्वमनित्यत्वस्य । **क्षित्य**ङ्कुरादिकं कर्तृजन्यं कार्य्यत्वात् प्रासादादिवदित्युक्ते क्षित्यङ्कुरादीनामन्यत्कार्यत्वं, प्रासादाट्टालगोपुरादीनाञ्चान्यत् । **तस्मात्** क्षित्यङ्कुरादिकार्य्यत्वस्य प्रासादादिकार्य्यत्वाद्भेदान्न साधनं कार्य्यत्वं कर्तुरीश्वरस्येति कार्य्यसमं व्याचक्षते ॥ ३७ ॥

अस्योत्तरमाह—

**"कार्य्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः"** ॥३८

कार्य्यान्यत्वे=प्रयत्नकार्य्यानेकत्वेऽपि प्रयत्नाहेतुत्वं=शब्दाभिव्यक्तौ प्रयत्नहेतुत्वं नोपपद्यते, **कुतः**? अनुपलब्धिकारणोपपत्तेः=तस्य शब्दानुपलब्धिकारणावरणाद्युपपत्तेः सम्भवादित्यर्थः ।

**त**देव हि प्रयत्नानन्तरमभिव्यज्यते **यस्या**नुपलब्धिकारणं किञ्चिद् व्यवधानमुपपद्यते **यथा** सलिलादेरनुपलब्धिकारणं व्यवधानं मृदादि । न चैवं शब्दस्यानुपलब्धिकारणं किञ्चिदावरणादि व्यवधानमुपपद्यते । नच तदनुपपत्तौ सत्यां प्रयत्नस्तमभिव्यङ्क्तुं पारयति । तस्यानुपलब्धिकारणव्यवधानापोहेन वस्त्वभिव्यक्तिहेतुत्वात् । **नहि** प्रयत्नः साक्षाद् वस्त्वभिव्यनक्ति **किन्तु** तदनुपलब्धिकारणापोहेन । प्रयत्नेन हि व्यवधानमुपोह्यते ततश्च वस्तु स्वयमभिव्यज्यते । नच शब्दे किञ्चिद् व्यवधानमुपलभ्यते यदपोहमाचरता प्रयत्नेनैषोऽभिव्यज्येत । नचोच्चारणात्प्रागन्तरेण

व्यवधानं तदनुपलब्धिर्युज्यते। अस्ति तु तदनुपलब्धिः। **तस्मात्**प्रयत्नकार्य्यानेकत्वेऽपि न तेन तस्याभिव्यक्तिः **अपि च?** उत्पत्तिः। उत्पत्तौ चानित्यः शब्दो न नित्य इत्यस्थाने प्रत्यवस्थानमिति भावः॥

**भदन्त**पक्षेऽप्यभूत्वाभावलक्षणस्य कृतकत्वस्य शब्दघटयोः संस्थानवत्त्वस्य कृतकत्वस्य च प्रासादक्षित्यङ्कुराद्योः समानत्वान्न तद्भेदः इत्ययुक्तं प्रत्यवस्थानम्॥

**इदमत्र बोध्यम्**—येन वर्त्मना हि शब्दानित्यत्वानुमाने जातिप्रयोगस्तदुत्तरप्रकारश्च प्रादर्शि, स एव पन्थाः सर्वानुमानेषु तत्प्रयोगस्य तदुत्तरस्य च वेदितव्य इति॥ ३८॥

**यत्र** यत्रानुमाने प्रतिवादी जातिं प्रयुञ्जीत **तत्र** सर्वत्र मूलसाधनवादी विस्पष्टानुमानोदन्तपरीक्षणपुरस्सरं सत्यमेवोत्तरं यथोपदिष्टमभिदधीत न जातु जातिप्रयोगानुकारि दुष्टमुत्तरम्। अन्यथाऽऽरभ्यमाना कथा न तत्त्वनिर्णये पर्य्यवस्येत्, तद्विघातिका पिशाची षट्पक्षी चावतरेदिति शिष्यहितो भगवान् सूत्रकारः **सम्प्रति** दुरुत्तरं प्रयुञ्जानं मूलसाधनवादिनं प्रति षट्पक्षीन्तावदवतारयति—

**"प्रतिषेधेऽपि समानो दोषः"॥ ३९॥**

प्रतिषेधेऽपि=प्रतिवादिप्रयुक्ते प्रतिषेधहेतावपि समानः=स्थापनाहेतुतुल्यो दोषः=अनैकान्तिकत्वं दोष इत्यर्थः।

पूर्वन्तावत्तत्त्वनिर्णयकथायां प्रवृत्तेन प्रथमपक्षस्थेन स्थापनाहेतुवादिना शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनाहेतुः प्रयुक्तः, **ततो** द्वितीयपक्षस्थेन जातिवादिना तत्प्रतीपमाचरता प्रयत्नकार्य्यानेकत्वादिति प्रतिषेधहेतुरुपन्यस्तः, **ततस्**तृतीयपक्षस्थः स्थापनाहेतुवादी यथोपदिष्टं "तदनुपलब्धिकारणानुपपत्तेर्नानैकान्तिको हेतुः" इति सदुत्तरमप्रयुञ्जानो जातिप्रयोगानुकारिणाऽसदुत्तरेण प्रत्यवतिष्ठते **यदि** मामको हेतुरभिव्यङ्ग्ये शब्देऽनैकान्तिकत्वादसाधकः **तदा** तावको हेतुरपि न साधकः स्यात्। यत्किञ्चित्प्रतिषेधकत्वेऽपि सर्वाप्रतिषेधकत्वेनानैकान्तिकत्वात्। नहि तेन सर्वं प्रतिषिध्यते। नच यत्किञ्चित्प्रतिषेधन्नैकान्तिकः सम्पद्यते। **किमु-**

कम्? एवं ह्यैकान्तिकः सम्पद्येत यदि सर्वमेव प्रतिषेधेत्। यत्तु कि-ञ्चित्प्रतिषेधति किञ्चिन्न=शब्दानित्यत्वं प्रतिषेधति नित्यत्वं न, हेतोः साधकत्वं प्रतिषेधति स्वरूपं न। तस्मादनैकान्तिकः। अनैकान्तिक-त्वाच्चासाधक इति भावः ॥ ३९ ॥

**ननु** किमेवं कार्य्यसमायामेव जातौ स्थापनाहेतुवादिनाऽसदुत्तरं प्रयोक्तुं शक्यते, **अथवा** प्रतिवादिप्रयुक्तासु सर्वासु जातिषु? तत्राह—

**"सर्वत्रैवम्"** ॥ ४० ॥

एवं=कार्य्यसमजातिवत्सर्वत्र=साधर्म्यसमादिषु सर्वजातिषु स्थापना-हेतुवादिनाऽसदुत्तरं प्रयोक्तुं शक्यत इत्यर्थः।

तत्त्वनिर्णयकामश्चेत् स्थापनाहेतुवादी न जातु प्रतिवादिप्रयुक्तायां कस्यामपि जातौ यथोपदिष्टं सदुत्तरमपहायासदुत्तरं प्रयुञ्जीत। तदका-मस्य तु नास्ति कश्चिन्निर्बन्धः। स हि कार्य्यसमावत् प्रतिवादिप्रयुक्तासु साधर्म्यसमादिषु सर्वजातिषु **"यथा यक्षस्तथा बलिः"** इति न्या-येनासदुत्तरं प्रयोक्तुं पर्याप्तः स्वतन्त्रत्वादिति भावः ॥ ४० ॥

**अथ** तृतीयपक्षस्थेन स्थापनाहेतुवादिना प्रयुक्ते समाधानाभासे पुन-श्चतुर्थपक्षस्थो जातिवादी प्रत्यवतिष्ठते—

**"प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः"** ॥ ४१ ॥

प्रतिषेधदोषवत्=यथा मत्कृते प्रतिषेधेऽनैकान्तिकत्वं दोषस्तथा प्रतिषेध-विप्रतिषेधे=विशिष्टः प्रतिषेधो विप्रतिषेधः, प्रतिषेधस्य विप्रतिषेधः प्रतिषेधवि-प्रतिषेधस्तस्मिन् त्वत्कृते प्रतिषेधविप्रतिषेधेऽपि दोषः=अनैकान्तिकत्वं दोषः इत्यर्थः।

यथा हि मामकः प्रतिषेधस्तथैव तावकः प्रतिषेधः। मामकप्रतिषेधश्चे-दनैकान्तिकस्तावकप्रतिषेधोऽप्यनैकान्तिकः स्यात्। नह्यनेनापि सर्वं प्रति-षिध्यते। यत्किञ्चित्प्रतिषेधस्तूभयत्र समान इति भावः ॥ ४१ ॥

**अथ** पञ्चमपक्षस्थः स्थापनाहेतुवादी प्राह—

**"प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समा-नदोषप्रसङ्गो मतानुज्ञा"** ॥ ४२ ॥

प्रतिषेधं=स्वकृतप्रतिषेधं द्वितीयपक्षं सदोषं=दोषसहितमभ्युपेत्य=स्वीकृत्य दोषोद्धारमनुक्त्वाऽनुज्ञायेति यावत् प्रतिषेधविप्रतिषेधे=मत्कृते प्रतिषेधविप्रतिषेधे तृतीये पक्षे समानदोषप्रसङ्गः=त्वदुक्तस्तुल्यदोषप्रसङ्गो मतानुज्ञा=मतानुज्ञा भवतीत्यर्थः ।

प्रतिषेधवादिना हि त्वया पूर्वन्तावत् स्वोक्तप्रतिषेधे मदुक्तो दोष उद्धर्त्तव्यः पश्चाच्च मदुक्ते प्रतिषेधे दोषः प्रसञ्जनीयः । नचैवं क्रियते **अपि च ?** यथा मामकः प्रतिषेधोऽनैकान्तिकस्तथा तावकः प्रतिषेधविप्रतिषेधोऽप्यनैकान्तिक इति स्वप्रतिषेधं सदोषमभ्यनुज्ञाय मत्प्रतिषेधविप्रतिषेधे समानोदोषः प्रसङ्ग्यते । तञ्च प्रसञ्जयतस्ते मतानुज्ञा प्रसज्यते । तच्च निग्रहस्थानम् । **अतो** निगृहीतो भवानिति भावः ॥ ४२ ॥

**अथ** मतानुज्ञेयं तृतीये पक्षे स्थापनाहेतुवादिनोऽपि पञ्चमपक्षस्थस्येति जातिवादी षष्ठे पक्षे स्थित आह—

**"स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः" ॥ ४३ ॥**

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे="शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात्" इति स्थापनाहेतुवादिपक्षः स्वपक्षः, स च लक्षणं निमित्तमुत्थाने यस्य स स्वपक्षलक्षणः "प्रयत्नकार्य्यानेकत्वाद्" इति प्रतिषेधहेतुवादिनोद्भावितोऽनैकान्तिकत्वलक्षणोदोषः, तस्यापेक्षयाऽनुज्ञयोपपत्तिरुपपादनं भवति यस्य दोषस्य स स्वपक्षलक्षणापेक्षोपपत्तिः, तस्योपसंहारः प्रतिषेधहेतुवादिपक्षे उपसङ्गह्य उपन्यास इति यावत्, तत्र हेतुनिर्देशे="प्रतिषेधेऽपि समानो दोषः" इति हेतूपादाने परपक्षाभ्युपगमात्=प्रतिषेधहेतुवादिनोद्भावितो दोषः परपक्षः, तस्याभ्युपगमोऽनुज्ञानं, तस्मात्समानः=असत्तुल्यो दोषः= मतानुज्ञादोषस्ते प्रसज्यत इत्यर्थः ।

**यथा** हि परस्य मे प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्ग इति ब्रुवतो मतानुज्ञा प्रसज्यते **तथा** तत्रापि स्थापनां सदोषामभ्युपेत्य "प्रतिषेधेऽपि समानो दोषः" इति मत्कृतप्रतिषेधे समानं दोषं प्रस-

ज्ञयतो मतानुज्ञा प्रसज्यते । नहि त्वया स्वपक्षलक्षणं दोषमुद्धृत्य परपक्षे दोषोपसंहारे हेतुर्निर्दिश्यते, **अपि च ?** यः परेण मया "प्रयत्नकार्य्यानेकत्वात्" इत्यनैकान्तिकत्वं दोष उद्भावितस्तमपेक्ष्य समादृत्यानुज्ञायेति यावत् "प्रतिषेधेऽपि समानो दोषः" इति समानमनैकान्तिकत्वं दूषणमुपन्यस्यते **तथा** चासदुद्भावितानैकान्तिकत्वदोषाभ्युपगमात्समानो मतानुज्ञादोषः । तच्च निग्रहस्थानम् । अतो भवानपि निगृहीत इति भावः ॥

**तत्र** प्रथमतृतीयपञ्चमपक्षाः स्थापनाहेतुवादिनः, द्वितीयचतुर्थषष्ठपक्षाः प्रतिषेधहेतुवादिनः । सर्वे चैते पौनरुक्त्यमतानुज्ञादिदोषापहतत्वान्नान्यतरस्यापि वादिनः साध्यसिद्ध्यै प्रकल्पन्ते । चतुर्थषष्ठयोस्तावदर्थाविशेषात्पुनरुक्तदोषः । **यथा** हि चतुर्थपक्षे समानदोषत्वं परस्योच्यते "प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः" इति, **तथा** षष्ठेऽपि पक्षे "परपक्षाभ्युपगमात्समानो दोषः" इति समानदोषत्वमुच्यते, नचार्थविशेषः कश्चिदभिधीयते । चतुर्थषष्ठयोरिव च तृतीयपञ्चमयोरपि समानः पुनरुक्तदोषः । तृतीयपक्षे "प्रतिषेधेऽपि समानो दोषः" इति समानदोषत्वमभ्युपगम्यते, पञ्चमपक्षेऽपि प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गोऽभ्युपेयते, नार्थविशेषः कश्चिदाख्यायते । तृतीयचतुर्थयोश्च समाना मतानुज्ञा । प्रथमद्वितीययोश्च विशेषहेत्वभावः समान इति विवेकः ॥ ४३ ॥

**चतुर्विंशतिधा जातिः सोत्तरा लक्षणैर्युता ।**
**प्रथमे पञ्चमाध्यायस्याह्निके सम्यगीक्षिता ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ पञ्चमाध्यायस्याद्यमाह्निकम् ।





# पञ्चमोऽध्यायः



## द्वितीयमाह्निकम्

परीक्षिता जातिः । सम्प्रति क्रमप्राप्तं निग्रहस्थानं परीक्षणीयम् । तत्र पूर्वन्तावत्तद्विभागमाह—

**"प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि"** ॥ १ ॥

निदर्शनाभाससमुच्चयार्थश्चकारः । प्रतिज्ञाहान्यादीनि द्वाविंशतिधा निग्रहस्थानानीत्यर्थः ।

तत्र "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्" (न्या० ।१।२।१९ ) इति निग्रहस्थानसामान्यलक्षणम् । विशेपलक्षणं तु यथास्थानं वक्ष्यते । अननुभापणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, पर्यनुयोज्योपेक्षणम्, इति पञ्चाप्रतिपत्त्या सङ्गृह्यन्ते, शेषाणि तु विप्रतिपत्त्येति विवेकः ॥ १ ॥

अथ प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति—

**"प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः"** ॥२

स्वदृष्टान्ते=साधनीयधर्माश्रयत्वसामान्याद् दृष्टान्तेनात्र पक्षो लक्ष्यते, स्वार्थो वादी, स्वस्य वादिनो दृष्टान्तः पक्षः स्वदृष्टान्तस्तस्मिन् या प्रतिदृष्टा-

न्तधर्माभ्यनुज्ञा=प्रतिवादिनो दृष्टान्तः पक्षः प्रतिदृष्टान्तः प्रतिपक्षः, तस्य धर्मस्याभ्यनुज्ञा स्वीकृतिः स प्रतिज्ञाहानिः=प्रतिज्ञाहानिनिग्रहस्थानमित्यर्थः।

**यदा** हि वादी "शब्दोऽनित्यः" इति स्वप्रतिज्ञासिद्ध्यर्थमैन्द्रियकत्वादिति हेतुमभिधाय "अस्ति सामान्यमैन्द्रियकं, तच्चानित्यम्" इति प्रतिवादिनोद्भावितं सामान्येनानैकान्तिकत्वं दूषणमुद्धर्तुमपर्य्याप्तो "भवतु तर्हि शब्दोऽपि नित्यः" इति स्वपक्षे शब्दे प्रतिपक्षधर्मं नित्यत्वमभ्यनुजानाति **तदा**ऽस्य तत्र तमभ्यनुजानतो यन्निग्रहस्थानं प्रसज्यते सा प्रतिज्ञाहानिः, **किमुक्तं**? "शब्दोऽनित्यः" इति हि वादिनः प्रतिज्ञा। साध्यनिर्देशात्मकत्वात्। सा च प्रतिवादिना सामान्येनोद्भाविते ऽनैकान्तिकत्वे दोषे तमनुद्धृत्य "भवतु शब्दोऽपि नित्यः" इत्यभ्युपगच्छतो हीयते। प्रतिज्ञातार्थविरुद्धस्याभ्युपगमात्। अस्ति तावच्छब्दानित्यत्वं प्रतिज्ञातार्थः, तद्विरुद्धञ्च शब्दनित्यत्वं, तच्चाभ्युपगच्छति वादी "भवतु शब्दोऽपि नित्यः" इति वदन्। तस्मादस्य येयं स्वपक्षे प्रतिपक्षधर्माभ्यनुज्ञा प्रतिज्ञातार्थविरुद्धार्थाभ्युपगतिरिति यावत् सा "**प्रतिज्ञाहानिः**" इति भावः॥

**उद्योतकराचार्य्यस्तु** दृष्टश्चासावन्ते निगमने व्यवस्थित इति दृष्टान्तः पक्षः, स्वश्चासौ दृष्टान्तश्च स्वदृष्टान्तः स्वपक्षः, प्रतीपश्चासौ दृष्टान्तश्च प्रतिदृष्टान्तः प्रतिपक्ष इति व्युत्पत्त्या स्वदृष्टान्तप्रतिदृष्टान्तशब्दौ स्वपक्षप्रतिपक्षावभिदधाते, तेन स्वपक्षे प्रतिपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिरिति लाभ इत्याह॥

**तत्र** पक्ष-साध्य-हेतु-दृष्टान्त-तदन्यभेदात्प्रतिज्ञाहानिःपञ्चधा। शब्दोऽनित्यः कृतकत्वादित्यत्र प्रत्यभिज्ञया बाधोद्भावनेऽस्तु तर्हि घटएव पक्ष इत्यभ्यनुजानतः पक्षहानिः १ सिद्धसाधनोद्भावनेऽस्तु तर्हि शब्दोऽभिधेय इत्यभ्युपगच्छतः साध्यहानिः २ शब्दोऽनित्य ऐन्द्रियकत्वादित्यत्र सामान्येन व्यभिचारोद्भावनेऽस्तु तर्हि कृतकत्वादिति हेतुरित्यङ्गीकुर्वतो हेतुहानिः ३ पर्वतो वह्निमान् धूमादयोगोलकवदित्यत्र साधनविकलो दृष्टान्त-

दस्युद्भावनेऽस्तु तर्हि महानसवदिति स्वीकुर्वतो दृष्टान्तहानिः ४ विशेषणादिहानिलक्षणान्यहानिः, पर्वतो वह्निमान् नीलधूमादित्यत्रासमर्थविशेषणतोद्भावनेऽस्तु तर्हि धूमादित्यभ्युपेयतोऽन्यहानिः । एवं साध्यादिविशेषणेऽप्यन्यहानिरुदाहर्तव्येति दिक् ॥ २ ॥

**प्रतिज्ञान्तरं** लक्षयति—

**"प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्" ॥ ३ ॥**

प्रतिज्ञातार्थप्रतिषेधे=वादिना प्रतिज्ञातस्यार्थस्य प्रतिवादिना प्रतिदृष्टान्तेन व्यभिचारदोषोद्भावनया प्रतिषेधे धर्मविकल्पात्=दृष्टान्तप्रतिदृष्टान्तयोर्धर्मस्य भेदात् तदर्थनिर्देशः=यस्तस्य प्रतिज्ञातस्यार्थस्य दृष्टान्तधर्मविशिष्टतया निर्देशः स प्रतिज्ञान्तरं=प्रतिज्ञान्तरनिग्रहस्थानमित्यर्थः ।

"घटवदैन्द्रियकत्वादनित्यः शब्दः" इति हि वादिनः प्रतिज्ञातोऽर्थः । स च "अस्ति सामान्यमैन्द्रियकं, तच्च नित्यम्" इति प्रतिदृष्टान्तेन सामान्येन व्यभिचारदोषोद्भावनया प्रतिवादिना प्रतिषिध्यते । तस्मिन् प्रतिषिद्धे **यदा** तद्दोषोद्दिधीर्षया वादी दृष्टान्तप्रतिदृष्टान्तयोर्घटसामान्ययोरैन्द्रियकत्वसाधर्म्ये सत्यपि "सामान्यमैन्द्रियकं सर्वव्यक्तिगतत्वात्सर्वगतं, घटस्त्वैन्द्रियकोऽसर्वगतः" इति सर्वगतत्वासर्वगतत्वधर्मभेदात् स्वप्रतिज्ञातमर्थं "यथा घटोऽसर्वगतोऽनित्य एवं शब्दोऽप्यसर्वगतोऽनित्यः" इति दृष्टान्तघटधर्मेणासर्वगतत्वेन विशेष्य निर्दिशति, तदेवं निर्दिशतोऽस्य "अनित्यः शब्दः" इति पूर्वप्रतिज्ञातो "असर्वगतः" इति प्रतिज्ञा द्वितीया सम्पद्यते । या च द्वितीया प्रतिज्ञा तदेव प्रतिज्ञान्तरं, **किमुक्तं?** दृष्टान्तघटसाधर्म्यादैन्द्रियकत्वादनित्यः शब्द इति वादिना प्रतिज्ञातस्यार्थस्यैन्द्रियकेण नित्यसामान्येन व्यभिचारदोषोद्भावनया प्रतिवादिना प्रतिषेधे कृते यस्तस्य तदुद्भावितदोषोद्दिधीर्षया दृष्टान्तधर्मेणासर्वगतत्वेन विशिष्टतयाऽभिधानं, **किंबहुना** परोद्भावितदोषोद्दिधीर्षया यत्पूर्वानभिहितविशेषणविशिष्टतया प्रतिज्ञातार्थस्य कथनं तत् **"प्रतिज्ञान्तरं"** निग्रहस्थानमिति भावः ॥

**तत्र** पक्षसाध्यविशेषणभेदात्प्रतिज्ञान्तरं द्विविधम् । शब्दोऽनित्यः ऐन्द्रियकत्वादित्यत्र परेणोद्भाविते व्यभिचारे तदुद्दिधीर्षयाऽसर्वगतः शब्दोऽनित्य इति पक्षविशेषणे प्रथमम् । पर्वतो वह्निमान् सुरभिमलिनधूमादित्यत्र व्यर्थविशेषणतोद्भावने तत्सार्थकत्वाय कृष्णागरुप्रभववह्निमानिति साध्यविशेषणे द्वितीयं प्रतिज्ञान्तरं निग्रहस्थानमिति विवेकः ॥ ३ ॥

**प्रतिज्ञाविरोधं** लक्षयति—

**"प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः"** ॥ ४ ॥

प्रतिज्ञाहेत्वोः=प्रतिज्ञायाः हेतोश्च विरोधः=यो मिथो विरोधः स प्रतिज्ञाविरोधः=प्रतिज्ञाविरोधनामकं निग्रहस्थानमित्यर्थः ।

यस्तावत्प्रतिज्ञायाः हेतुना, हेतोश्च प्रतिज्ञया विरोधः, **किमुक्तं?** स्वप्रतिज्ञाविरुद्धहेतुनिर्देशः स **"प्रतिज्ञाविरोधः"** यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरत्वेनानुपलब्धेरित्यत्र "गुणव्यतिरिक्तं द्रव्यम्" इति प्रतिज्ञा "रूपादिभ्योऽर्थान्तरत्वेनानुपलब्धेः" इति हेतुना हेतुश्च प्रतिज्ञया विरुध्यते । नहि यदि गुणव्यतिरिक्तं द्रव्यं, तदा रूपादिभ्योऽर्थान्तरत्वेनानुपलब्धिरिति हेतुः, यदि च रूपादिभ्योऽर्थान्तरत्वेनानुपलब्धिस्तदा गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा सम्भवति । व्याघातात् । न च व्याहतं प्रयुञ्जानो न निगृह्यते । **तस्मा**त्प्रतिज्ञाहेत्वोर्विरोधे भवति प्रतिज्ञाविरोधो नाम निग्रहस्थानमिति भावः ॥

**अत्र** प्रतिज्ञाहेत्वोरिति प्रतियोगिद्वयमात्रोपलक्षणपरं, तेन दृष्टान्तादयोऽपि विरोधप्रतियोगिन उन्नेयाः । **एतदुक्तं भवति**–येषां वाक्यगतानां पदार्थानां मिथो व्याघातः प्रतीयते प्रमाणान्तरञ्च विरोधकं, स **विरोधो** नाम निग्रहस्थानम् । लक्ष्यस्थितस्य प्रतिज्ञाग्रहणस्याप्युपलक्षणार्थत्वात् । अत एव यत्र प्रतिज्ञा हेतुना, हेतुर्वा दृष्टान्तेन, प्रतिज्ञाहेतू वा प्रमाणान्तरेण विरुध्यते, तस्य सर्वस्याप्यनेनैव सङ्ग्रह **इति** न्यायवार्तिकतात्पर्यटीकाकृतौ व्याचक्षाते ॥ ४ ॥

**प्रतिज्ञासंन्यासं** लक्षयति—

**"पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः"** ॥५॥

पक्षप्रतिषेधे=हेतोरनैकान्तिकत्वदोषोद्भावनेन वादिपक्षस्य प्रतिवादिना प्रतिषेधे प्रतिक्षेपे कृते प्रतिज्ञातार्थापनयनं=यस्तत्परिजिहीर्षया वादिनः प्रतिज्ञातार्थस्यापनयनम् अपलापोऽपह्नव इति यावत् स प्रतिज्ञासंन्यासः=प्रतिज्ञासंन्यासो निग्रहस्थानमित्यर्थः ।

शब्दोऽनित्यः ऐन्द्रियकत्वादित्यत्र हेतोरैन्द्रियकत्वस्य सामान्येनानैकान्तिकत्वदोषोद्भावनया "शब्दोऽनित्यः" इति वादिपक्षे प्रतिवादिना प्रतिक्षिप्ते यः खलु तद्दोषोद्दिधीर्षया वादिनः "कः पुनरेवमाह शब्दोऽनित्यः" इति स्वप्रतिज्ञातस्य शब्दानित्यत्वार्थस्यापह्नवः, **किमुक्तं?** स्वप्रतिज्ञातेऽर्थे प्रतिवादिना प्रतिषिद्धे यस्तदपलापः स **"प्रतिज्ञासंन्यासो"** निग्रहस्थानमिति भावः ॥ ५ ॥

हेत्वन्तरं लक्षयति—

**"अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्"** ॥ ६ ॥

अविशेषोक्ते=विशेषको भेदको धर्मो विशेषः विशेषणमिति यावत्, न विशेषोऽविशेषः, तेनोक्ते विशेषमन्तराऽभिहिते हेतौ=साधने प्रतिषिद्धे= व्यभिचारादिदोषोद्भावनया प्रतिक्षिप्ते विशेषं=तद्दोषोद्दिधीर्षया तत्र विशेषमिच्छतः=अभिधातुमिच्छतो हेत्वन्तरं=हेत्वन्तरं नाम निग्रहस्थानं भवतीत्यर्थः ।

**यदा** ह्यविशेषाभिहितं हेतुं प्रतिवादी व्यभिचारादिदोषेण प्रतिषेधति, वादी च तद्दोषोद्दिधीर्षया तं विशिनष्टि, **किमुक्तं?** तद्दोषपरिजिहीर्षयाऽविशेषोक्ते तस्मिन् विशेषमुपादत्ते, **तदा** विशेषोपादानाद्धेत्वन्तरं प्रयुञ्जानस्यास्य **"हेत्वन्तर"** नामकं निग्रहस्थानं प्रसज्यते, **यथा** शब्दोऽनित्यः ऐन्द्रियकत्वादित्यत्राविशेषोक्ते हेतावैन्द्रियकत्वे सामान्येन व्यभिचारदोषोद्भावनया प्रतिषिद्धे "सामान्यवत्त्वे सति" इति विशेषणोपादानादिति भावः ॥ ६ ॥

अर्थान्तरं लक्षयति—

**"प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्"** ॥ ७ ॥

इच्छत इत्यनुवर्तते । प्रकृतात्=प्रक्रियमाणाद् विप्रतिपत्तिविषयाद्भ्युपगतादर्थादप्रतिसम्बद्धार्थम्=अन्यं तदसम्बद्धमर्थमिच्छतः=अभिधातुमिच्छतोऽर्थान्तरम्=अर्थान्तरं नाम निग्रहस्थानं भवतीत्यर्थः ।

**यदा** खलु वादी वा प्रतिवादी वा प्रयुक्तस्य हेतोर्व्यभिचारादिदोषेणासामर्थ्यं पश्यन् तत्प्रच्छादनार्थं प्रसक्तानुप्रसक्तया प्रकृतादर्थादन्यं तदसम्बद्धमर्थमभिदधाति, **किमुक्तं?** यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे सति हेतुतः साध्यसिद्धौ प्रकृतायां तदसङ्गतमर्थमुपन्यस्यति, **किंबहुना** प्रकृतार्थानाकांक्षितमर्थमभिवदति, तदाऽस्या**र्थान्तर**नामकं निग्रहस्थानं भवति, **यथा** नित्यः शब्दोऽस्पर्शत्वादित्यत्र सुखादिभिर्व्यभिचारेण हेतोः सामर्थ्यमपश्यतो हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदं, पदञ्च नामाख्यातोपसर्गनिपाता इति भेदाच्चतुर्विधं, तत्र सुबन्तं नाम, तिङन्तमाख्यातं, ये नामार्थादाख्यातार्थाद्वा भेदेन स्वार्थं नाभिदधति, ते निपाताः, उपसृज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादिकमभिधानमिति भावः ॥ ७ ॥

**निरर्थकं** लक्षयति—

**वर्णक्रमनिर्देशवन्निरर्थकम्**" ॥ ८ ॥

वर्णक्रमनिर्देशवत्=वतिप्रत्ययः, वर्णानां क्रमेण यो निर्देशः प्रयोगस्तत्तुल्यो निर्देशो निरर्थकं=निरर्थकं नाम निग्रहस्थानमित्यर्थः ।

यत्खल्वभिधेयरहितवर्णानुपूर्वीप्रयोगमात्रम्, अवाचकशब्दप्रयोग इति यावत् **यथा** नित्यः शब्दो जबगडदशत्वात्, झभञ्घढधषवदिति, तद् "**निरर्थकं**" निग्रहस्थानमिति भावः ॥

**तत्र** वादिनः प्रतिवादिनश्च समानमिदं निग्रहस्थानमिति विवेकः॥८॥

**अविज्ञातार्थं** लक्षयति—

**"परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्"** ॥ ९ ॥

त्रिरभिहितमपि=यदा वादिना त्रिवारमुक्तमपि परिषत्प्रतिवादिभ्यां=

मध्यस्थभूतया परिषदा प्रतिवादिना चाविज्ञातं=न विज्ञायते, तदाऽविज्ञातार्थम्=अविज्ञातार्थं नाम निग्रहस्थानं भवतीत्यर्थः ।

**यदा** हि वादिना साधनवाक्यं वा दूषणवाक्यं वा त्रिवारमभिहितमपि श्लिष्टशब्दमप्रतीतार्थमतिद्रुतोच्चारितमित्येवमादिना कारणेन परिषदा प्रतिवादिना च न विज्ञायते, **किमुक्तं** ? यदा वादिना श्लिष्टपदमप्रसिद्धार्थकं त्वरितोच्चारितमित्यादिरूपं परिषत्प्रतिवाद्यबोधप्रयोजकं वाक्यमुपन्यस्यते, **किंबहुना** यदा खलु पराज्ञानापादनेन मम जयो भविष्यतीति भ्रमाद् वादिना परिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यं प्रयुज्यते, **तदा तस्याविज्ञातार्थं** नाम निग्रहस्थानं भवतीति भावः ॥

**तत्र** परिषत्प्रतिवादिनोरेकतरस्य विज्ञाने तु नाविज्ञातार्थमिति सूचयितुं परिषत्प्रतिवादिभ्यामिति समस्तपदम् । यावद्भिर्वारैः परिषत्प्रतिवादिनोरर्थप्रत्ययो भवति स च प्रायेण त्रिभिरिति त्रिरभिहितमित्युक्तमिति विवेकः ॥ ९ ॥

**अपार्थकं** लक्षयति—

**"पौर्वापर्य्यायोगादप्रतिसम्बद्धार्थमपार्थकम्"** ॥ १० ॥

पौर्वापर्य्यायोगात्=यत्र पौर्वापर्य्येण पूर्वापरभावेनायोगात् सम्बन्धाभावादप्रतिसम्बद्धार्थं=परस्परानन्वितार्थकं पदजातं प्रयुज्यते, तत्रापार्थकम्=अपार्थकं नाम निग्रहस्थानं भवतीत्यर्थः ।

**यत्र** ह्यश्लिष्टस्य प्रतीतयोगस्याद्रुतोच्चारितस्य चानेकस्य पदस्य पौर्वापर्य्येणान्वयाभावादन्वितार्थो न गृह्यते, **किमुक्तं** ? यत्र पूर्वापरासङ्गतपदकदम्बकोच्चारणात्समुदायार्थो न लभ्यते, **किंबहुना**ऽभिमतवाक्यार्थबोधानुकूलाकांक्षादिशून्यबोधजनकं पदजातमुपन्यस्यते, यथा शब्दो घटः पटो नित्यमनित्यञ्च प्रमेयत्वादित्यादि, तत्रा**पार्थकं** नाम निग्रहस्थानं भवतीति भावः ॥

**तत्र** वाच्यार्थशून्यं **निरर्थकं**, समुदायार्थशून्यञ्चा**पार्थक**मिति विवेकः ॥ १० ॥

**अप्राप्तकालं** लक्षयति—

**"अवयवविपर्य्यासवचनमप्राप्तकालम्"** ॥ ११ ॥

अवयवविपर्य्यासवचनं=प्रतिज्ञादीनामवयवानां विपर्य्यासेन व्युत्क्रमेण वचनं कथनमप्राप्तकालम्=अप्राप्तकालं निग्रहस्थानं भवतीत्यर्थः ।

**यः** खल्वनुमानवाक्ये प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः=पूर्वं प्रतिज्ञा, तदनु हेतुः, पश्चादुदाहरणं, तदनन्तरमुपनयः, ततश्च निगमनमिति, **ततो** विपरीतक्रमेण यदा ते प्रयुज्यन्ते, **किमुक्तं** ? स्वप्रतिपत्त्यनुसारेण परप्रतिपत्तेरुत्पादनाद् यस्तावदार्थिकः क्रमः प्रतिज्ञादीनामवयवानामनुमानवाक्ये विनिश्चितः, तमुल्लङ्घ्य यदा ते शब्दत्वात् शब्दो नित्य इत्येवं विपरीतक्रमेणाभिधीयन्ते, तदाऽ**प्राप्तकाल**नामकं निग्रहस्थानं भवतीति भावः ॥

अवयवस्य कथैकदेशस्य विपर्य्यासो वैपरीत्यं, तेन वचनं समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानमप्राप्तकालम् । **तत्र** वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया इत्येकः पादः, प्रतिवादिनस्तत्रोपालम्भो द्वितीयः पादः, स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणञ्च तृतीयः पादः, ततो जयपराजयव्यवस्थानं चतुर्थः पाद इति कथाक्रमः इति **विश्वनाथः** ॥ ११ ॥

**न्यूनं** लक्षयति—

**"हीनमन्यतमेनाप्यवयवेन न्यूनम्"** ॥ १२ ॥

अन्यतमेनापि=अनुमानवाक्ये प्रयोक्तव्यत्वेन स्थितानामवयवानामेकेनाप्यवयवेन=केनचिदवयवेन हीनम्=ऊनं प्रयुञ्जानस्य न्यूनं=न्यूनं नाम निग्रहस्थानं भवतीत्यर्थः ।

**यावन्तोऽवयवाः** स्वस्वशास्त्रेऽनुमानवाक्ये प्रयोक्तव्यत्वेनाश्रीयन्ते, तेषामेकेनाप्यवयवेन हीनं चेत्प्रयुज्यते, **किमुक्तं** ? विवक्षितार्थसमर्पकादवयवसमुदायाच्चेत्किञ्चिदूनमभिधीयते, तदा **न्यून**नामकं निग्रहस्थानं भवतीति भावः ॥ १२ ॥

**अधिकं** लक्षयति—

**"हेतूदाहरणाधिकमधिकम्"** ॥ १३ ॥

हेतूदाहरणाधिकं=हेतुनोदाहरणेन चाधिकं प्रयुञ्जानस्याधिकम्=अधिकं नाम निग्रहस्थानं भवतीत्यर्थः ।

एकेनैव हेतुनोदाहरणेन वा सिद्धेऽर्थे चेद् हेत्वन्तरमुदाहरणान्तरं वा प्रयुज्यते, **किमुक्तम्?** अधिकहेत्वादिकञ्चेत्कथ्यते, **यथा** शब्दो नित्यः शब्दत्वाच्छ्रावणत्वाच्चेत्यादि, तदाऽस्या**धिक**नामकं निग्रहस्थानं भवतीति भावः ॥

**तत्र** यो हि "न मया हेतुरधिकोऽभिधेयो न वोदाहरणम्" इति नियमं तावदभ्युपगच्छति, स एवाधिकमभिदधानो निगृह्यते नान्य इति विवेकः १३

**पुनरुक्तं** लक्षयति—

**"शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्"** ॥ १४॥

अन्यत्रानुवादात्=अनुवादं वर्जयित्वा शब्दार्थयोः=शब्दस्य चार्थस्य च पुनर्वचनं=पुनरभिधानं पुनरुक्तं=पुनरुक्तं नाम निग्रहस्थानं वेदितव्यमित्यर्थः ।

**यत्र** ह्यनुवादं वर्जयित्वाऽभिहितं किञ्चिच्छब्दतो वाऽर्थतो वा पुनरभिधीयते, **किमुक्तम्?** अनुवादं विना कचिच्छब्देन क्वचिच्चार्थेन यत्र कथितं पुनः कथ्यते, **किंबहुना**—यत्र पूर्वोच्चारितः एव शब्दोऽनुवादं विना पुनरुच्चार्य्यते, अर्थश्च पूर्वमन्येन शब्देनोक्तः पुनः. पर्य्यायान्तरेणोच्यते, तत्र **पुनरुक्त**नामकं निग्रहस्थानं भवतीति भावः ॥

**तत्र** पुनरुक्तमिति लक्ष्यपदं, पुनर्वचनमिति लक्षणम् । शब्दपुनरुक्तम्, अर्थपुनरुक्तं चेति भेदात्पुनरुक्तं द्विविधमिति प्रदर्शनाय शब्दार्थयोरिति पदम् । अनुवादेऽतिव्याप्तिर्माभूदित्युक्तमन्यत्रानुवादादिति । शब्दोऽनित्यः शब्दोऽनित्य इति शब्दपुनरुक्तस्य, शब्दोऽनित्यः विनाशी ध्वान इति चार्थपुनरुक्तस्योदाहरणमिति विवेकः ॥ १४ ॥

अन्यमर्थपुनरुक्तं लक्षयति—

"अर्थादापन्नस्य स्वशब्देन पुनर्वचनम्" ॥ १५ ॥

पुनरुक्तमित्यनुवर्तते । अर्थात्=अर्थत आपन्नस्य=प्राप्तस्यार्थस्य स्वशब्देन=तदभिधायकः शब्दः स्वशब्दः, तेन पुनर्वचनं=यत्पुनरभिधानं तत्पुनरुक्तं नाम निग्रहस्थानमित्यर्थः ।

यस्तावदर्थोऽर्थादापद्यते यथाऽसत्सु मेघेषु वृष्टिर्न भवतीत्युक्ते "सत्सु भवति" इति, **यथा** वा पीनो देवदत्तो दिवा न भुङ्क्ते इत्युक्ते "नक्तं भुङ्क्ते" इति **यथा** वा वेदभिन्नः सर्वः शब्दोऽनीश्वरीय इत्युक्ते "वेद ईश्वरीयः" इति, तस्य तदभिधायकशब्देन पुनरभिधानं निष्प्रयोजनम् । सत्सु भवति, नक्तं भुङ्क्ते, वेद ईश्वरीय इत्यनभिधानेऽपि सिद्धत्वात् । चेत्प्रमादादितो नियममुल्लङ्घ्य वादिना वा प्रतिवादिना वा येन केनचित् सोऽयमर्थः पुनः स्वशब्देनाभिधीयते, तदा तस्यार्थ**पुनरुक्त**नामकं निग्रहस्थानं वेदितव्यमिति भावः ॥

**इदमत्रबोध्यम्** यद्यप्येकमेव पुनरुक्तं नाम निग्रहस्थानं, **तथापि** कथञ्चिदवान्तरभेदविवक्षया शब्दपुनरुक्तमेकविधम्, अर्थपुनरुक्तं द्विविधमिति प्रपञ्चार्थं त्रिविधमुक्तमिति । **शब्दपुनरुक्तं** द्विविधं=तस्यैव शब्दस्य पुनरभिधानं, पर्य्यायेण चाभिधानम् । अन्यत्पुनरर्थपुनरुक्तमिति नव्याः १५

**अननुभाषणं** लक्षयति—

"विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्" ॥ १६ ॥

परिषदा=मध्यस्थभूतया परिषदा विज्ञातस्य=विज्ञातार्थस्य त्रिरभिहितस्यापि=वादिना च त्रिवारमुक्तस्याप्यप्रत्युच्चारणं=यत्प्रत्युच्चारणमनुवादः, तद्भिन्नमननुवाद इति यावदननुभाषणम्=तदननुभाषणं नाम निग्रहस्थानमित्यर्थः ।

**यदा** हि परिषदा विज्ञातार्थं वादिना त्रिवारमुक्तमपि वाक्यं प्रतिवादिना न प्रत्युच्चारयितुं शक्यते, **किमुक्तं?** त्रिरभिधानेऽपि नानुभाषितुं पार्य्यते, **तदा** तस्या**ननुभाषण**नामकं निग्रहस्थानं भवतीति भावः॥

**इदमत्र बोध्यम्** यथा हि सर्वथाऽप्रत्युच्चारणेऽननुभाषणं नाम निग्रहस्थानं भवति, तथैकदेशेन प्रत्युच्चारणे विपर्य्ययेण प्रत्युच्चारणे सर्वनामपदेन प्रत्युच्चारणेऽपि वेदितव्यमिति ॥ १६ ॥

**अज्ञानं** लक्षयति—

**"अविज्ञानञ्चाज्ञानम्"** ॥ १७ ॥

"विज्ञातस्य परिषदा त्रिरभिहितस्यापि" इत्यनुवर्त्तते । पूर्वतो निग्रहस्थानान्तरमेतदिति सूचनाय चकारः । अविज्ञानं=परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि यदविज्ञानं तदज्ञानम्=अज्ञानं नाम निग्रहस्थानमित्यर्थः ।

**यदा** परिषदा विज्ञातं वादिना त्रिरभिहितमपि प्रतिवादी न जानीते, **किमुक्तं?** यदा परिषदा विज्ञायते प्रतिवादिना च त्रिवारमुक्तमपि न ज्ञायते, **तदा** तस्या**ज्ञान**नामकं निग्रहस्थानं भवतीति भावः ॥

क्वचिदविज्ञातमिति पाठः, **तत्र** भावे **निष्ठा**प्रत्ययः इति ध्येयम् ॥१७॥

**अप्रतिभां** लक्षयति—

**"उत्तरस्याप्रतिपत्तिरप्रतिभा"** ॥ १८ ॥

उत्तरस्य=परपक्षप्रतिषेध उत्तरं, तस्याप्रतिपत्तिः=अप्रतिभानमप्रतिभा= अप्रतिभा नाम निग्रहस्थानमित्यर्थः ।

**यदा** खलु परपक्षे गृहीतेऽपि प्रतिवादिनस्तस्मिन् किञ्चिदुत्तरं न प्रतिभाति, **किमुक्तं?** परोक्तमुत्तरार्हं बुद्ध्वाऽपि तत्र किञ्चिदुत्तरं न परिस्फुरति, **तदा** तूष्णीं स्थितस्य तस्या**प्रतिभा**नामकं निग्रहस्थानं भवतीति भावः ॥ १८ ॥

**विक्षेपं** लक्षयति—

**"कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेपः"** ॥ १९ ॥

कार्य्यव्यासङ्गात्=कस्यचित्कार्य्यविशेषस्य प्रसङ्गात्कथाविच्छेदः=योऽभ्युपगतायाः कथायाः विच्छेदः स विक्षेपः=विक्षेपो नाम निग्रहस्थानमित्यर्थः ।

**यदा** खलु वादी सम्प्रति मे किञ्चित् करणीयं विद्यते तस्मिन्नवसिते श्वः परश्वो वा कथयिष्यामीति कार्य्यविशेषं व्यासज्योपक्रान्तां कथां व्यवच्छिनत्ति, **किमुक्तं ?** साधनस्य दूषणस्य चोपन्यासमभ्युपगम्य तदवस्थः प्रतीयमान एव प्रतिवादिनो दार्ढ्यं परिषदो वा कठोरत्वमवलोक्याकस्मात्कार्य्यविशेषं प्रसङ्ग्याभ्युपगतां कथां विभिनत्ति **तदा** तस्य **विक्षेप**नामकं निग्रहस्थानं भवतीति भावः ॥ १९ ॥

**मतानुज्ञां** लक्षयति—

**"स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा"** ॥ २० ॥

स्वपक्षे=स्वाभ्युपगतपक्षे दोषाभ्युपगमात्=परेण चोदितस्य दोषस्य स्वीकारात् परपक्षे=पराभ्युपगतपक्षे दोषप्रसङ्गः=यत्तत्समानस्य दोषस्य प्रसञ्जनं तन्मतानुज्ञा=मतानुज्ञा नाम निग्रहस्थानमित्यर्थः ।

**यदा** खलु स्वपक्षे परेणापादितं दोषमभ्युपगम्यानुद्धृत्य परपक्षे तत्समानं दोषं प्रसञ्जयति, **किमुक्तं ?** यो दोषः परेणोद्भावितस्तं स्वपक्षेऽभ्यनुज्ञाय "भवत्पक्षेऽपि समानो दोषः" इति परपक्षे तत्समानं दोषमुद्भावयति, **यथे**श्वरः शरीरी कर्तृत्वात् कुलालवदित्यत्र हेतोर्व्याप्यत्वासिद्धिदोषोद्भावने वदति भवत्पक्षेऽपि कर्तृत्वानुपपत्तिलक्षणो दोषः समानः अशरीरस्य कर्तृत्वादर्शनादिति, **यथा** वा चौरो भवान् पुरुषत्वात् प्रसिद्धचौरवदित्युक्ते सत्याह भवानपि चौरः पुरुषत्वादिति, तदाऽस्य **मतानुज्ञा**नामकं निग्रहस्थानं भवतीति भावः ॥ २० ॥

**पर्य्यनुयोज्योपेक्षणं** लक्षयति—

**"निग्रहस्थानप्राप्तस्यानिग्रहः पर्य्यनुयोज्योपेक्षणम्"** ॥२१॥

निग्रहस्थानप्राप्तस्य=निग्रहस्थानं प्राप्तस्यानिग्रहः=यन्निग्रहस्थानानुद्भावनं तत्पर्य्यनुयोज्योपेक्षणं=पर्य्यनुयोज्योपेक्षणं नाम निग्रहस्थानमित्यर्थः ।

**यः** खलु निग्रहस्थानं प्राप्तं "निग्रहस्थानं प्राप्तोऽसि" इति नानुयुङ्क्ते, **किमुक्तं ?** निग्रहस्य प्रमाणतः सिद्ध्या चोदनीयम् "इदन्ते निग्रह-

स्थानमुपनतम्" इति वचनीयं पर्य्यनुयोज्यमिति यावदुपेक्षते निगृहीतोऽसीत्यनुयोगं न कुरुते, **किं बहुना** निग्रहस्थानोद्भावनार्हस्य परस्य निग्रहस्थानं नोद्भावयते **तदा** तस्य **पर्य्यनुयोज्योपेक्षण**नामकं निग्रहस्थानं भवतीति भावः ॥

**तत्र** सम्यक् साधनोपन्यासे वादिना कृते प्रतिवादिन उत्तराप्रतिपत्तिः **रप्रतिभा,** साधनाभासोपन्यासे चोत्तराप्रतिपत्तिः **पर्य्यनुयोज्योपेक्षणम्** । इदञ्च कस्येति परिषदोद्भावनीयं न वादिना । स्वसाधनगतदूषणस्य स्वेनोद्भावनानुपपत्तेः । नापि प्रतिवादिना । स्वेनैव स्वनिग्रहायोगात् । यत्र त्वनेकनिग्रहस्थानप्राप्तावेकतरोद्भावनं तत्र न पर्य्यनुयोज्योपेक्षणमिति विवेकः ॥ २१ ॥

**निरनुयोज्यानुयोगं** लक्षयति—

**"अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः"** ॥ २२ ॥

अनिग्रहस्थाने=निग्रहस्थानमप्राप्ते निग्रहस्थानाभियोगः=निगृहीतोऽसीति निग्रहस्थानस्याभियोगो यः स निरनुयोज्यानुयोगः=निरनुयोज्यानुयोगो नाम निग्रहस्थानमित्यर्थः ।

**यः** खलु निग्रहस्थानमप्राप्तं "निग्रहस्थानं प्राप्तोऽसि" इत्यभियुङ्क्ते, **किमुक्तं?** इदन्ते निग्रहस्थानमुपनतमतो निगृहीतोऽसीत्येवमनुयोगायोग्यमनुयुङ्क्ते, **किं बहुना** सर्वथा प्रमादरहितमनुज्झितयथोचितक्रममुपपन्नवादिनं निग्रहानर्हमपि निगृहीतोऽसीति प्रब्रुवते, निग्रहस्थानरहिते निग्रहस्थानमुद्भावयत इति यावत्, तस्य **निरनुयोज्यानुयोग**नामकं निग्रहस्थानं भवतीति भावः ॥ २२ ॥

**अपसिद्धान्तं** लक्षयति—

**"सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः"** ॥ २३ ॥

सिद्धान्तं=यं कञ्चनैकं सिद्धान्तमभ्युपेत्य=अभ्युपगम्यानियमात्=तद्-

विपर्य्ययलक्षणादनियमात् कथाप्रसङ्गः=यः कथाप्रसङ्गः सोऽपसिद्धान्तः= अपसिद्धान्तो नाम निग्रहस्थानमित्यर्थः ।

**यः** खलु पौराणिकसिद्धान्तेन मया कथायां वक्तव्यमिति प्रतिज्ञाय प्रतिज्ञातार्थविपर्य्ययादनियमात्कथां प्रसञ्जयति, **किमुक्तं?** एकं सिद्धान्तमभ्युपेत्य कथाप्रवृत्तौ रभसाद्वा परोद्भावितदोषोद्धरणाशक्त्या वा तद्विरुद्धसिद्धान्तमवलम्ब्योत्तरयति तस्या**पसिद्धान्त**नामकं निग्रहस्थानं भवतीति भावः ॥ २३ ॥

अथ क्रमप्राप्तं **हेत्वाभासं** लिलक्षयिषुराह—

**"हेत्वाभासाश्च यथोक्ताः"** ॥ २४ ॥

चस्त्वर्थो लक्षणान्तरं व्यवच्छिनत्ति । हेत्वाभासाः=सव्यभिचारादयो हेत्वाभासाः यथा=येन प्रकारेणोक्ताः=पूर्वं लक्षितास्तथैव निग्रहस्थानपदवाच्याः वेदितव्या इत्यर्थः ।

यत्तावद्धेत्वाभासानां लक्षणं पूर्वमभ्यधायि, तेनैव ते निग्रहस्थानभावमापद्यन्ते, न लक्षणान्तरयोगाद् **यथा** प्रमाणानि प्रमेयभावम् । अतस्तेनैव तेषां तद्भावोऽवगन्तव्य इति भावः ॥ २४ ॥

**निग्रहस्थानभेदास्तु सर्वे द्वाविंशतिर्मताः ।**
**ते सम्यग् लक्षणोपेताः द्वितीयेऽस्मिन् परीक्षिताः ॥१॥**
**गोतमेन प्रणीतेयं वैदिकी तर्कप्रपा ।**
**मया हरिप्रसादेन वृत्त्या सम्यक् परिष्कृता ॥ २ ॥**
**यत्प्रसादादियं वृत्तिर्नित्यं स्थास्यति निश्चला ।**
**प्रह्वीभावेन वन्द्योऽसौ विद्यादातेश्वरः सदा ॥ ३ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां न्यायसूत्रवैदिकवृत्तौ पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥

**समाप्तश्चायं जातिनिग्रहस्थानपरीक्षाध्यायः पञ्चमः ।**

॥ इति न्यायदर्शनम् ॥

# शुद्धिपत्रम्.



| पृष्ठं | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १ | ६ | तर्कसहाय्यकामानां | तर्कसाहाय्यकामानां |
| ८ | ३ | हानोपादानोपेक्षा बुद्धय | हानोपादानोपेक्षाबुद्धय |
| १९ | २ | शरिरम् | शरीरम् |
| १९ | १९ | चेष्टते | चेष्टे |
| २० | २२ | अर्प्यमाणत्वात् | अर्ग्यमाणत्वात् |
| २५ | १३ | शुद्ध | शुद्धा |
| ३१ | १९ | यावदधिकरम् | यावदधिकारम् |
| ४५ | १० | केवलपक्षमात्रे | पक्षमात्रे |
| ५७ | ५ | साध्यधर्मस्य प्रति-पेधासमर्थौ | साध्यधर्मस्य प्रतिपेधाय प्रतिपेधासमर्थौ |
| ७० | १६ | तथात्मनसोः | तथात्ममनसोः |
| ९२ | ५ | प्रत्यापयति | प्रत्याययति, एवमग्रेऽपि |
| १३४ | ६ | वक्ष्यमाणत्वात् | करिष्यमाणत्वात् |
| १४४ | २२ | "शास्त्रान्तरे चत्वारि | शास्त्रान्तरे "चत्वारि |
| १७३ | ७ | हसिति | हसति |
| १५६ | १८ | अभिभूतिनिमित्तेति | अनुद्भूतिनिमित्तेति |
| २०० | १९ | "नोष्णाशीतवर्ष. | "नोष्णशीतवर्ष |

